TRIVANDRUM SANSKRIT SERIES.

NO. XXXII.

THE

# KUMÂRASAMBHAVA

OF

# KÂLIDÂSA

With the two commentaries, PRAKASIKA of

ARUNAGIRINÂTHA

and VIVARANA of

NÂRÂYANAPANDITA

EDITED BY

**T. GANAPATI SASTRI**

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

**Part II.—3, 4, & 5 Sargas.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ३२.

# कुमारसम्भवः

महाकविश्रीकालिदासप्रणीतः ।

श्रीमदरुणगिरिनाथविरचितया कुमारसम्भवप्रकाशिकया

नारायणपण्डितविरचितेन कुमारसम्भवविवरणेन च

समेतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

द्वितीयः सम्पुटः — ३, ४, ५ सर्गाः ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

कोळम्बाब्दः १०८९, क्रैस्ताब्दः १९१३

॥ श्रीः ॥

महाकविश्रीकालिदासप्रणीतः

# कुमारसम्भवः

श्रीमदरुणगिरिनाथविरचितया कुमारसम्भवप्रकाशिकया

श्रीनारायणविरचितेन कुमारसम्भवविवरणेन च

समेतः ।

## अथ तृतीयः सर्गः ।

तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेऽपि ॥ १ ॥

(प्रकाशिका)

अथोपक्षिप्तमुपायानुष्ठानं प्रपञ्चयति—

तस्मिन्निति । तस्मिन् कामे । त्रिदशान् मन्त्राय समासीनान् । सहस्रमित्यादिना तस्यात्रादरातिशयद्योतनात् स्वगौरवत्यागो दर्शितः । तदुपपादयति—प्रयोजनापेक्षितयेति । चलं गत्वरम् । गौरवं सावष्टम्भा-

१. 'तेषु' मुद्रितकोशपाठः. २. 'तत्रा' ख. पाठः. ३. 'नेति' ङ. पाठः.

वस्थानादि। आश्रितेऽपि परिजनविषयेऽपि। कर्तरि निष्ठा। अयमर्थः— यदा प्रभवः परिजनात् कार्यमपेक्षन्ते, तदा स्वगौरवमपि विहाय परिजनमपि संभावयन्तीति[1]। त्रिदशान् विहायेत्युक्त्या त्रिदशगतं गौरवमेकौघभूतं कामगतमिति दर्शितम्। न चायं दोषः, 'अर्थाधिकारी धीरोद्धत' इति भोजोक्तेः। चलश्च कार्यापेक्षया धीरोद्धतः। अत एव प्रायश्शब्दः॥ १॥

(विवरणम्)

अथोपक्षिप्तं पार्वतीपरमेश्वरसङ्गमोपायानुष्ठानं तदनुबद्धं कामदहनं च तृतीयेनानेन सर्गेण वर्ण्यते। तत्र कामदेवा[2]गमनानन्तरं मघोनस्तद्विषयां प्रति[3]पत्तिं दर्शयति—

तस्मिन्निति। मघोनः अक्ष्णां सहस्रं त्रिदशान् विहाय तस्मिन् युगपत् पपात। मघोनः इन्द्रस्य। 'इन्द्रो मरुत्वान् मघवे'त्यमरः। अक्ष्णां नयनानां सहस्रं त्रिदशान् देवान् विहाय परित्यज्य तस्मिन् कामदेवे युगपत् सहै[4]व पपात पतितमासीत्। तत्र सहस्रयुगपच्छब्दाभ्यां मघोनस्त्वरातिशयो द्योत्यते। तेन च कामदेवेऽस्यादरातिशयः। त्रिदशान् विहायेति तेष्वनादर उक्तः। पूर्वं मन्त्राय समासीनानखिलानमराननादृत्याक्षिसहस्रेण सहस्राक्षस्तत्कालसमागतं कामदेवमेव सबहुमानमवलोकितवानित्यर्थः। ननु मन्त्राय पूर्वमारोपितगौरवेषु देवेषु कथं कामदेवागमनानन्तरमेव तस्यानादरः, कथं वा तत्कालसमागतकामदेवे चादरः, अत आह— प्रभूणाम् आश्रितेषु गौरवं प्रयोजनापेक्षितया प्रायः चलमिति। प्रभूणां राज्ञाम् आश्रितेषु सेवकेषु। कर्तरि निष्ठा। इयं तु विषयसप्तमी। प्रभूणामाश्रितजने विषये यद् गौरवमादरः, तत् प्रयोजनापेक्षितया प्रयोजनमपेक्षितुं शीलमेषामिति प्रयोजनापेक्षिणः, तेषां भावस्तत्ता, तया हेतुभूतया। प्रायः

१. 'ति। 'आश्रितेष्विति पाठे त्रि' ङ. पाठः. २. 'व' क. पाठः. ३. 'वृत्तिं' क. पाठः. ४. 'हसैव' क. ख. ग. पाठः.

प्रायेण चलं चञ्चलं भवति। यस्मात् प्रभवः प्रयोजनापेक्षिणः, तस्मादाश्रितविषयस्तेषामादरः प्रायेण तत्तदर्थसाधकेषु जनेषु चञ्चलो भवतीत्यर्थः। धीरोद्धतानामयं स्वभावः। यदाह भोजः—'अर्थाधिकारी धीरोद्धत' इति। धीरोद्धतानामर्थाधिकारित्वात् तेषामाद(रस्य ? रः) स्वगौरवमपहायापि परिजनमपि सम्भावयतीत्यर्थः। अत्रार्थान्तरन्यासः। कार्यापेक्षितयैव चलत्वमिति प्रायश्शब्दः प्रयुक्तः। महेन्द्रस्य धीरोद्धतत्वं प्रतिनायकत्वकृतम्। आश्रितेऽपीति पाठे प्रभवः (?) ॥ १ ॥

स वासवेनासनसन्निकृष्ट-
मितो निषीदेति निसृष्टभूमिः।
भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना
वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २ ॥

(प्रकाशिका)

स इति। वासवेनेति तत्कृतस्य संभावनस्य दुर्लभतां द्योतयति। आसनसन्निकृष्टं सन्निकृष्टासनम्। आहिताग्न्यादिषु पाठात् साधुत्वम्। षष्ठीसमासस्तु न भवति, 'न लोका—'(२. ३. ६९) इति षष्ठीप्रतिषेधात्। इदं तु निसर्गक्रियाविशेषणं मिथोवचनाङ्गम्। निसृष्टभूमिर्दत्तावस्थानभूमिष्ठ इत्यर्थः। प्रसादं माननम्। मूर्ध्ना, साञ्जलिना नम्रेणेत्यर्थाल्लभ्यते। मिथो रहसि। एवमिति वक्ष्यमाणस्याप्युपसंहारः ॥ २ ॥

(विवरणम्)

अथ वाचिकसम्भावनाप्रदर्शनपुरस्सरं मन्मथस्य वचनावसरं दर्शयति—

स इति। वासवेन इतः निषीदेति आसनसन्निकृष्टं निसृष्टभूमिः सः

१. 'न्ती' ख. पाठः. २. 'चञ्चल' घ. ङ. पाठः. ३. 'वि' मुद्रितकोशपाठः. ४. 'त्कर्तृकस्य' ख. ग. घ. पाठः. ५. 'म्रिषु' ङ. पाठः. ६. 'च' ख. पाठः. ७. 'नाम' ख. ग. घ. पाठः.

भर्तुः प्रसादं मूर्ध्ना प्रतिनन्द्य मिथः एनमेवं वक्तुं प्राक्रमत। वासवेन देवेन्द्रेण। अनेन तत्कृतस्य सम्भावनस्यात्यन्तदुर्लभत्वं द्योत्यते। इतः अस्मिन् प्रदेशे। सप्तम्यर्थे तसिः। निषीद स्थितिं कुरु। आसनसन्निकृष्टमिति निसर्गक्रिया-विशेषणम्। आसनसन्निकृष्टं सन्निकृष्टासनम्। आहिताग्न्यादिषु पाठात् साधुत्वम्। सन्निकृष्टमासनं यथा भवति तथा निसृष्टभूमिरित्यर्थः। न पुनरत्रासनस्य सन्निकृष्टमिति समासः। 'न लोक'(२.३.६९)इत्यादिना षष्ठीप्रतिषेधात्। निसृष्टा दत्ता भूमिरवस्थानप्रदेशो यस्मै स तथा। पूर्वं कामदेवाधिष्ठितात् प्रदेशादारभ्यात्मसिंहासनपर्यन्तं स्वहस्तेनैवाहूय तत्र दत्तावस्थानप्रदेश इत्यर्थः। तत्रावस्थायेत्यर्थात् सिध्यति। एतच्च मिथोवचनाङ्गम्। सः कामदेवः भर्तुः स्वामिनः प्रसादं सगौरवावलोकनादिरूपं संमानं मूर्ध्ना, साञ्जलिना नम्रेण शिरसेत्यर्थः। प्रतिनन्द्य प्रसादमभिनन्द्य। मिथः रहसि। अनेन मन्त्रगुप्तिर्दर्शिता। एनं भर्तारम्। एवमिति वक्ष्यमाणप्रकार-सङ्क्षेपः। वक्तुं प्राक्रमत उपक्रान्तवान् ॥ २॥

आज्ञापय ज्ञातविशेष! पुंसां
लोकेषु यत् ते करणीयमस्ति।
अनुग्रहं संस्मरणप्रवृत्त-
मिच्छामि संवर्धितमाज्ञया ते ॥ ३॥

(प्रकाशिका)

आज्ञापयेति। मद्विशेषमधिगम्य मामस्मर इत्यामन्त्रणपदेन द्योत्यते। यत् करणीयं तदाज्ञापयेत्यर्थः। प्रथममेवाज्ञापयेति किमुक्तमित्याह—अनुग्रहमिति। संवर्धितमिति पाठः। मयि संस्मरणेनाङ्कुरितं तवानुग्रहमाज्ञया संवर्ध्यमानमिच्छामीत्यर्थः ॥ ३॥

१. 'निषे' ङ. पाठः.

(विवरणम्)

एवंशब्दोक्तमेव प्रपञ्चयत्याज्ञापयेत्यादिभिरष्टभिः श्लोकैः—

आज्ञापयेति । पुंसां ज्ञातविशेष! त्वमाज्ञापय । पुंसां पुरुषाणां ज्ञातो विशेषः सामर्थ्यभेदो येन, ज्ञातसकलपुरुषसामर्थ्यभेदेत्यर्थः । अनेनामन्त्रणेन मत्सामर्थ्यविशेषमवधार्य खलु भवताहं स्मृतः । तस्मान्मदुचिते कार्ये मामाज्ञापयेति ध्वन्यते । 'यो यस्मिन् कर्मणि कुशलः तं तस्मिन्नेव योजयेद्' इति न्यायादिति भावः । आज्ञापनस्य विषयमपि सङ्क्षिप्य दर्शयति — ते लोकेषु यत् करणीयमस्तीति । ते (तव) लोकेषु लोकत्रये । अत्र बहुवचनेन सर्वलोकगतार्थसाधनसमर्थत्वमात्मनः समर्थितम् । करणीयं कर्तव्यम् । मयेति शेषः । लोकत्रये तव मया यत्कर्तव्यमस्ति, तदाज्ञापयेति पूर्वेणान्वयः । आज्ञापनमात्रस्यैवात्र कालविलम्ब इति भावः । ननु किमर्थमादावेवाज्ञापयेत्युक्तम्, अत आह — अहं संस्मरणप्रवृत्तं तेऽनुग्रहमाज्ञया संवर्धितमिच्छामीति । संस्मरणप्रवृत्तं संस्मरणेन सम्यक् स्मरणेन । अत्र स्मरणस्य सम्यक्त्वं नाम सरभसागमनप्रयोजकत्वम् । प्रवृत्तमङ्कुरितम् । ते त्रैलोक्यनाथस्य तव । अनुग्रहम् । अनेनानुग्रहस्यात्यन्तदुर्लभत्वमुक्तम् । संवर्धितं[1] सम्यग्वर्धितम् । वर्तमाने क्तः । वर्ध्यमानं सन्तमिच्छामि । सर्वलोकाधिपतेस्तव योऽनुग्रहः संस्मरणेन मय्यङ्कुरितोऽभूत्, तमहमाज्ञया वर्ध्यमानमिच्छामीत्यर्थः[3] ॥ ३ ॥

केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥

१. 'र्ध्यमानम् ।' ङ. पाठः. २. 'र्ध' क. ख. ग. घ. पाठः. ३. 'र्ध' क. ख. ग. घ. पाठः.

(प्रकाशिका)

धीरोद्धतत्वाद् दुस्साधेष्वर्थेषु स्वशक्तिं प्रकाशयंस्तानेवार्थानेकैकं पृच्छति षड्भिः श्लोकैः—

केनेति। पदकाङ्क्षिणा इन्द्रपदं प्रार्थयता। यावद् भवति भविष्यतीत्यर्थः। असौ भवतीति पाठे वर्तमानसामीप्ये लट् ॥ ४ ॥

(विवरणम्)

अत्र प्रतिनायको मारो धीरोद्धतत्वादत्यन्तदुस्साधेष्वप्यर्थेषु स्वशक्तिं प्रकाशयंस्तानेवार्थान् पृच्छति षड्भिः श्लोकैः। तत्र तदिच्छानुसारेण हि प्रश्नः कर्तव्यः। इच्छा च द्विविधा अनिष्टपरिहाररूपा इष्टप्राप्तिरूपा च। तत्रानिष्टपरिहारस्यैव प्राधान्यं 'कृतकृत्यस्य कामेऽधिकार' इति वचनादिति आदावनिष्टपरिहारविषयः प्रश्नः क्रियते। तत्रानिष्टपरिहारोऽपि द्विविधः सर्वस्वनाशपरिहारस्तदे(के?कदेश)नाशपरिहारश्च। तत्र सर्वस्वनाशस्यैव हि प्राधान्यमिति आदौ तद्विषयं प्रश्नमवतारयति—

केनेति। केन ते पदकाङ्क्षिणा नितान्तदीर्घैः तपोभिः अभ्यसूया जनिता। अत्र केनेति सर्वनाम्ना निजशक्तेः सार्वत्रिकत्वं द्योत्यते। ते तव पदकाङ्क्षिणा पदं स्थानं काङ्क्षितुं शीलमस्येति तथा। इन्द्रपदं प्रार्थयतेत्यर्थः। नितान्तदीर्घैः अत्यन्तदीर्घैः, बहुकालकृतैरित्यर्थः। अनेन तपसः पदाहरणसामर्थ्यं दर्शितम्। अभ्यसूया असूया जनिता उत्पादिता। त्रैलोक्ये कः पुमान् बहुकालकृतैस्तपोभिस्त्वां दूरतो निराकृत्य स्वयमेवामरावतीमधिष्ठाय माहेन्द्रं पदमहमेवानुभवामीति कृतोद्योगस्तवासूयां जनयतीत्यर्थः। त्वरितं वदेति शेषः। ननूक्त्वा किं फलमित्यत्राह— सः अस्य मत्कार्मुकस्य निदेशवर्ती यावद्भवतीति। कर्तृपदमत्राध्याहार्यम्। अस्य मत्पाणाविदानीं विद्यमानस्य। अनेनायुधादानहेतुकः कालविलम्बो निरस्तः। मत्कार्मुकस्य अनेन स्वातन्त्र्यमायुधस्योक्तम्। निदेशवर्ती निदेशे आज्ञायां वर्तितुं शीलमस्येति तथा। ताच्छील्ये णिनिः।

१. 'व सम्पदा' क. ख. ग. पाठः.

अनेनासौ पुनः कदाचिदपि तपश्चरितुं न यतिष्यत इत्यर्थो द्योत्यते । यावद्भवति, 'यावत्पुरानिपातयोर्लट्'(३. ३. ४) इति भविष्यदर्थे लट् । स मत्कार्मुकाज्ञाकर एव भविष्यतीत्यर्थः । आहितसायकस्य आहितः कृतसन्धानः सायकः शरो यस्मिन् । अनेन विशेषणेन कार्मुकस्य शरसन्धानव्यतिरिक्तकारणान्तरनिरपेक्षत्वं ध्वनितम् ॥ ४ ॥

**असम्मतः कस्तव मुक्तिमार्गं**
**पुनर्भवक्लेशभयात् प्रपन्नः ।**
**बद्धश्चिरं तिष्ठतु सुन्दरीणा-**
**मारेचितभ्रूचतुरैर्विलासैः ॥ ५ ॥**

(प्रकाशिका)

पुरुषार्थेषु मोक्षमधिकृत्याह

**असम्मत** इति । प्रभुणा लोकतन्त्रेऽधिकृतस्य कस्यचिन्मुमुक्षुत्वं प्रभोरसम्मतमिति भावः । तर्हि स कुतस्तत् प्रतिपद्यत इत्याह—पुनर्भवक्लेशभयादिति । सर्वो हि स्वार्थे वर्तते । आरेचनम् एकस्या भ्रुवो ललितमीषदुत्क्षेपणम् । 'रेचितं पुनरेकस्या ललितोत्क्षेपणं भ्रुव' इत्याहुः । एतदेकं वाक्यम् । वाक्यभेदे तु स इत्युत्तरार्धेऽध्याहार्यः ॥ ५ ॥

(विवरणम्)

अथ पुरुषार्थचतुष्टये धर्मस्यैव प्राधान्यात् तद्विषयः प्रश्नः क्रियते । स तु स्वराज्यैकदेशनाशपरिहारविषयश्चेति मन्वानः पृच्छति—

**असम्मत** इति । तव असम्मतः पुनर्भवक्लेशभयाद् मुक्तिमार्गं प्रपन्नः कः सुन्दरीणाम् आरेचितभ्रूचतुरैः विलासैः बद्धः चिरं तिष्ठतु । तव असम्मतः

१. 'रैः कटाक्षैः' मुद्रितकोशपाठः. २. 'तमुत्क्षे' ख. पाठः. ३. 'णाद् भ्रु' ख. पाठः. ४. 'ह ।' क. पाठः.

त्रैलोक्यरक्षाधिकृतस्य तवानिष्टः। तव सम्मतिं विनैव मुक्तिमार्गं प्रपन्न इत्यर्थः नहि प्रभुणा लोकतन्त्रे नियुक्तस्य पुरुषस्य मुमुक्षुत्वं प्रभोः सम्मतं भवति तस्य मुमुक्षुत्वे तत्पदस्य रक्षाशैथिल्येन विनाशप्रसङ्गादित्यर्थः। मुक्तिमार्ग प्राप्तौ हेतुमाह—पुनर्भवक्लेशभयादिति। पुनर्भवेन जननमरणेन यः क्लेश पीडा तद्भयात्। स्वार्थमात्रपरो हि लोकः। अतः परा(र्थानां?र्था) लोकरक्षा मुपेक्ष्य निजक्लेशहारिणीं मुक्तिपदवीमेव प्रपन्न इति भावः। मुक्तिमार्गं मोक्ष-मार्गम् इहामुत्रभोगविरमादिरूपां पदवीं प्रपन्नः प्राप्तः कः पुमान् सुन्द-रीणां सर्वावयवसुन्दरीणां स्त्रीणाम् आरेचिताभिः ईषद्रेचितयुक्ताभिः। रेचितमेकस्या भ्रुवो ललितोत्क्षेपणम्। यथोक्तं सङ्गीतशास्त्रे—'रेचितं पुनरे-कस्या ललितोत्क्षेपणं भ्रुव' इति। तादृशीभिर्भ्रूभिः चतुरैः सुन्दरैः। अत्र रेचितशब्देनैव भ्रूशब्दार्थे सिद्धेऽपि पुनर्वचनं करिकलभन्यायादिति मन्त-व्यम्। अथवा आरेचिताभिः नर्तिताभिः। 'आरेचितं नर्तितं स्यादि'ति भोजः। अयं तु पक्षो माधवोक्तः। विलासैः कटाक्षविक्षेपादिरूपैः बद्धः वशीकृतः चिरं चिरकालं तिष्ठतु त्वत्प्रसादपर्यन्तं स्त्रीजनपराधीन एव स्थितिं करोत्विति भावः। इत्थमेकवाक्यतापक्षे योजना। वाक्यभेदे पुनरुत्तरार्धे स इति कर्तृपदमध्याहृत्य पूर्वश्लोकवद् योजनीयम्॥ ५॥

अध्यापितस्योशनसापि नीतिं
प्रयुक्तरागप्रणिधिर्द्विषस्ते।
कस्यार्थधर्मौ वद पीडयामि
सिन्धोस्तटावोघ इव प्रवृद्धः॥ ६॥

(प्रकाशिका)

धर्मार्थावधिकृत्याह

१. 'मि' मुद्रितकोशपाठः.

**अध्यापितस्येति। उशनसापीति। 'न कश्चिन्नापनयते पुमानन्यत्र भार्गवादि'ति दर्शनात्। अध्यापितस्यापीत्यन्वयेऽपि अप्यर्थ उशनसि विश्राम्यति, विशेषणे तात्पर्यात्। नीतिमिति, नीतेर्धर्मार्थयोरुभयोरपि पालने साधनत्वात्। प्रयुक्तो रागो विषयाभिषङ्ग एव चारो यस्य। अस्मन्नीतिरौशनसीमपि नीतिं जेतुं क्षमेति भावः। एकेनोभयोरपि पीड्यत्वमुपमयोपपादयति—सिन्धोरिति ॥ ६ ॥**

(विवरणम्)

अथ धर्मार्थावधिकृत्य प्रश्नः क्रियते। स नु भविष्यदापत्परिहारविषयश्चेति तृतीयं प्रश्नमवतारयति—

अध्यापितस्येति। अहं ते द्विषः कस्य अर्थधर्मौ पीडयानि वद। ते द्विषस्तव शत्रुभूतस्य कस्य अर्थधर्मौ अर्थं च धर्मं च पीडयानि विनाशयेयम्। प्रश्ने लोट्। वद निर्दिश। अत्र कस्यार्थधर्मौ पीडयानीति प्रश्नेनैव वदेत्येतस्य गतार्थत्वेनानुपयोगात् तव वचनविलम्ब एवात्र विलम्ब इत्येतस्मिन्नर्थे शब्दोऽयं सङ्क्रमितः। औद्धत्यपरिहारो व्यङ्ग्य इत्यर्थान्तरसङ्क्रमितवाच्यध्वनिः। न मे प्रभावो नीतिशास्त्रविदिषु विहन्यत इत्याह— उशनसा नीतिम् अध्यापितस्यापीति। उशनसा भार्गवेण। 'उशना भार्गवः कवि'रित्यमरः। नीतिं नीतिशास्त्रम् अध्यापितस्य अध्ययनं कारितस्यापि। उशनसा स्वयमेव शिक्षितनीतिशास्त्रस्यापीत्यर्थः। उशनस एव नीतिशास्त्रप्रावीण्यमिति प्रसिद्धं 'न कश्चिन्नापनयते पुमानन्यत्र भार्गवात्,' 'भार्गवेण समो नये' इत्यादिषु। अर्थपालन इव धर्मपालनेऽपि नीतेरेव साधनत्वप्रसिद्धेरेवमुक्तम्। मम नीतिरौशनसीमपि नीतिं जेतुं क्षमेति भावः। आत्मनो नीतिविदां धर्मार्थविश्लेषे साधनसम्पत्तिं दर्शयति—प्रयुक्तरागप्रणिधिरिति।

१. 'च' ख. ग. घ. ङ. पाठः.

प्रयुक्तः प्रेरितो रागो विषयाभिलाष एव प्रणिधिश्चरो येन स तथा। अतिप्रवृद्धो हि विषयाभिलाषः सर्वानपि पुरुषार्थान् विघटयितुं क्षम इति भावः। परनीतिविश्लेषणस्य प्रणिधिसाध्यत्वाद् रागोऽत्र प्रणिधित्वेन रूपितः। 'प्रणिधिरपसर्पश्चरः स्पश' इत्यमरः। ननु कथमेकस्यैवोभयविश्लेषणसामर्थ्यं युगपदेव सम्भवतीतीमामाशङ्कामुपमया परिहरति—प्रवृद्ध ओघः सिन्धोस्तटाविवेति। प्रवृद्धः प्रावृषि महतीं वृद्धिं प्राप्तः ओघः नदीवेगः। 'ओघो वृन्देऽम्भसां रये' इति सिंहः। सिन्धोः नद्याः तटौ तीरप्रदेशाविव। यथा प्रवृद्धो जलप्रवाहः सिन्धोस्तटद्वयं विघटयति, तथाहं कस्यार्थधर्मौ विघटयेयमिति त्वरितमेव वदेत्यर्थः। त्रैलोक्ये कः पुरुषो धर्मार्थाभ्यामुपायाभ्यां त्वां जेतुमुद्योगं करोति, अहं तस्यार्थधर्मयोः काम एवोपयोगं विधास्यामीति भावः ॥ ६ ॥

**कामेकपत्नीव्रतदुःखशीलां**
**लोलं मनश्चारुतया प्रविष्टाम्।**
**नितम्बिनीमिच्छसि मुक्तलज्जां**
**कण्ठे स्वयंग्राहविषक्तबाहुम् ॥ ७ ॥**

(प्रकाशिका)

अथ कामस्य शृङ्गारात्मकस्य सम्भोगविप्रलम्भद्वैविध्ये सति सम्भोगस्यासतो लब्धलाभात्मकत्वाभावात् तं विहाय तदात्मकं विप्रलम्भं प्रागसङ्गतवियुक्तविषयत्वेन द्विविधं सामान्येन मन्वानस्तत्राद्यमधिकृत्याह—

**कामिति।** एकपत्नी पतिव्रता, तस्या व्रतं परपुरुषादर्शनादि, तेन दुःखशीलां दुरुपक्रमस्वभावाम्। लोलं मनः, मनसः स्वभावलोल-

१. 'यं त्व' ङ. पाठः. २. 'नि' मुद्रितकोशपाठः. ३. 'क' ङ. पाठः. ४. 'म्भप्रसङ्गात' ङ. पाठः. ५. 'पुरुषान्तराद' ङ. पाठः.

त्वादित्यर्थः । चारुतया रूपसम्पदा । मुक्तलज्जामित्यष्टमीं कामावस्थां दर्शयति । तत एव स्वयङ्ग्राहलक्षणा चपलता ॥ ७ ॥

(विवरणम्)

अनन्तरमिष्टप्राप्तिरूपः प्रश्नः क्रियते । स त्वत्र कामविषयः । इतरेषां कामदेवानधीनत्वात् । तत्र शृङ्गारात्मको हि कामः । शृङ्गारस्तु सम्भोगविप्रलम्भभेदेन द्विविधः । तत्र सम्भोगस्य अलब्धनायिकाविषयत्वाभावेन तत्सिद्ध्यर्थमात्मनः स्मरणानुपपत्तेस्तत्प्रश्नमपहाय विप्रलम्भविषयः प्रश्नः क्रियते । तत्र विप्रलम्भोऽपि द्विविधः । एकः प्रागसङ्गतनितम्बिनीविषयः, अन्यस्तु विप्रयुक्तनायिकाविषयः । तत्राद्यमधिकृत्याह—

कामिति । त्वम् एकपत्नीव्रतदुःखशीलां कां नितम्बिनीं कण्ठे स्वयंग्राहनिषक्तबाहुम् इच्छसि । एकस्य पत्नी एकपत्नी पतिव्रतेत्यर्थः, तस्या व्रतं पुरुषान्तरादर्शनादिरूपं, तेन दुःखशीलां दुर्धर्षस्वभावाम् । 'शीलं स्वभावे सद्वृत्ते' इति सिंहः । नितम्बिनीं स्त्रियं कण्ठे स्वयंग्राहनिषक्तबाहुम् आलिङ्गनार्थं स्वयमेव ग्रहणं स्वयङ्ग्राहः । ग्रहणार्थे ग्राहशब्दप्रयोगो मृग्यः, जलचरे ग्राह इति नियमात् । स्वयङ्ग्रह इत्येव मुख्यः प्रयोगः । तथा च माघेन प्रयुक्तं 'स्वयंग्रहाश्लेषसुखेन निष्क्रयम्' (स. १. श्लो. ५०) इति । माधवस्तु णिजन्तत्वेन साधितवान् । नायिकायाः स्वयमेव स्वबाहुभ्यां यद् ग्रहणं स स्वयंग्राहः । 'एरच्' (३. ३. ५६) इत्यच्प्रत्यय इति । स्वयंग्रहणेन कण्ठे विषक्तौ विशेषेण सक्तौ बाहू यस्यास्तथाभूतां सतीम् इच्छसि अभिलषसि । वदेति शेषः । ननु महेन्द्रस्य कथं परस्त्रीसम्भोगलालसत्वमाशङ्क्यते, अत आह—चारुतया लोलं मनः प्रविष्टामिति । चारुतया चारुत्वेन सौन्दर्यातिशयेनेत्यर्थः । लोलं चञ्चलं मनः चित्तं प्रविष्टां प्राप्ताम् । रूपसौन्दर्याणां निरवधिकत्वाद् मनसः स्वभावलौल्याद् अहल्यावृत्तान्तस्य प्रसिद्धत्वाच्च न काचिदनुपपत्तिरिति भावः । अत्र मनः प्रविष्टामित्यनेन महेन्द्रस्य सङ्कल्पाभिधाना तृतीया कामावस्था दर्शिता । यथाह—

१. 'ति ॥' घ. पाठः. २. 'कया' घ. पाठः. ३. 'प्रा' घ. पाठः. ४. 'प्रा' घ. पाठः. ५. 'हुः' घ. ङ. पाठः.

"चक्षुःप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥
उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः ।"

इति । ननु लज्जापरतन्त्रा हि स्वभावतो नितम्बिन्यः, विशेषतश्च पतिव्रताः । अतः कथं तासां स्वनङ्गाहाश्लेषोपपत्तिः । अत आह — मुक्तलज्जामिति । मुक्ता त्यक्ता लज्जा यया तां, मद्बाणभिन्नहृदयत्वेन परित्यक्तलज्जाम् । अत एव चपलतया स्वयङ्ग्रहणलक्षणालिङ्गनविशेषप्रवृत्तां चेत्यर्थः । अनेन नितम्बिन्यास्त्रपानाशरूपा सप्तमी कामावस्था दर्शिता, उन्मादरूपाष्टमी च ॥७॥

कयासि कामिन्! सुरतापराधात्
पादानतः कोपनयावधूतः ।
यस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम् ॥ ८ ॥

(प्रकाशिका)

द्वितीयं विप्रलम्भमधिकृत्याह —

कयासि कामिन्निति । कामिन्निति नर्मसचिवोचितं नर्मगर्भमामन्त्रणम् । सहसापराधात् पादानतः कोपनात्वादवधूत इत्यर्थः । यस्या इति पाठो युक्तः । दृढानुतापमिति नवम्यवस्था दर्शिता । प्रवालशय्याश्रयणं व्याधेरनुभावः । अत्र धर्मार्थमोक्षाणामात्मनः प्रतिबन्धकत्वेनोक्तिः, कामस्य तु साधकत्वेनेति विशेषः । कामस्य वक्तुस्तथास्वभावकत्वात् ॥ ८ ॥

(विवरणम्)

अथ द्वितीयं विप्रलम्भमधिकृत्योच्यते । [6] स तु प्रवासनिमित्तो माननिमित्तश्चेति

१. 'चल' घ. ङ. पाठः. २. 'सुरताप', ३. 'त' मुद्रितकोशपाठः.
४. 'न' ङ. पाठः. ५. 'वत्वा' क. पाठः. ६. 'स प्र' ङ. पाठः.

द्विविधः । तदुक्तं—विप्रयोगस्तु विश्लेषो रूढविस्रम्भयोर्द्विधा । मानप्रवासभेदेनेति । तत्र प्रवासनिमित्तः पुरःस्थिते पुरन्दरे न सम्भावित इति माननिमित्तमधिकृत्याह

कयासीति । कामिन्! अपराधात् पादानतः त्वं कोपनया कया सहसा अवधूतः असि । कामिन्निति नर्मसचिवोचितं नर्मगर्भमामन्त्रणम् । अपराधपादप्रणामादेः कामिनामेवोपपत्तेरेवमुक्तम् । अपराधात् सपत्नीजननाम-ग्रहणादिरूपात् । पादानतः वध्वाः पादयोरानतः प्रणतः । कोपनया कोप-शीलया सहसा अविचार्य त्वरितमेव अवधूतः निराकृतोऽसि । अथा-त्मनस्तद्विषयां प्रवृत्तिं दर्शयति — अहं यस्याः शरीरं प्रवालशय्याशरणं करिष्यामीति । यस्याः कामिन्याः शरीरं देहं प्रवालशय्याशरणं प्रवालैः पल्लवैः कृता शय्यैव शरणं रक्षिता यस्य तथाविधं करिष्यामि । यस्याः शरीरं मया प्रवालशय्यामात्रशरणं विधातव्यं, तथाभूतया कया त्वमवधूतोऽसीति पूर्वेण योजना । प्रवालशय्याशरणत्वमनुतापस्यानुभावः । तमेवानुतापमाह— दृढानुतापमिति । दृढः स्थिरोऽनुतापः सन्तापो यस्य तत् तथा । अनेन तनु-ताख्या पञ्चमी कामावस्था दर्शिता । अत्र पुरुषार्थप्रकरणे धर्मार्थमोक्षाणां प्रति-बन्धकत्वेनोक्तिः, कामस्य तु साधकत्वेनेत्यात्मनः स्वभावो दर्शितः । अयं च स्वभावविशेषः 'पुंसां ज्ञातविशेषे'त्यामन्त्रणेनैव प्रतिपादितो वेदितव्यः ॥ ८ ॥

प्रसीद विश्राम्यतु वीर! वज्रं
शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥

(प्रकाशिका)

अथ शस्त्रसाध्यं शत्रुविजयमप्यहमेव करिष्यामीत्याह

प्रसीदेति । विश्राम्यतु भुवनकण्टकप्रमथनेष्वपर्यायेणाविश्रमेण

१. 'प' क. ग. घ. पाठः. २. 'णमनाद' ङ. पाठः. ३. 'व वे' ङ. पाठः

च निदेशकारी ते वज्रो विश्रमं लभताम्, अत्र प्रसादं विधेहीत्यर्थः। अथ च तादृशेऽपि साधने स्वयमेकवीरः सन् स्वविक्रमलेशेनापि सुकरेऽर्थे मामाज्ञापयितुं प्रसीदेत्यर्थः। मोघीकृतबाहुवीर्यत्वं विषयाकृष्टत्वेन निरुद्यमत्वात्। स्त्रीभ्योऽपि बिभेत्विति. किमतः परं क्लीबत्वं संपादयामीति भावः। अत्र प्रश्नार्थे पञ्चवाक्यानि पञ्चान्यानन्यसाध्यविषयाणि। षष्ठं शस्त्रसाध्यविषयम्। पञ्चस्वप्याद्यं प्रत्युपस्थितमूलहरापत्प्रतीकारविषयम्। द्वितीयं तथाविधैकदेशनाशकापत्प्रतीकारविषयम, अधिकृतस्य मुमुक्षया तदधिकारवैकल्यात्। तृतीयं स्वागतापत्प्रतीकारविषयं, स्वयमभियुञ्जानादपि विजिगीषुवृत्तप्रवृत्तात् स्वशक्त्युपचयकारिणः कस्माचिदात्माभिभवस्य शङ्कितत्वात्। तदनन्तरौ तु स्वसुखविषयाविति विषयभेदः। सुखादप्यसुखपरिहारे गौरवं, तत्रापि प्रत्युपस्थिते विशेषः, तस्मिन्नपि मूलहर इति यथापूर्वं गौरवमिति क्रमो विवक्षितः ॥ ९ ॥

(विवरणम्)

एवं तावदनन्यसाध्यस्यार्थस्य प्राधान्यात् प्रथमं तद्विषयः प्रश्नः कृतः। अथ शस्त्रसाध्यं शत्रुविजयमप्यहमेव करिष्यामीत्याह —

प्रसीदेति। वीर! त्वं प्रसीद। अत्र वीरेति सम्बुद्ध्या त्वद्भृत्येन मया विजितेष्वपि शत्रुषु तव वीरत्वहानिर्नास्तीति द्योत्यते। प्रसीद मयि प्रसादं कुरु। शत्रुविजयाख्ये कार्ये मामाज्ञापयेत्यर्थः। नन्वहं वज्रपाणिः, ततो मत्प्रतिपक्षनिग्रहार्थं किमर्थमहं त्वामाज्ञापयामीत्यत आह — वज्रं विश्राम्यतु इति। त्रिभुवनकण्टकोद्धरणार्थमनवरतप्रवृत्तिकं तव वज्रमात्मभारं मद्बाणेषु निधाय परिश्रमापनोदनार्थं कञ्चित् कालं विश्राम्यतु विश्रान्तिं लभताम्। ननु कुसुममात्रायुधस्त्वं कथं वज्रसाध्यं शत्रुविजयं करिष्यसीतीमामाशङ्कां शत्रुविजयप्रकारकथनेन परिहरति — कतमः सुरारिः मदीयैः

१. 'पीपत्र' ङ. पाठः. २. 'यिष्यामी' ख. घ. पाठः. ३. 'स्वाद्यं' क. ग. पाठः. ४. 'र एव वे' ङ. पाठः. ५. 'महमा' ङ. पाठः. ६. 'द्धृतिकर' क. ग. घ. पाठः.

रिः मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि बिभेत्विति । कतमः 'वा बहूनां जाति-परिप्रश्ने डतमच्' (५. ३. ९३)। दैत्यराक्षसादीनां बहूनां जातिपरिप्रश्नस्यात्र विवक्षितत्वात् । सुराणामरिः सुरारिः मदीयैः मत्सम्बन्धिभिः शरैः बाणैः मोघीकृतबाहुवीर्यः मोघीकृतं निष्फलीकृतम्, अभूततद्भावे च्विः । बाहुवीर्यं बाह्वोर्वीर्यं यस्य तथाभूतः सन्, विषयाकृष्टतया निरुद्यमत्वान्निष्फलदोष्प्र-तापो भूत्वा स्त्रीभ्योऽपि बिभेतु स्त्रीसकाशादपि भीतिमान् भवतु । किमतः परं तव रिपूणां क्लीबत्वं सम्पादयिष्यामीति भावः । स्त्रीणां भयजनकत्वमाह — कोपस्फुरिताधराभ्य इति । कोपेन निजशासनोल्लङ्घनसम्भवेन रोषेण स्फुरितः चञ्चलोऽधरो यासां तास्तथोक्ताः । रोषकृतेनाधरस्फुरणमात्रेणापि बिभेतु, किं पुनर्वचनादिनेति भावः ॥ ९ ॥

**तव प्रसादात् कुसुमायुधोऽपि**
**सहायमेकं मधुमेव लब्ध्वा ।**
**कुर्यां हरस्यापि पिनाकपाणे-**
**र्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ १० ॥**

(प्रकाशिका)

अथ विकत्थनोद्दीर्णदर्पस्तेषां मन्त्रमजानन्नपि दैवात् तदभिमते परमदुस्सा-धेऽपि कार्ये स्वशक्त्युपन्यासं कुर्वन् सर्वातिशायितामात्मनः प्रकटयति—

**तव प्रसादादिति ।** तव प्रसादादित्यनौद्धत्येन प्रभुकोपपरिहारः। **सहायापेक्षापि** नात्यन्तमस्तीत्याह — सहायमिति । कुर्यामिति संभावनायां **लिङ् ।** हरस्य धैर्यच्युतिकारितामपि मयि संभावयामीत्यर्थः । पिना-**कपाणेः** तादृशसाधनसमग्रस्य । हरस्य स्वयं चतुर्दशभुवनसंहर्तुरित्यर्थः । **'प्रचुरतमसे** तत्संहर्त्रे हराय नमो नमः' इति वचनात् । अन्यद् दण्डा-**पूपिकया सिद्धमित्याह** — के ममेति । किं क्षेपे । अन्ये दूरनिरस्ता **इत्यर्थः । अत्र साधनसहायपौष्कल्यलक्षणे कारणे असमग्रेऽपि सा-**

१. 'करणम' ङ. पाठः. २. 'रपीत्य' ङ. पाठः. ३. 'या' ङ. पाठः. ४. 'णे च' ङ. पाठः.

र्ध्यभावलक्षणस्य कार्यस्य भाववचनाद् विशेषोक्तिरनुक्तनिमित्ता। निमित्तं च स्ववीर्यातिशयो ध्वन्यते। अनयोश्चेन्द्रकामयोः प्रतिनायकत्वाद् धीरोद्धतत्वमुपपन्नम् ॥ १० ॥

(विवरणम्)

इत्थं विकत्थनोर्दीर्णदर्पः कन्दर्पस्तेषां मन्त्रमजानन्नपि परमदुस्साधेऽपि देवकार्ये स्वसामर्थ्यप्रकटनं कुर्वन् गर्वोद्धतः सर्वातिशायितामात्मनः प्रदर्शयति

तवेति। अहं कुसुमायुधोऽपि तव प्रसादाद् मधुम् एकमेव सहायं लब्ध्वा पिनाकपाणेः हरस्यापि धैर्यच्युतिं कुर्याम्। कुसुमायुधः कुसुममेवायुधं यस्य तथाभूतः सन्नपि। अनेनात्यन्तदुर्बलसाधनत्वमात्मनो दार्शितम्। ननु तथाविधस्य तव कथं तादृशे कार्ये सामर्थ्यमित्यत्राह — तव प्रसादादिति। तत्तादृशो हि प्रभूणां प्रभावः, यदेते नितान्तहीनबलमपि भृत्यं निजाज्ञया बलवत्तरं कुर्वन्ति। यथोक्तं शाकुन्तले —

"सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम्।
किं वाभविष्यदरुणस्तमसां निहन्ता
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥"

इति। अनेन वचनेनात्मप्रशंसानिमित्तकोपपरिहारार्थमौद्धत्यपरिहारः कृत इत्यवसेयम्[२]। अस्मिन् कर्मणि सहायापेक्षापि नात्यन्तमस्तीत्याह — मधुमेकं सहायं लब्ध्वा इति। मधुं वसन्तम् एकं निस्सहायम्। एवशब्दः सहायान्तरनैरपेक्ष्यमेव द्रढयति। लब्ध्वा सम्प्राप्य। पिनाकपाणेः, पिनाक इति हरचापस्य नाम। 'पिनाकः शूलिनो धनुरि'ति भोजः। पिनाकः पाणौ यस्य तस्य। अनेन हरस्य प्रबलसाधनत्वमुक्तम्। हरस्य, हरतीति हरः, चतु-

१. 'ध्या' घ. ङ. पाठः. २. 'धे' घ. पाठः.

शभुवनसंहर्तुरपीत्यर्थः । 'प्रचुरतमसे तत्संहर्त्रे हराय नमो नमः' इति वचनात् । अपिशब्देन हरस्य लोकोत्तरत्वमुक्तम् । धैर्यस्य च्युतिं विलोपम् । र्यामिति सम्भावनायां लिङ् । इदानीमत्यन्तदुश्चरेऽपि तपसि वर्तमानस्य हरस्य धैर्यच्युतिमपि मयि सम्भावयामीत्यर्थः । धृतपिनाकस्य हरस्य जयेऽपि समर्थस्य ममान्येषां धन्विनां जयः पुनरीषत्कर एवेत्याह — ममान्ये धन्विनः के इति । अन्ये हरव्यतिरिक्ताः धन्विनः धनुष्मन्तः । 'धन्वी धनुष्मान् धानुष्क' इत्यमरः । के, किंशब्दः क्षेपे । न केऽपीत्यर्थः । अन्ये तृणसमाना एवेति भावः । अनेनान्यजयस्य दण्डापूपिकया सिद्धत्वमुक्तमित्यर्थापत्तिरलङ्कारः । दण्डापूपिकयार्थान्तरापातनमर्थापत्तिरिति । जयकारणानामायुधपौष्कल्यादीनामभावेऽपि जयोत्पत्तिवचनाद् विभावना च । कारणाभावे कार्योत्पत्तिर्विभावना चेति ॥ १० ॥

अथोरुदेशादवतार्य पाद-
माक्रान्तिसम्भावितपादपीठम्[1] ।
सङ्कल्पितेऽर्थे विवृतात्मशक्ति-
माखण्डलः काममिदं बभाषे ॥ ११ ॥

(प्रकाशिका)

अथैवंविधया कामोक्त्या लब्धाश्वासस्येन्द्रस्य वृत्तमाह

अथेति । अत्र चेष्टाविशेषेणादरः प्रतीयते । सङ्कल्पितेऽर्थे विवृतात्मशक्तिमित्यादरे हेतुः । आखण्डलः काममिदमिति । एवं हि कार्यतत्त्वमिति भावः । आखण्डलशब्देन विश्वोत्तरत्वं, काममिति कान्तिमात्रसारत्वम्, इदंशब्देन वक्ष्यमाणवाक्यार्थपरामर्शिनानुष्ठातिपरत्वादि च ध्वन्यते ॥ ११ ॥

१. 'र' ङ. पाठः. २. 'ठम्' मुद्रितकोशपाठः. ३. 'तार्थे' मुद्रितकोशपाठः. ४. 'इ' ख. ग. घ. पाठः. ५. 'दीनि च द्योत्यन्ते' क. ग. पाठः.

(विवरणम्)

अथ निजमनोरथपूरणक्षमेणैवम्भूतेन मदनवचनेन जनिताश्वासस्य वृत्रद्विषः प्रवृत्तिमाह—

अथेति। अथ आखण्डलः ऊरुदेशात् पादमवतार्य काममिदं बभाषे। अथ हरविषयसामर्थ्यप्रतिपादनानन्तरम् आखण्डल इन्द्रः, अत्राखण्डलशब्देन विश्वोत्तरत्वमिन्द्रस्य द्योत्यते। अखण्डमैश्वर्यं ज्ञानं वा लाति गृह्णातीत्यखण्डलः, स एवाखण्डलः। 'अन्येषामपि दृश्यते' (६. ३. १३७) इति दीर्घः, पृषोदरादिसूत्रेण वा। ऊरुदेशात् पादमवतार्य आदरातिशयात् प्रसादातिशयाच्च ऊरुदेशस्थितं पादमधः प्रसार्येत्यर्थः। कामं कामदेवम्, अनेनात्र कान्तिमात्रसारत्वमुक्तम्। कमु कान्ताविति धातुः। अत्राखण्डलकामशब्दाभ्यां तयोः परस्परोपकार(क)त्वं सूचितम्। इदं वक्ष्यमाणं, बभाषे उक्तवान्। आखण्डलं विशिनष्टि—आक्रान्तिसम्भावितपादपीठः इति। आक्रान्त्या आक्रमणेन स्वपादविन्यासेनेत्यर्थः, सम्भावितं सम्मानितं पादपीठं येन स तथोक्तः। स्वस्मिन् स्वामिनः पादविन्यास एव हि पादपीठस्यानुग्रह इति भावः। कामविषया(दरा)तिशये हेतुमाह—सङ्कल्पितेऽर्थे विवृतात्मशक्तिमिति। सङ्कल्पिते मन्त्रकुशलैर्देवैः सह सम्मन्त्र्य तैः सम्यक्कल्पिते व्यवस्थापितेऽर्थे परमेश्वरचित्ताकर्षणरूपे विवृता प्रकाशिता आत्मनः शक्तिः सामर्थ्यं येन। हृदयस्थितं कार्यं तत्त्वमवधार्य तत्सम्पादननिपुणा हि भृत्याः प्रभूणामादरपदमिति भावः॥ ११॥

**सर्वं सखे! त्वय्युपपन्नमेत-**
**दुभे ममास्त्रे कुलिशं भवांश्च।**
**पूर्वं तपोवीर्यमहत्सु कुण्ठं**
**त्वं सर्वतोगामि च साधकं च॥ १२॥**

१. 'कर्त्र व' मुद्रितकोशपाठः

(प्रकाशिका)

तत्र स्तुत्या तावदस्य वीर्यं सन्धुक्षयति—

सर्वमिति । एतद् यत् त्वया शक्यत्वेनोक्तम् । अत्र हेतुमाह— उभे इति । तत्र विशेषमाह — पूर्वमिति । कुण्ठं गमनसाधनक्रिययोरक्षमम् । 'कुण्ठो मन्दः क्रियासु य' इति सिंहः । सर्वतः तपोवीर्यमहत्स्वपीत्यर्थः । अनेन तदुक्त्यभ्युपगमः कृतः ॥ १२ ॥

(विवरणम्)

अथ स्तुत्या तस्य वीर्यं सन्धुक्षयन्नाह—

सर्वमिति । सखे! एतत् सर्वं त्वयि उपपन्नम् । हे सखे! आदरातिशयद्योतनार्थमिदमामन्त्रणम् । एतत् त्वदुक्तमर्थजातं सर्वं, नैवात्र किञ्चिदर्थजातमनुपपन्नमस्तीति भावः । त्वयि उपपन्नं युक्तं, त्वदुक्तं सामर्थ्यं सर्वमपि त्वय्यस्त्येवेत्यर्थः । उपपन्नत्वमेवोपपादयति — मम उभे अस्त्रे इति । विद्येते[1] इति शेषः । के पुनस्ते इत्यत्राह — कुलिशं भवांश्चेति । कुलिशं वज्रम् । तयोरेकमस्त्रं कुलिशम्, एकस्तु भवानेवेत्यर्थः । उभयोर्मध्ये कुलिशस्य न्यूनतामाह — पूर्वं तपोवीर्यमहत्सु कुण्ठमिति । पूर्वं पूर्वोक्तं वज्रं तपोवीर्यं तपश्शक्तिः तेन महत्सु लोकोत्तरेषु । अस्त्रप्रयोगो हि वीर्यवत्सु कर्तव्य इति वीर्यपदप्रयोगः । कुण्ठमशक्तं, तद्विषये गमने स्वार्थसाधने चासमर्थमित्यर्थः । 'कुण्ठो मन्दः क्रियासु य' इति सिंहः । कामस्य व्यतिरेकमाह — त्वं सर्वतोगामि च साधकं चेति । त्वं त्वद्रूपमस्त्रं सर्वतोगामि सर्वतः तपोवीर्यमहत्स्वपि गन्तुं शीलमस्येति तथा । साधकं स्वार्थसाधकं च, न केवलं तत्प्राप्तिमात्रसमर्थम्, अपि तु स्वकार्यभूततत्समाधिभङ्गसमर्थं चेत्यर्थः । अस्त्रापेक्षया सर्वतोगामिशब्दस्य साधकशब्दस्य च नपुंसकलिङ्ग(त्व)मित्यवसेयम् । अनेन श्लोकेनानन्यसाध्ये शस्त्रसाध्ये च कर्मण्यहं कुशल इति यत् कामदेवेनोक्तं, तदेवानूदितमित्यवसेयम् ॥ १२ ॥

१. 'स्त इ' ख. पाठः.

अवैमि ते सारमतः खलु त्वां
कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥

(प्रकाशिका)

यदहं त्वद्वीर्यं जानामि, तन्न केवलमनया मदुक्त्यावसेयम्, अपितु मत्प्रवृत्त्यापीत्याह —

अवैमीति । सारं बलम् । आत्मसमम् अनुरक्तं शुचिं चेत्यर्थः । एव'मनुरक्तः शुचिर्दक्ष' इति प्रधानगुणत्रयविशिष्टेऽमात्ये त्वयि स्थिते कमन्यमीदृशेऽर्थे नियोक्ष्य इति भावः । कर्त्रभिप्राये क्रियाफल आत्मनेपदम् । भूधरतामवेक्ष्यं भूभारधारणक्षमं मत्वा ॥ १३ ॥

(विवरणम्)

अपिच अहं ते सकलमपि वीर्यं जानामीति यदुक्तं, तत्र न केवलमुक्तिमात्रं प्रमाणम्, अन्यैरत्यन्तदुस्साधेऽर्थे मन्नियोगश्चेत्याह—

अवैमीति । अहं ते सारम् अवैमि । सारं बलम् । 'सारो बले स्थिरांशे च' इत्यमरः । अवैमि जानामि । किं तर्हि तत्र प्रमाणमित्यत्राह — अतः खलु अहं त्वां गुरुणि कार्ये नियोक्ष्ये इति । अतः त्वद्वीर्यज्ञानात् । खलुशब्दोऽवधारणे । त्वद्वीर्यज्ञानादेव हेतोरित्यर्थः । नह्यज्ञातशक्तयो भृत्याः प्रभुणा गुरुणि कार्ये विनियुज्यन्त इति भावः । गुरुणि अनन्यसाध्ये कार्ये कर्तव्येऽर्थे नियोक्ष्ये नियोगं करिष्ये । 'स्वरितञितः कर्त्रभिप्राये—' ( १. ३. ७२ ) इत्यात्मनेपदम् । अस्मदभीष्टसाधनाय हि त्वामहं नियोक्ष्ये, न तु परीक्षाद्यर्थमित्यर्थः । न केवलं तव वीर्यवत्त्वमात्रम्, अपि तु

१. 'त्य' घ. ङ. पाठः. २. 'दिष्ट' ग. घ. पाठः.

अनुरक्तत्वं निर्व्याजत्वं चास्तीत्याह — आत्मसममिति । आत्मनैव समं तुल्यम् । 'तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत' (स.१७.श्लो.६२) इति रघुवंशोक्तः प्रकारोऽनेन दर्शितः । 'अनुरक्तः शुचिर्दक्ष' इत्यादयोऽमात्यगुणाश्च प्रतिपादिताः । सर्वामात्यगुणविशिष्टे त्वयि स्थिते सति कमन्यमीदृशे कार्ये नियोक्ष्य इति भावः । गुणावधारणमेवात्मार्थे नियोगे हेतुरिति यदुक्तं, तत् प्रतिवस्तूपमयोपपादयति — शेषः भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय व्यादिश्यत इति । शेषोऽनन्तः । भूधरतां भुवो भूमेः धरः धर्ता । धरतीति धरः, 'धृञ् धारण' इति धातोः पचाद्यचि रूपम् । भूधरस्य भावो भूधरता, ताम् । अवेक्ष्य ज्ञात्वा कृष्णेन विष्णुना देहोद्वहनाय त्रैलोक्याधिष्ठितस्यात्मशरीरस्योद्वहनायोद्धरणाय व्यादिश्यते नियुज्यते । अनन्तस्य पृथिवीधारणमवधार्यैव हि भगवता नारायणेनायमात्मनः शयनसाधनतां नीत इत्यर्थः ॥ १३ ॥

आशंसता बाणगतिं वृपाङ्के
कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानी-
मुच्चैस्तरामीप्सितमर्थमत्र ॥ १४ ॥

(प्रकाशिका)

नियोगश्च त्वयाङ्गीकृतप्राय एवेत्याह —

आशंसतेति । आशंसता ईषद् ब्रुवता । 'शंसु स्तुतौ' इति धातुः, न तु 'आङः शसि इच्छायाम्' इति, तस्यात्मनेपदित्वात् ।

"आशंसते स्यादिच्छायां शंसतीति स्तुतौ भवेत् ।
हिंसायां शसतीच्छायामाशास्ते शास्ति शासने ॥"

१. 'त्व' ग. घ. पाठः. २. 'द्विषामी', ३. 'मेतदेव' मुद्रितकोशपाठः.

इति निघण्टुः। ईषद्वचनं च कर्तव्यतयानभिसंहितत्वात्। प्रतिपन्नकल्पं, न तु सर्वथा प्रतिपन्नम्, अस्माभिरनिवेदितत्वात्। तस्मादिदं निवेद्यत इत्याह — निबोधेति। उच्चैस्तरामितीप्साया विशेषणम्। उच्चै(स्त्व ?र्द्धि)षामिति वा पाठः। अत्र वृषाङ्के। देवानामिदानीं यः सातिशयमीप्सितोऽर्थः, तं परमेश्वरविषयमवगच्छेत्यर्थः॥ १४॥

( विवरणम् )

'कुर्यां हरस्यापि पिनाकपाणेः'(श्लो. १०)इति वदता त्वया मन्नियोगः प्रायेणाङ्गीकृत एवेत्याह—

आशंसतेति। वृषाङ्के बाणगतिम् आशंसता त्वया नः कार्यं प्रतिपन्नकल्पम्। वृषाङ्के वृषध्वजे बाणगतिं बाणस्य गतिं प्रवृत्तिम् आशंसता ईषद् ब्रुवता। ईषद्वचनमत्र तदेव देवकार्यमिति निश्चयाभावात्। 'शंसु स्तुतौ' इति धातोराङ्पूर्वस्य शत्रन्तमिदं रूपं, न तु 'आङः शसि इच्छायाम्' इत्यस्य धातोः, तस्यात्मनेपदित्वात्। यथोक्तं देवेन —

"आशंसते स्यादिच्छायां शंसतीति स्तुतौ भवेत्।
हिंसायां शसतीच्छायामाशास्ते शास्ति शासने॥"

इति। त्वया भवता नः कार्यं हरवशीकरणरूपं प्रयोजनं प्रतिपन्नकल्पम् अङ्गीकृतप्रायं, न तु सर्वथैवाङ्गीकृतम्, अस्माभिरनुक्तत्वात्। अत एवाह— निबोधेत्यादिना। यज्ञांशभुजाम् इदानीम् उच्चैस्तराम् ईप्सितम् अर्थम् अत्र निबोध। (?) अनेन तारकासुरनिमित्तयज्ञविप्लवनिवृत्त्यर्थोऽयं प्रयास इति सूचितम्। अत एवाह—इदानीमिति। प्रवृद्धतारकासुरोपद्रवेऽस्मिन् काले। उच्चैस्तरामिति ईप्साविशेषणम्। सातिशयमीप्सितमित्यर्थः। अर्थं प्रयोजनम् अत्र वृषाङ्के विषये निबोध जानीहि। 'बुध अवगमने' इति धातोर्लोटि रूपम्। सर्वदा सर्वविषयाणामीप्सितानामस्माकं त्वमत्र साधकः। इदानीमत्यन्तमीप्सितोऽर्थः परमेश्वरविषय इत्यवगच्छेत्यर्थः॥ १४॥

अमी हि वीर्यप्रभवं[1] हरस्य
जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो[2]
ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १५ ॥

(प्रकाशिका)

तत् कथमित्याह

अमी इति । हिशब्दोऽस्यार्थस्य पूर्वोक्तं प्रत्युपपादकत्वं द्योतयति। उशन्ति इच्छन्ति । तत्र का मय्यपेक्षेत्याह — स चेति । एकेति सुकरत्वं द्योतयति । ब्रह्मा अङ्गभूस्तनयो यस्य । तथाच पुराणसिद्धम् । वक्ष्यति च—'यमामनन्त्यात्मभुवोऽपि कारणम्' (स.५.श्लो.८१) इति। अनेन पूर्वमपि देवः पुत्रवानिति प्ररोचयति । तर्हि स एव देवः किं न प्रार्थित[3] इत्याह — ब्रह्मणि प्रत्यगात्मनि योजितात्मा योगेनार्पितान्तःकरणः ॥ १५ ॥

(विवरणम्)

हरविषयमभिलाषमेव स्फुटयति —

अमी इति । अमी देवाः जयाय हरस्य वीर्यप्रभवं सेनान्यम् उशन्ति हि । अमी देवाः, ये त्वत्प्रसादकाङ्क्षयात्र तिष्ठन्तः । जयाय तारकासुरविजयाय हरस्य जगत्संहर्तुः परमेश्वरस्य । अनेन तत्सुतस्य शत्रुनिग्रहसामर्थ्यं ध्वन्यते । वीर्यप्रभवं वीर्याद् रेतसः प्रभव उद्भवो यस्य तं सेनान्यं सेनानायकम् उशन्ति इच्छन्ति । 'वश कान्तौ' इति धातुः । 'ग्रहिज्या—'(६.१.१६) इत्यादिना संप्रसारणम् ।अस्यार्थस्य पूर्वोक्तमर्थं प्रत्युपपादकत्वं द्योतयितुं[4] हिशब्दः । अत्र किं मया कर्तव्यमित्याह—स च त्वदे-

१. 'भवस्य', २. 'साध्यो' मुद्रितकोशपाठः. ३. 'र्थ्ये' ग. ङ. पाठः. ४. 'त' ङ. पाठः.

केषुनिपातहार्य इति । सः हरः । चशब्देनास्य चित्ताकर्षणमन्यैरशक्य-मिति द्योत्यते । सोऽपीत्यर्थः । त्वदेकेषुनिपातहार्यः त्वया एकस्यैवेषो-र्निपातेन निपतनेन हार्यः हर्तुं शक्यः । एकशब्देनात्र त्वया सुकरोऽयमर्थ इति द्योत्यते । चशब्दोक्तं हरस्य विशेषमेवाह — ब्रह्माङ्गभूरिति । ब्रह्मा सकलजगन्निर्माणकर्मठो विधिरेवाङ्गभूस्तनयो यस्य स तथा । श्रुतिप्रसि-द्धश्चायमर्थः । वक्ष्यति च — 'यमामनन्त्यात्मभुवोऽपि कारणमि'ति । पुराणपुरुषे तस्मिन्नन्ये प्रयासा निरर्थका एवेत्यर्थः । पुनरपीदानीमस्ति विशेष इत्याह — ब्रह्मणि योजितात्मेति । ब्रह्मणि परमात्मनि योजि-तः एकीभावमापादितः आत्मा जीवात्मा येन स तथा । जीवपरैक्यमवगम्य स्थित इत्यर्थः । अनेन तपोवीर्यमहत्त्वमुक्तम् । तेन चान्यैरसाध्यत्वं द्योत्यते[2]। मदनेन साध्यत्वं तु 'त्वं सर्वतोगामि च साधकं च'(श्लो.१२)इत्यत्रोक्तम् ॥

तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥

(प्रकाशिका)

उपायोऽपि तत्र कथ्यत इत्याह —

तस्मा इति । तस्मा इति 'रुच्यर्थानां प्रीयमाणः'(१.४.३३) इति चतुर्थी । हिमाद्रेरिति प्रयतामिति च परमेश्वरयोग्यतां द्योतयतः । यत-स्वेत्यत्र हेतुः —यतात्मन इति । अन्यां किन्नेत्याह — योषित्स्विति ॥

(विवरणम्)

ननु मया हरः कस्या योषितो वशं नेतव्य इत्यत्राह—

१. 'न ह्य' घ. पाठः. २. 'ध्वन्यते' क. ख. पाठः. ३. 'ति ।' क. पाठः.

तस्मा इति[1] । हिमाद्रेः तनूजां तस्मै रोचयितुं यतस्व । हिमाद्रेः हिमवतः तनूजां पुत्रीम् । अनेनाभिजात्ययुक्ततया पार्वत्याः परमेश्वरयोग्यता दर्शिता । तस्मै हराय । 'रुच्यर्थानां प्रीयमाणः'(१.४.३३) इति सम्प्रदानसंज्ञा । रोचयितुं हरस्य तस्यां रुचिमुत्पादयितुमित्यर्थः । यतस्व यत्नं कुरु । ननु किमर्थं यतस्वेत्युक्तं, न रोचयेति । अत आह — यतात्मन इति । यतः संयतः आत्मा अन्तःकरणं येन तस्मै । विषयव्यावृत्तचित्तायेत्यर्थः । स्वगुणैरपि पार्वत्याः परमेश्वरयोग्यतामाह — प्रयतामिति । परिशुद्धान्तःकरणामित्यर्थः । किमर्थमस्यान्यस्यां रुचिं नोत्पादयेयम्, अत आह — योषित्सु तद्वीर्यनिषेकभूमिः सा एव क्षमा इति आत्मभुवा उपदिष्टमिति । योषित्सु स्त्रीषु तस्य हरस्य वीर्यनिषेकस्य रेतस्सेचनस्य भूमिः अधिकरणं सा पार्वत्येव क्षमा योग्या, नान्याः स्त्रियः । स्त्रीणां मध्ये सैव हरवीर्यनिषेकाधिकरणत्वयोग्येत्यर्थः । नन्वत्र किं प्रमाणमित्यत्राह — इत्यात्मभुवोपदिष्टमिति । साक्षात् परमेष्ठिनैवोपदिष्टोऽयमर्थ इत्यर्थः । नास्य कदाचिदप्यन्यथात्वं भविष्यतीति भावः ॥ १६ ॥

**गुरोर्नियोगाच्च नगेन्द्रकन्या**
**स्थाणुं तपस्यन्तमधित्यकायाम् ।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः**
**श्रुतं मया मत्प्रणिधिः स वर्गः ॥ १७ ॥**

(प्रकाशिका)

तयोस्तु परिचयः प्रवृत्त एवेत्याह —

गुरोरिति । अन्वास्ते उपास्ते । ननु स्त्रीवचसि कथं प्रत्यय इत्याह — मत्प्रणिधिरिति ॥ १७ ॥

[1] 'ति । त्वं हि' ङ. पाठः.

(विवरणम्)

ननु हिमाद्रौ वर्तते सा पार्वती, हरस्तु कैलासशिखरे। अतः कथं तयोः परस्परसन्द-र्शनोपपत्तिः, कथं वा च परस्परसन्दर्शनेन विना रुचिमुत्पादयेयमित्यत्राह—

गुरोरिति। नगेन्द्रकन्या अधित्यकायां तपस्यन्तं स्थाणुं गुरोः नियोगाद् अन्वास्ते इति मया अप्सरसां मुखेभ्यः श्रुतं च। नगेन्द्रकन्या पार्वती अधित्यकायां हिमवच्छिखरे। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधि-त्यका' इत्यमरः। तपस्यन्तं तपश्चरन्तं स्थाणुं हरं गुरोः पितुः नियोगाद् निदेशाद् अन्वास्ते उपास्ते इति उक्तप्रकारेण अप्सरसामप्सरःस्त्रीणां मुखे-भ्यः, अप्सरसां वचनादित्यर्थः। बहूनामप्सरसां मुखेभ्यो बहु श्रुतमिति बहुवचनस्यार्थः। इदं च निर्णये हेतुः। चकारः पूर्वोक्तसमुच्चयार्थः। नन्व-नृतवादिन्यो हि स्त्रियः, अतः कथं तद्वचस्सु विश्वासः। अत आह — सः वर्गः मत्प्रणिधिः इति। स वर्गः अप्सरसां गणः मत्प्रणिधिः मम प्रणिधिः गूढपुरुषः। 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पश' इत्यमरः। चारवचस्सु विश्वासो युक्त एव, 'चारैः पश्यन्ति राजान' इत्युक्तत्वात्॥ १७॥

तद् गच्छ सिद्ध्यै कुरु देवकार्य-
मर्थोऽयमर्थान्तरभाव्य एव।
अपेक्षते प्रत्ययमुत्तमं त्वां
बीजाङ्कुरः प्रागुदयादिवाम्भः॥ १८॥

(प्रकाशिका)

उपसंहरति

तदिति। तत् तस्माद् यस्मादीदृशोऽर्थः, स चोपायः, उपायस्य चोपस्थितत्वम्। सिद्ध्यै गच्छ त्वद्गमनं सिद्ध्ये भूयात्। कुर्विति नियोगः।

१. 'नेन' क. पाठः. २. 'ति वचनात्' ख. पाठः.

ननु देवीसन्निधिरेव तत्समाधिभङ्गायालमित्याह — अर्थ इति । अर्था-न्तरेण देवीसन्निधानादिना भाव्यः साध्यः । प्रत्ययं हेतुम् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । अत्र दृष्टान्तमाह — बीजाङ्कुर इति । यथा मृत्संयोगादिकारणान्तरसमवधानेऽपि बीजाङ्कुरैः स्वोदयाय प्रधानकारणमम्भोऽपेक्षते, तथा देवीसन्निधानेऽपि त्वामयमर्थ इत्यर्थः ॥ १८ ॥

(विवरणम्)

प्रकृतमुपसंहरति—

तादिति। तत् त्वं सिद्धयै गच्छ । तद् यस्मात् सेनानीलाभरूपं देवकार्यं पार्वतीपरमेश्वरसङ्गममात्रलभ्यं, पार्वती च पितृनियोगात् परमेश्वरसन्निधावेव वर्तते, तस्मादित्यर्थः । अनेन सिद्धेः कालप्राप्तिरुक्ता । सिद्धयै कार्यसिद्धयर्थं गच्छ गमनं कुरु । त्वद्गमनं सिद्धये भूयादित्याशीर्वादोऽनेन वाक्येन विवक्षितः । 'अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते' (श्लो. ३) इत्यत्राभ्यर्थितामाज्ञामेव करोति — देवकार्यं कुरु इति । देवानां कार्यं देवकार्यम्। तच्च परमेश्वरवशीकरणरूपम् । कुरु विधेहि । ननु यदि देवसन्निधावेव देवी विद्यते, तर्हि सा स्वभावसुभगया निजशरीरसुषमयैव देवहृदयमाक्रष्टुं क्षमा किमस्मद्गमनेन । अत आह — अर्थान्तरभाव्य एवायम् अर्थः उत्तमं प्रत्ययं त्वाम् अपेक्षत इति । अर्थान्तरभाव्यः अर्थान्तरेण त्वद्व्यतिरिक्तेन देवीसन्निधानादिलक्षणेन भाव्य उत्पाद्य एव सन्नपि । एवशब्दः कामदेवस्य प्रयासाधिक्यं वारयति । अयं हरवशीकरणरूपः अर्थः प्रयोजनम् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'त्यमरः । (उत्तमं प्रकृष्टं प्रत्ययं हेतुम् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः ।) त्वाम् अपेक्षते आकाङ्क्षते । हरचित्ताकर्षणरूपं देवकार्यं देवीसन्निधानादिभिः साध्यमपि प्रकृष्टकार (णे ? णत्वे) न त्वां प्रतिपालयतीत्यर्थः । त्वत्प्राप्त्य-

१. 'यः' ङ. पाठः, २. 'तुः' ङ. पाठः, ३. 'ति सिंहः ।' ङ. पाठः. ४. 'रस्यो' ङ. पाठः.

नन्तरमेवान्येषां साधनानां सफलत्वमिति भावः। अत्रोपमां दर्शयति—बीजाङ्कुरः उदयात् प्राग् अम्भः इवेति। बीजाङ्कुरः कलमादिबीजानामङ्कुरः। 'अङ्कुरोऽभिनवोद्भिदी'त्यमरः। उदयात् प्राक् स्वोद्भवात् पूर्वम् अम्भः जलमिव। नहि जलसेकमन्तरेण क्षितिवपनादिसंयुक्ताद् बीजादङ्कुरोत्पत्तिरिति भावः ॥ १८ ॥

**अस्मिन् सुराणां विजयाभ्युपाये**
**तवैव नामास्त्रगतिः कृती त्वम्।**
**अप्यप्रसिद्धं यशसे हि पुंसा-**
**मनन्यसाधरणमेव कर्म ॥ १९ ॥**

(प्रकाशिका)

एवं नियुज्य त्रिभिः श्लोकैः पुनस्तमुद्धर्षयाति—

**अस्मिन्निति**। **नाम** सम्भावनायाम्। अत्र न त्वदन्यस्यास्त्रव्यापारः सम्भाव्यते। तस्मात् त्वं धन्य इत्यर्थः। उपपादयति—**अपीति**। अप्रसिद्धमपि, किमुत प्रसिद्धमीदृशं कर्मेत्यर्थः ॥ १९ ॥

( विवरणम् )

इत्थं कामदेवं नियुज्य तमेव प्रोत्साहयत्यस्मिन्नित्यादिना श्लोकत्रयेण—

अस्मिन्निति। सुराणाम् अस्मिन् विजयाभ्युपाये तवैव अस्त्रगतिः नाम। सुराणां देवानाम् अस्मिन् इदानीं विचार्य कल्पिते विजयाभ्युपाये विजयस्तारकासुरजयः, तत्राभ्युपायश्च सेनानीलाभाय परमेश्वरचित्ताकर्षणं, तत्र। तवैवास्त्रगतिः अस्त्राणां प्राप्तिः, नान्येषामित्यर्थः। नामशब्दः सम्भावनायाम्। अस्मिन् कर्मणि तवैवास्त्रगतिः सम्भाव्यत इत्यर्थः। ततः किमित्यत्राह—त्वं कृती। कृती धन्य इत्यर्थः। धन्यत्वमेवोपपादयति—अनन्यसाधारणमेव कर्म अप्रसिद्धमपि पुंसां यशसे इति। अन-

१. 'रः बीजाङ्कुरः। अ' घ. ङ. पाठः. २. 'त्युप' ख. पाठः.

न्यसाधारणम् अन्येषां साधारणं समानं न भवतीति अनन्यसाधारणम् । एवशब्दः साधारणत्वलेशस्याप्यभावमाह । अन्यैः कदाचिदपि कर्तुमशक्यं कर्मेत्यर्थः । अप्रसिद्धं प्रसिद्धिरहितमपि पुंसां पुरुषाणां यशसे यशः सम्भावयितुं समर्थं भवतीत्यर्थः । अप्रसिद्धं यत्किञ्चित् कर्मापि तस्यैव तत्र सामर्थ्यमिति व्यवस्थिते सति पुंसां यशस्करं भवति । परमेश्वरचित्ताकर्षणलक्षणमिदं तु कर्मान्यैर्दुष्करं सुप्रसिद्धं चेति भवानतिमहतो यशसो भाजनं भविष्यत्येवेति भावः ॥ १९ ॥

**सुराः समभ्यर्थयितार एते**
**कार्यं त्रयाणामपि विष्टपानाम् ।**
**चापेन ते कर्म न चातिहिंस्र-**
**महो यथासि स्पृहणीयवीर्यः ॥ २० ॥**

(प्रकाशिका)

न केवलं भावियशोभाजनतया धन्यस्त्वं, किन्त्विदानीमपि धन्य एवासीत्याह—

**सुरा** इति । सुराः स्वयं वरदाः । त्रयाणामपीति सङ्ख्याशब्दसन्निकर्ष उपादीयमानोऽपिशब्दः सङ्ख्येयस्य सजातीयान्तरं व्यवच्छिनत्ति । नातिहिंस्रमिति तपोमात्रहिंसामनुजानाति । यथाशब्दो योग्यतार्थम्। तस्माद् युक्तमेव स्पृहणीयशक्तिरसीत्यर्थः। क्षीरस्वामी तु 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इति सन्तोष उदाहृतवान् 'अहो बतासि स्पृहणीयवीर्य' इति पाठेन ॥ २० ॥

( विवरणम् )

न केवलं भवतो भावियशोभाजनतया धन्यस्त्वम्, अपि तु इदानीमपि त्वं धन्य एवासीत्याह —

१. 'बतासि' मुद्रितकोशपाठः.

सुरा इति । एते सुराः समभ्यर्थयितारः । एते सगौरवं त्वन्मुखमेवावलोक्य परितो वर्तमानाः सुराः देवाः समभ्यर्थयितारः सम्यगभ्यर्थयितारः याचितारः । याचने सम्यक्त्वं गत्यन्तराभावात् । ये देवाः सर्वेषामपि लोकानां वरदाः, ते त्वामभ्यर्थयन्त इत्यर्थः । प्रयोजनं तु न केवलं देवानामेवेत्याह — त्रयाणामपि विष्टपानां कार्यमिति । त्रयाणामपीत्यपिशब्देन लोकान्तरव्यवच्छेद उक्तः । तारकासुरपरिभूताः सर्वेऽपि लोकास्त्वयैवानुग्राह्याः सञ्जाता इत्यर्थः । एवं सर्वलोकानुग्रहे क्रियमाणे प्राणिहिंसाजनितोऽपि दोषस्तव न सम्भवतीत्याह — ते चापेन कर्म अतिहिंस्रं न चेति । ते तव चापेन धनुषा क्रियमाणं कर्म अतिहिंस्रम् अत्यन्तहिंसाशीलं न च । सर्वेषामपि चापेन क्रियमाणं कर्म शरीरनाशकत्वेन हिंस्रमेव भवति । तव तु तपोमात्रहिंसया नात्यन्तहिंस्रमिति भावः । फलितमाह — त्वं स्पृहणीयवीर्यः असि अहो बत इति । स्पृहणीयमभिलषणीयं वीर्यं यस्य स तथा । ममाप्येवंविधं वीर्यं भूयादिति सर्वैरप्यभिलषणीयवीर्योऽसीत्यर्थः । अभिनन्द्यवीर्योऽसीति वा । अहो इति विस्मये । बतेति सन्तोषे । 'अहो हि च विस्मये' इति, 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इति च सिंहः । त्वद्वीर्यस्वरूपनिरूपणावस्थायां ममापि विस्मयसन्तोषौ जायेते इत्यर्थः । 'अहो यथासी'ति पाठे यथाशब्दो योग्यतायाम् । युक्तमेव स्पृहणीयवीर्योऽसीत्यर्थः ॥ २० ॥

**मधुश्च ते मन्मथ! साहचर्या-**
**दसावनुक्तोऽपि सहाय एव ।**
**समीरणश्चोदयिता भवेति**
**व्यादिश्यते केन हुताशनस्य ॥ २१ ॥**

(प्रकाशिका)

यच्चोक्तं 'सहायमेकं मधुमेव लब्ध्वा' (श्लो. १०) इति, तदपि ते न प्रार्थ्यमित्याह—

**मधुरिति। साहचर्यात् सख्यादित्यर्थः। समीरणः केन व्यादिश्यत इत्यन्वयः। अनयोक्तिभङ्ग्या वसन्तस्य नियोग इति पर्यायोक्तम् ॥ २१ ॥**

(विवरणम्)

अपिच सर्वेषां सर्वेषु कर्मसु भवता ममास्मिन् कर्मणि सहायेन भवितव्यमित्यभ्यर्थिताः सन्तोऽपि प्रत्युपकारलिप्सयैव बन्धवोऽपि सहायतां प्रतिपद्यन्ते। तव तु 'सहायमेकं मधुमेव लब्ध्वा' (श्लो. १०) इत्यत्रोक्तो मधुरुक्तिमात्रमपि नापेक्षते। तस्माद् धन्यएवासीत्याह —

मधुरिति। मन्मथ! असौ मधुः च साहचर्याद् अनुक्तः अपि ते सहायः एव। मन्मथ! हे मदन! असौ तव समीप एव वर्तमानः मधुर्वसन्तः अपिशब्दार्थे चकारः। यस्त्वया पूर्वं पुरारिविजये सहायतया निर्दिष्टः, सोऽपीत्यर्थः। सहैव चरतीति सहचरः, तस्य भावः साहचर्यं, (तस्मात्) सख्यादित्यर्थः। अनुक्तोऽपि अनियुक्तोऽपि। अनेन साहचर्यस्य स्वाभाविकत्वमुक्तम्। तच्च वचनानपेक्षत्वे हेतुः। अत्र प्रतिवस्तूपमामाह — त्वं हुताशनस्य चोदयिता भव इति समीरणः केन व्यादिश्यते इति। हुताशनस्य अग्नेः चोदयिता प्रेरको भव। व्यादेशप्रकारश्चायम्। अत एवाह — इतीति। उक्तप्रकारेणेत्यर्थः। व्यादिश्यते नियुज्यते, न केनापीत्यर्थः। अत्रोक्तिभङ्ग्या वसन्तस्य नियोग एवोक्त इति पर्यायोक्तमलङ्कारः। तेन च प्रतिवस्तूपमायाः संसृष्टिः ॥ २१ ॥

**तथेति शेषामिव भर्तुराज्ञा-**
**मादाय मूर्ध्ना मदनः प्रतस्थे।**
**ऐरावतास्फालनकर्कशेन**
**हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥**

(प्रकाशिका)

नियुक्तस्य वृत्तान्तमाह—

तथेति। तथाशब्दोऽभ्युपगमे। शेषां माल्यादिदानम्। 'माल्याक्षतादिदाने स्त्री शेषे'ति केशवः। प्रतस्थे गन्तुमारभत। आस्फालनमुद्धर्षणार्थं गजाश्वानाम्। हस्तविशेषणं स्पर्शश्लाघ्यताङ्गम्। तदङ्गम्, अर्थात् प्रणामसमये॥ २२॥

(विवरणम्)

अथ महेन्द्रेण तथा नियुक्तस्य मदनस्य प्रवृत्तिमाह—

तथेति। मदनः भर्तुः आज्ञां शेषामिव तथा इति मूर्ध्ना आदाय प्रतस्थे। मदनः कामदेवः भर्तुः स्वामिनः आज्ञां नियोगं शेषां माल्याक्षतादिदानम्। 'माल्याक्षतादिदाने स्त्री शेषा' इति केशवः। तामिव। तथेत्यभ्युपगमवाचकमव्ययम्। मूर्ध्ना नम्रेण शिरसा। आदाय स्वीकृत्य। प्रतस्थे गन्तुमारेभे। अत्राज्ञायाः शेषोपमया मदनस्य तस्यामादरातिशय उक्तः। मदनो महेन्द्राज्ञां प्रस्थानादिसमये बन्धुभिर्दीयमानं माल्याक्षतादिकमिव शिरसा समादाय प्रस्थानोद्यमं चकारेत्यर्थः। शेषां चाज्ञां चादायेति वा। अभ्युपगतनियोगं मदनं प्रति महेन्द्रस्यादरातिशयमाह— इन्द्रः तदङ्गं हस्तेन पस्पर्शेति। इन्द्रो देवेन्द्रः तदङ्गं तस्य मदनस्य अङ्गं शरीरं हस्तेन पस्पर्श हस्तेनैव स्पृष्टवान्। अर्थात् प्रणामसमय इति सिद्धं ति। महेन्द्रहस्तस्य विशेषमाह—ऐरावतास्फालनकर्कशेनेति। ऐरावत आत्मनो वाहनभूतस्य गजस्य आस्फालनेन। गजाश्वानां युद्धारम्भादावुद्धर्षणार्थं यदाहननं तदिहास्फालनशब्देनोच्यते। तेन कर्कशेन कठिनेन। अनेन विशेषणेनात्रापि स्पर्शनस्योद्धर्षणार्थत्वं द्योत्यते॥ २२॥

स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः।

अङ्गव्ययप्रार्थितकर्मसिद्धिः[1]
स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥

(प्रकाशिका)

स इति । अभिमतेनाभिमानविषयभूतेन । अस्मिन् सति किं मे दुर्लभमित्यभिमानः । साशङ्कं किं भविष्यतीति सभयम् । तच्च तस्याः[2] परमेश्वरप्रभावज्ञत्वेन, तच्च पतिव्रतात्वात् । तत एवं चानुयानम्[3], एवंविधेऽस्य जीवितसंशये नैनं जह्यामिति । अङ्गव्ययार्थं वस्तुतः शरीरनाशः प्रयोजनं यथा भवति तथा प्रार्थिता कर्मसिद्धिर्येन । अनेन तस्यानात्मज्ञतां कविः सोपहासमनुसन्धत्ते ॥ २३ ॥

(विवरणम्)

अथ प्रस्थितस्य मदनस्य हरपदप्राप्तिमाह —

स इति । सः हैमवतं स्थाण्वाश्रमं जगाम । सः मदनः हैमवतं हिमवत्सम्बन्धि, हिमवत्प्रस्थगतमित्यर्थः । स्थाणोः शिवस्य आश्रमं जगाम गतोऽभूत् । परमेश्वरपदप्राप्तौ मदनस्य सहायसमृद्धिं दर्शयति — अभिमतेन सख्या माधवेन अनुप्रयातः इति । अभिमतेन अभिमानविषयभूतेन । अस्मिन् सुहृदि मम सन्निधौ वर्तमाने किं मया दुष्करमित्यभिमानस्य पात्रभूतेनेति यावत् । सख्या बन्धुना माधवेन वसन्तेन अनुप्रयातः अनुगतः । पतिदेवता रतिश्च नैनं तत्याजेत्याह — रत्या चेति । अनुप्रयात इति योज्यम् । रतेरनुप्रयाणे हेतुमाह — साशङ्कमिति । अनुप्रयाणक्रियाविशेषणं चेदम् । आशङ्कासहितं यथा भवति तथा अनुप्रयात इत्यर्थः । अत्र पतिव्रतात्वात् परमेश्वरप्रभावज्ञानं, तेन च परमेश्वरतपोविघ्नमाचरन्नयं मे भर्ता कथं भविष्यतीत्याशङ्का, तया चानुप्रयाणम् । एवंविधे महति जीवितसंशये नैनमहं जह्याम् । यद्यसावसून् परित्यक्ष्यति, तर्हि तदैव मत्प्राणनाथमनुकर्तुमनुजानातु मां परमेश्वर इत्यादिचिन्ताकुलया रत्या

१. 'कार्यसि' मुद्रितकोशपाठः. २. 'स चास्याः' क. पाठः. ३. 'वानु' ङ. पाठः.
[...]ग' क. पाठः.

च शनैः शनैरनुगत इत्यर्थः । अथ कवीश्वरः परमेश्वरतपोविघाताय प्रवृत्तस्य मदनस्याज्ञतां स्वयमेव सोपहासमनुसन्दधाति — अङ्गव्ययप्रार्थितकर्मसिद्धिरिति। अङ्गव्ययः शरीरनाशः, तदर्थमेव प्रार्थिता अभ्यर्थिता कर्मणः स्वव्यापारस्य सिद्धिः हरसमाधिभङ्गलक्षणं फलं येन स तथा । यः सकृदपि ध्यातः कीर्तितो वा जन्मसहस्रसञ्चितमपि पापमपहाय मुक्तिमेव प्रयच्छति, यो वा स्वपरिपन्थिनस्त्रिपुरादीनपि क्षणेन भस्मसादकरोत्, तस्य देवस्य समाधिभङ्गे प्रवृत्तस्य मदनस्य स्वशरीरनाशादन्यत् किं वा फलं भविष्यति । तस्मादङ्गव्ययार्थमेवास्य तत्समाधिभङ्गाकाङ्क्षा । अहो महानस्य मोहातिशय इति भावः ॥ २३ ॥

**तस्मिन् वने संयमिनां मुनीनां**
**तपःसमाधिप्रतिकूलवृत्तिः[1] ।**
**सङ्कल्पयोनेरभिमानभूत-**
**मात्मानमादाय मधुर्जजृम्भे[2] ॥ २४ ॥**

(प्रकाशिका)

तत्र मधोर्वृत्तिमाह[3]

**तस्मिन्निति** । संयमिनां जितेन्द्रियाणाम् । तपसि समाधिरेकाग्रता । सङ्कल्पयोनेरभिमानभूतम् । अत्र पुराणवचनं—

"सङ्कल्पप्रभवं कामं रतिं प्रीत्यभिमानिनीम् ।
अभिमानात्मकं तस्य मधुं मदनविग्रहम् ॥
आराधयेयुः क्षितिपाः सस्त्रीका रूपकाङ्क्षिणः ।"

१. 'धेः प्रतिकूलवर्ती ।', २. 'धा' मुद्रितकोशपाठः. ३. 'त्त' ङ. पाठः.

इति । आत्मानमृतुविशेषात्मकं स्वभावमित्यर्थः । जजृम्भे पल्लवकुसुमादिस्वलिङ्गबाहुल्येन प्रकटोऽभूदित्यर्थः ॥ २४ ॥

(विवरणम्)

अथ कामप्रवृत्तेरुद्दीपनपूर्वकत्वाद् 'उद्दीपनानि माल्यर्तुचन्दनेन्दूदयादयः ।' इति वसन्तस्याप्युद्दीपनत्वादादौ तत्प्रवृत्तिमाह तस्मिन्नित्यादिभिर्दशभिः श्लोकैः[2]—

तस्मिन्निति । मधुः सङ्कल्पयोनेः अभिमानभूतम् आत्मानम् आदाय तस्मिन् वने जजृम्भे । मधुर्वसन्तः सङ्कल्पयोनेः कामस्य[3] अभिमानभूतं, तस्मिन् सति किं मया दुष्करमित्यभिमानमेव मूर्तिमवलम्ब्यावस्थितमित्यर्थः । अत्र पुराणवचनं—

"सङ्कल्पप्रभवं कामं रतिं प्रीत्यभिमानिनीम् ।
अभिमानात्मकं तस्य मधुं मदनविग्रहम् ॥
आराधयेयुः क्षितिपाः सस्त्रीका रूपकाङ्क्षिणः ।"

इति । आत्मानं स्वरूपम् आदाय स्वीकृत्य, ऋतुस्वभावमादायेत्यर्थः । तस्मिन् वने स्थाणुतपोवने । वनशब्देन वसन्तविजृम्भणाधिकरणत्वयोग्य(तां) दर्शयति । जजृम्भे मदनहृदयानुरूपं स्वरूपमादाय हरतपोवने कुसुमपल्लवकोकिलकूजितादिलिङ्गबाहुल्येन प्रकटोऽभूदित्यर्थः । मधोः स्वभावमाह— संयमिनां मुनीनां तपःसमाधिप्रतिकूलवृत्तिरिति । संयमो निगृहीतेन्द्रियत्वमस्त्येषामिति संयमिनः, तेषां जितेन्द्रियाणामित्यर्थः । मुनीनां महर्षीणां तपसि यः समाधिः चित्तैकाग्र्यं तस्य प्रतिकूला विरोधिनी वृत्तिर्यस्य स तथा । अनेन मधोर्मुनिसामान्यसमाधिभेदनसामर्थ्यप्रतिपादनेन परमेश्वराकर्षविषयः प्रयासो निष्फल एवेति व्यज्यते । अन्यथा मुनिशब्दमपहाय तपःसमाधिप्रतिकूलवृत्तिरित्येवोच्येत ॥ २४ ॥

१. 'मिति । वि' ङ. पाठः. २. 'कैः—म' घ. ङ. पाठः. ३. 'मदेवस्य' ङ. पाठः पत्समा' ङ. पाठः. ५. 'दे' घ. ङ. पाठः. ६. 'रवि' घ. ङ. पाठः.

कुबेरनाथां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग् दक्षिणा गन्धवहं मुखेन
व्यलीकनिःश्वासमिवोत्ससर्ज ॥ २५ ॥

(प्रकाशिका)

तत्प्रकारमाह —

कुबेरनाथामिति । समयं गमनकालम् । मुखेन पुरोभागेन । व्यलीकमपराधः । अत्रोदीच्यां परपरिग्रहभूतप्रतिनायिकात्वम्, उष्णरश्मौ नायकत्वं, गमने नायकव्यापारविशेषः, नियतकालविलङ्घने संविद्विलङ्घनम्, अवाच्यां खण्डितनायिकात्वं चारोप्यत इति समासोक्तिः । तन्मूला चेयं गन्धवहे व्यलीकनिःश्वासोत्प्रेक्षा । मुखोपचारश्च तदङ्गम् । न चात्रोपमा युक्ता, नायिकात्वाद्यारोपस्याध्यवसायं प्रत्यनुकूलत्वाद्, अध्यवसायश्चोत्प्रेक्षेति ॥ २५ ॥

(विवरणम्)

अथ वसन्तागमनकोलाहलं सविस्तरं वक्तुमुपक्रान्तः प्रथमं मलयमारुतप्रवृत्तिं वर्णयति —

कुबेरेति । उष्णरश्मौ समयं विलङ्घ्य कुबेरनाथां दिशं गन्तुं प्रवृत्ते दक्षिणा दिग् मुखेन गन्धवहम् उत्ससर्ज । उष्णा रश्मयः किरणाः यस्य तस्मिन् आदित्ये समयं पूर्वव्यवस्थापितं गमनकालं विलङ्घ्य अक्रमेण वसन्तागमनादतिक्रम्य । कुबेरो वैश्रवणो नाथोऽधिपो यस्याः ताम् उत्तरां दिशं गन्तुं प्रवृत्ते गमनाय कृतसन्नाहे सति दक्षिणा दिग् मुखेन पुरोभागेन । गन्धं वहतीति गन्धवहो* वायुः तम् उत्ससर्ज उत्सृष्टवती । अत्रोत्प्रेक्षते — व्यलीकनिःश्वासमिवेति । व्यलीकमपराधः । 'पीडार्थेऽपि व्यली-

१. 'गुप्तां दि' मुद्रितकोशपाठः.

* गन्धस्य वह इति पचाद्यजन्तेन वहशब्देन विग्रहो न्याय्यः ।

कं स्यादि'त्यमरः । अपिशब्दादपराधेऽपि तद्व्याख्यां । प्रियतमकृतापराधनिमित्तं दीर्घनिःश्वासमिव । अत्र कुबेरनाथामिति विशेषणेन स्त्रीलिङ्गत्वेन च परपरिग्रहभूतप्रतिनायिकात्वमुदीच्यां प्रतीयते । समयं विलङ्घ्य गन्तुं प्रवृत्त इत्यनेन उष्णरश्मौ तथाविधनायकत्वम् अत एव दक्षिणस्यां दिशि खण्डितनायिकात्वं चेति समासोक्तिः । नायकपक्षे समयशब्दः संविद्वाचकः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । समासोक्तिमूला च गन्धवहे व्यलीकनिःश्वासोत्प्रेक्षा । मुखोपचारः पुनरङ्गमुत्प्रेक्षायाः । अत्रोत्प्रेक्षासमासोक्त्योः सङ्करः । 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति'रिति तल्लक्षणम् ॥ २५ ॥

**असूत सद्यः कुसुमान्यशोकः**
**स्कन्धात् प्रभृत्येव सपल्लवानि ।**
**पादेन नापैक्षत सुन्दरीणां**
**सम्पर्कमाशिञ्जितनूपुरेण ॥ २६ ॥**

(प्रकाशिका)

असूतेति । सद्यः अपक्रमात् । स्कन्धात् प्रभृति, सर्वत इत्यर्थः । 'ततः प्रभृती'ति भाष्यकारवचनात् प्रभृतिशब्दयोगे पञ्चमी । सपल्लवानि, 'कुसुमजन्म ततो नवपल्लव' इति क्रमो नात्रासीदित्यर्थः । पादेनेति । अन्यदा ऋतोः क्रमादाप्याय्यमानबलत्वेन सहकार्यपेक्षा स्यात् । इदानीं तु सद्य उपलब्धबलत्वे सा नासीदित्यर्थः । पादविशेषणेन इतिकर्तव्यताविशिष्टपादसम्पर्ककार्यत्वं पुष्पोद्गमस्य ध्वनितम् । अत्र पादसम्पर्कक्रियानिषेधेऽपि प्रसिद्धतत्कार्यभूतपुष्पोद्गमविभावनाद् विभावनाख्यालङ्कारः ॥

१. 'ख्यायाम् । प्रि' ख. पाठः. २. 'च्याः' ङ. पाठः. ३. 'सि' मुद्रितकोशपाठः. ४. 'अक्रमम् ।' ङ. पाठः. ५. 'तीति स' ङ. पाठः. ६. 'ब्धत्वे' घ. पाठः.

(विवरणम्)

अथाशोकपुष्पोद्गमं वर्णयति —

असूतेति । अशोकः सद्यः स्कन्धात् प्रभृत्येव कुसुमानि असूत । अशोकः अशोकतरुः सद्यः अक्रमं स्कन्धात् प्रभृति स्कन्धदेशादारभ्य, सर्वत इत्यर्थः । आदौ शाखाग्रे काचिन्मञ्जरी सञ्जाता, पुनश्च शाखान्तर इत्यादिक्रममतिक्रम्य स्कन्धदेशादारभ्य सर्वेष्वप्यवयवेषु युगपदेव कुसुमानि बभूवुरित्यर्थः । 'ततः प्रभृती'ति भाष्यकारवचनात् प्रभृतिशब्दयोगे स्कन्धादिति पञ्चमी । एवशब्देन कुसुमपल्लवरहितस्यांशस्याभाव उक्तः । कुसुमानि पुष्पाणि असूत उत्पादितवान् । अपिच 'कुसुमजन्म ततो नवपल्लवं'[1] इत्यादिषु प्रसिद्धः क्रमोऽपि तत्र नासीदित्याह — सपल्लवानीति पल्लवसहितानि । अशोकतरुः सद्य एव कुसुमपल्लवैराचितोऽभूदित्यर्थः । ऋतोरक्रमपरिपूर्तिः क्रमातिक्रमे हेतुरित्यवसेयम् ।

"आलिङ्गनात् कुरवको बकुलो मुखशीधुना ।
कामिनीनां पदाघातादशोकः पुष्प्यति द्रुतम्[2] ॥"

इत्यादिवचनसिद्धः सहकारिनियमोऽपि वसन्ते मूर्तिमति स्वयमेवागते तत्र नासीदित्याह — सुन्दरीणां पादेन सम्पर्कं नापैक्षतेति । सुन्दरीणां सर्वावयवसुन्दरीणाम् । अनेनान्यासां तत्रानुपयोगित्वमुक्तम् । पादेन चरणेन सम्पर्कं संयोगं नापैक्षत नापेक्षते स्म । इतः पूर्वं चरणस्यापीतिकर्तव्यतांशोऽस्तीत्याह— आशिञ्जितनूपुरेणेति । आभीक्ष्ण्येन शिञ्जितं[3] शब्दितं नूपुरं मञ्जीरं यस्य तेन । तत्कालविशेषणं चेदम् । अत्र कामिनीसम्पर्करूपप्रसिद्धकारणविरहेऽपि पुष्पोद्गमरूपकार्योत्पत्तिप्रतिपादनाद् विभावनालङ्कारः । सा चात्रानुक्तनि-(युक्ता?मित्ता) ॥ २६ ॥

१. 'वम् इ' क. ख. ग. घ. पाठः. २. 'म इ' ङ. पाठः. ३. 'त नू' क. ख. ग. घ. पाठः.

**सख्युः प्रवालोद्गमचारुपत्रे**
**नीते समाप्तिं नवचूतबाणे।**
**निवेशयामास मधुर्द्विरेफान्**
**नामाक्षराणीव मनोभवस्य ॥ २७ ॥**

(प्रकाशिका)

**सख्युरिति** । उद्गमशब्दो द्रव्यं लक्षयति, करिदन्तच्छेदकान्त इतिवत् । अक्लिष्टताप्रतीतिः फलम् । वाजरचनायां कृतायां नामाक्षरनिवेशनमिति लोकक्रमः । सख्युर्मनोभवस्येत्यन्वयः ॥ २७ ॥

(विवरणम्)

चूतपुष्पोद्गमं वर्णयति —

सख्युरिति । मधुः समाप्तिं नीते नवचूतबाणे द्विरेफान् निवेशयामास । मधुर्वसन्तः समाप्तिं सम्पूर्णतां नीते प्रापिते नवचूतबाणे नूतने चूतकुसुम एव बाणे शरे । अधिकरणसप्तमी चेयम् । द्विरेफान् मधुकरान् निवेशयामास निवेशितवान् । अत्रोत्प्रेक्षते — सख्युः मनोभवस्य नामाक्षराणीवेति । सख्युः निजपरमसखस्य मनोभवस्य कामदेवस्य नामाक्षराणि नामद्योतकान्यक्षराणीव । अक्षराणां मषीरूपितत्वेन वर्णसाम्यं सन्निवेशसाम्यं चोत्प्रेक्षाहेतुः । उद्दीपनत्वप्रतीतिः फलम् । चूतपुष्परूपस्य बाणस्य तत्किसलयरूपं पत्रमप्याह — प्रवालोद्गमचारुपत्रे इति । अत्रोद्गमशब्द उद्गमनक्रियावाचकोऽपि उद्गमनक्रियायाः पत्रत्वानुपपत्तेः कार्यकारणभावसम्बन्धादुद्गतं द्रव्यं लक्षयति । किसलयानां तत्कालोपपन्नत्वप्रतिपादनमुखेनातपादिभिरपरिक्लिष्टताप्रतीतिश्च फलम् । उद्गतं प्रवालमेव चारु सुन्दरं पत्रं यस्य तस्मिन् । अत्र किसलयानां सन्निवेशादिसाम्यात् पत्रत्वरूपणम् । उत्तेजनवाजरचनादिभिः सम्पूर्णतां नीते हि शरे नामाक्षराणि लिख्यन्त इति लोकप्रसिद्धः क्रमः समाप्तिं नीते इत्यनेनोक्तः ॥ २७ ॥

१. 'घः' मुद्रितकोशपाठः. २. 'त' क. ख. ग. घ. पाठः.

वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥

(प्रकाशिका)

वर्णप्रकर्ष इति । अत्र कर्णिकारं तथात्युज्ज्वलमपि निर्गन्धमभूद्, यथा सहृदयैरदूयतेति वाक्यं विपरिणमनीयम् । अन्यथा अर्थान्तरन्यासघटना न स्यात् । तदानीं कर्णिकारस्वरूपरामणीयकं तथा यूनां हृदयहारि जातं, यथा तदनुसन्दधतां तेषां हन्त विधातृदौश्शील्यादेतद्रूपानुरूपस्य सौरभस्य लेशोऽपि नात्रासीदिति खेदोऽभवदिति तात्पर्यं, शृङ्गारोद्दीपनवर्णनस्य प्रकृतत्वात् ॥ २८ ॥

(विवरणम्)

कर्णिकारपुष्पोद्गमं वर्णयति —

वर्णेति । कर्णिकारं वर्णप्रकर्षे सति निर्गन्धतया चेतः दुनोति स्म । कर्णिकारं कर्णिकारकुसुमं वर्णप्रकर्षे वर्णस्य प्रकर्षे उत्कर्षे कान्त्यतिशये सत्यपि निर्गन्धतया निर्गतो गन्धो यस्मात् तन्निर्गन्धं, तस्य भावस्तत्ता, तया सौरभ्याभावेन हेतुनेत्यर्थः । चेतः चित्तं दुनोति स्म अपीडयत् । सहृदयानामिति शेषः । नात्र काचिदनुपपत्तिरित्याह — विश्वसृजः प्रवृत्तिः गुणानां सामग्र्यविधौ प्रायेण पराङ्मुखीति । विश्वं सृजतीति विश्वसृग् ब्रह्मा, तस्य । प्रवृत्तिः व्यापारः गुणानां सामग्र्यविधौ सम्पूर्णताविधाने प्रायेण प्रायशः पराङ्मुखी विमुखी । अस्य वाक्यस्य कर्णिकारकुसुमानां निर्गन्धतया सहृदयहृदयपीडाविधाने तात्पर्यमिति प्रतिभाति । तच्चायुक्तम् । तथा सति प्रकृष्टशृङ्गारोद्दीपनवर्णनानुगुणत्वभङ्गप्रसङ्गात् । तस्मादेवमत्र तात्पर्यं वर्णनीयम् । कर्णिकारकुसुमं तथा नामात्युज्ज्वलं यूनां हृदयहारि जातं, यथा तेषां निर्ग-

१. 'रघ' ङ. पाठः.

न्धतामवधार्य सहृदयहृदयैर्दूयत इति पूर्वार्धे वाक्यार्थः । तथा च सति सर्वे- पदार्थेषु विधातृदौश्शील्यादेवमेव गुणसामग्र्याभाव इति नात्र काचिदनुप- पत्तिरित्यर्थान्तरन्यासोऽपि सुघटो भविष्यति ॥ २८ ॥

बालेन्दुवक्राण्यविकासभावाद्
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९ ॥

(प्रकाशिका)

बालेन्दुवक्राणीति । सद्यो नखक्षतानीत्यन्वयः, सद्यः समाग- तानामिति वा । प्रवासप्रत्यागमने नखक्षतविधानात् । अत्र समासोक्त्यु- त्प्रेक्षे ॥ २९ ॥

(विवरणम्)

पलाशकुसुमोद्गमं वर्णयति—

बालेति । पलाशानि बभुः । (पलाशानि) पलाशकुसुमानि बभुः शुशु- भिरे । अत्रोत्प्रेक्षते—वसन्तेन सद्यः समागतानां वनस्थलीनां नखक्षतानी- वेति । वसन्तेन सद्य एव समागतानां सङ्गतानाम् । प्रवासप्रत्यागमनसमये हि नखक्षतानि बहुलानि भवन्तीति सद्य इत्युक्तम् । वनस्थलीनां वनराजीनां नखक्षतानि नखव्रणानीव । सद्यो नखक्षतानीति वान्वयः । सद्यः समुत्पन्नानि नखक्षतानीवेत्यर्थः । तेषामेवातिलोहितत्वोपपत्तेः । पलाशकुसुमानां नखक्षत- त्वोत्प्रेक्षायां हेतुमाह—बालेन्दुवक्राणीत्यादिना विशेषणद्वयेन । अविकासभा- वाद् बालेन्दुवक्राणीति । अविकासभावाद् विकासराहित्याद् बालचन्द्रवद्व- क्राणि कुटिलानि । अविकसितानामेव वक्रत्वाद्, वक्राणामेव नखक्षतसादृ- श्यादविकासभावादित्युक्तम् । तथा अतिलोहितानि अत्यन्तरक्तवर्णानि ।

१. 'त्रापि स' ङ. पाठः.

नखक्षतान्यपि बालेन्दुवक्राणि भवन्ति । अचिरोद्गतत्वे सत्यतिलोहितानि च भवन्ति। अत्र चिरकालसङ्गतनायिकानायकवृत्तान्तप्रतीतेः समासोक्तिरलङ्कारः। उत्प्रेक्षा च तदङ्गम् ॥ २९ ॥

**लग्नद्विरेफाञ्जनभक्तिचित्रं[1]**
**मुखे मधुश्रीस्तिलकं प्रकाश्य ।**
**रागेण बालारुणकोमलेन**
**चूतप्रवालोष्ठमलञ्चकार ॥ ३० ॥**

(प्रकाशिका)

लग्नेति । मुखे प्रारम्भे । तिलकः श्रीमत्संज्ञवृक्षविशेषः । अरुणः सूर्यः । अत्र मुखतिलकरागशब्दानां वदनविशेषकलाक्षावाचित्वेन लिङ्ग-विशेषेण च प्रसाधनप्रवृत्तनायिकाप्रतीतौ समासोक्तिः । तामेव च रूप-कमुपस्करोति ॥ ३० ॥

(विवरणम्)

तिलककुसुमोद्गमं चूतपल्लवोद्भवं च युगपद् वर्णयति—

लग्नेति । मधुश्रीः मुखे तिलकं प्रकाश्य बालारुणकोमलेन रागेण चूत-प्रवालोष्ठम् अलञ्चकार । मधुश्रीः वसन्तलक्ष्मीः मुख एव मुखे प्रारम्भे वदने च तिलकमेव तिलकं तिलककुसुमं विशेषकं च । 'तिलकः क्षुरकः श्री-मानि'ति, 'तमालपत्रतिलकचित्रकाणि विशेषकमि'ति चामरः। प्रकाश्य अति-शयेन सम्पाद्य । बालः अभिनवोदितः अरुणः सूर्यः । 'अरुणो भास्करेऽपि स्यादि'त्यमरः । बालश्चासावरुणश्चेति बालारुणः, तद्वत्कोमलेन मनोहरेण रागेणैव रागेण रक्तवर्णेन लाक्षारसेन च । 'रक्तवर्णेऽनुरागे च रागो लाक्षा-रसेऽपि चे'ति भोजः । चूतस्य प्रवालं चूतप्रवालं, चूतप्रवालमेवोष्ठं चूतप्रवा-लोष्ठम् अलञ्चकार अलङ्कृतवती[2] । मुखे तिलकयोग्यतां दर्शयति—लग्न-

१. 'त्रं' मुद्रितकोशपाठः. २. 'क्षः । अ' ख. घ. ङ. पाठः.

फाञ्जनभक्तिचित्रे इति। लग्नैः सक्तैः द्विरेफैः भ्रमरैरेवाञ्जनैः कृतया भक्त्यैव भक्त्या भागेन विन्यासेन च पत्रभङ्गेन च चित्रे आश्चर्यभूते । अत्र प्रवालादीनामोष्ठत्वादिरूपणानि शब्दैरेवोक्तानि । मधुश्रियः प्रसाधनप्रवृत्तनायिकात्वरूपणं पुनरर्थसामर्थ्यात् प्रतीयते इत्येकदेशविवर्तिरूपकमिदम् । 'श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तदि'ति । अरुणाचलनाथस्तु—मुखतिलकरागशब्दानां वदनविशेषकलाक्षावाचित्वेन लिङ्गविशेषेण च प्रसाधनप्रवृत्तनायिकात्वप्रतीतौ समासोक्तिः। तामेव च रूपकमुपस्करोतीत्युक्तवान्। तत्कथमिति (न) ज्ञायते, एकदेशविवर्तिरूपकेणैव वसन्तलक्ष्म्या नायिकात्वप्रतीतौ सिद्धायां समासोक्त्या निरर्थकत्वात् । एतदलङ्कारसर्वस्वे प्रपञ्चितम् ॥ ३० ॥

**मृगाः प्रियालद्रुममञ्जरीणां**
**रजःकणैर्विघ्नितदृष्टिपाताः ।**
**मदोद्धताः प्रत्यनिलं विचेरु-**
**र्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥**

(प्रकाशिका)

**मृगा** इति । 'राजादनः प्रियालः स्यादि'ति सिंहः । मर्मरो मर्मरशब्दयुक्तः पत्रमोक्षो यासाम् । तदनन्तरं हि नवदलोद्गमः । मदोद्धतत्वात् प्रत्यनिलगमनम् ॥ ३१ ॥

(विवरणम्)

इत्थं वसन्तागमनवेलायां स्थावराणां विकारं प्रतिपाद्य जङ्गमानां विकारमप्याह मृगा इत्यादिभिस्त्रिभिः श्लोकैः —

**मृगा** इति । मृगाः मदोद्धताः प्रत्यनिलं वनस्थलीः विचेरुः । मृगाः एणादयः मदोद्धताः मदेनोद्धताः अतिगर्विताः सन्तः । प्रत्यनिलमित्यव्य-

१. 'भ्यात्' क. पाठः.

यीभावः। अनिलो वायुः। अनिलमभिमुखीकृत्येत्यर्थः। वनस्थलीः वनभूमीः। अत्यन्तसंयोगे द्वितीया। विचेरुः विविधं चेरुः। अत्र मदोद्धतत्वमनिलाभिमुखप्रसरणे हेतुः। मदोद्धतानां मृगाणां स्वभावश्चायम्। अनिलाभिमुखगमनस्य फलमाह — प्रियालद्रुममञ्जरीणां रजःकणैः विघ्नितदृष्टिपाता इति। प्रियालसंज्ञो द्रुमः प्रियालद्रुमः। 'राजादनः प्रियालः स्यादि'त्यमरः। तेषां मञ्जर्यः प्रियालद्रुममञ्जर्यः। तासां रजःकणै रजसां रेणूनां कणैः लेशैः। 'लवलेशकणाणवः' इत्यमरः। विघ्निताः सञ्जातविघ्नाः दृष्टिपाता नेत्रप्रचाराः येषां ते तथा। रजःकणप्रतिहतावलोकनसामर्थ्या इत्यर्थः। मदोद्धतानां स्वनाश एव फलमिति भावः[1]। वनस्थलीनां तत्कालविशेषणमाह — मर्मरपत्रमोक्षाः इति। मर्मरो मर्मरध्वनियुक्तः पत्राणां मोक्षो मोचनं यासां तास्तथा। 'मर्मरः पर्णशब्दे स्यादि'ति भोजः। मृगाणां धावने पादाभिघातवशात् प्रसार्यमाणानां पर्णानां मर्मरध्वनिरत्र विवक्षितः। अथवा मर्मरः पत्रमोक्षो यासामिति विग्रहः। अत्र तु शुष्कतया वृक्षात् पततां पर्णानां ध्वनिर्विवक्षितः। वसन्ते हि पुराणानि पर्णानि पतन्ति, अभिनवानि चोत्पद्यन्ते। अत्र स्वभावोक्तिः ॥३१॥

**चूताङ्कुरास्वादकषायकण्ठः**
**पुंस्कोकिलो यन्मधुरं चुकूज।**
**मनस्विनीमानविघातदक्षं**
**तदेव जातं वचनं स्मरस्य ॥ ३२ ॥**

(प्रकाशिका)

चूताङ्कुरेति। कषायकण्ठो रक्तकण्ठः। रागश्च सुस्वरता। 'कषायस्तुवर' इत्युपक्रम्य 'रक्त' इति केशवः। यच्चुकूज कूजनं यदित्यर्थः। तत् कूजनं तथाविधं स्मरवचनमासीदित्यर्थः। तेन तस्योद्दीपनातिशय उक्तः। तथाहि — सार्थको निरर्थकादर्थक्रियाङ्गम्[4]। स च विदग्धमयु-

१. 'ति सिंहः।' ङ. पाठः. २. 'पमा' घ. ङ. पाठः. ३. 'स्त्वनेन' ङ. पाठः. ४. 'र्थः क्रि' ख, ग, घ. पाठः.

त्कश्चित्तमावर्जयति । तत्रापि सुहृत्त्वेन विशेषः । विदग्धः सुहृच्च नान्योऽस्ति, यथायं कामिनां स्मरः । तस्यापि मानिनीमानशैथिल्याभिप्रायं वचः सुतरामुद्दीपनम् ॥ ३२ ॥

(विवरणम्)

कोकिलकूजितं वर्णयति —

चूतेति । पुंस्कोकिलः मधुरं चुकूज यत् तदेव स्मरस्य मनस्विनीमानविघातदक्षं वचनं जातम् । पुमान् कोकिलः पुंस्कोकिलः । कूजनसामर्थ्यप्रतिपादनार्थं पुंस्त्वविशेषणम् । मधुरमिति कूजनक्रियाविशेषणम् । चुकूज कूजनं कृतवान् यत्, तदेव कूजनं स्मरस्य मदनस्य मनस्विनीनां प्रणयिनीनां मानस्याभिमानस्य विघाते उन्मूलने । अत्र मनस्विनीत्वं मानोत्पत्तौ हेतुः । दक्षं विदग्धं वचनं वाक्यं जातम् । वसन्तागमनवेलायां यत् कोकिलकूजनं जातं, तदेव प्रत्युपस्थितं तृतीयंपुरुषार्थं मा परित्यजत, अलमभिमानविलम्बनेनेत्यादिरूपं मदनवचनमासीदित्यर्थः। अनेन कोकिलालापस्योद्दीपनत्वं प्रतिपादितम्। निरर्थकस्यापि कोकिलालापस्य कामिजनबन्धुभूतस्य विदग्धतरस्य स्मरस्य (च?) प्रियतमाभिमानविघातदक्षवचनत्वेन रूपणाद्रूपकम् । अत्र स्वरमाधुर्यमुद्दीपनत्वे हेतुः । स्वरमाधुर्यहेतुमाह — चूताङ्कुरास्वादकषायकण्ठ इति । चूतानामङ्कुरस्याभिनवोद्भिन्नस्य पुष्पस्यास्वादेनादनेन कषायो रक्तः कण्ठो यस्य स तथा । 'कषायस्तुवरे' इत्यारभ्य 'रक्ते' इति केशवः । रक्तत्वं च सुस्वरता। सुस्वरकण्ठ इत्यर्थः । अनेन चूताङ्कुरास्वादनस्य गलान्तरोद्धतदोषनिरासकत्वमुक्तम् ॥ ३२ ॥

हिमव्यपायाद् विशदाधराणा-
मापाण्डरीभूतमुखच्छवीनाम् ।

१. 'रञ्जय' क. ग. पाठः. २. 'यं पु' ङ. पाठः. ३ 'मिनीज' ख. पाठः.

स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥

(प्रकाशिका)

हिमेति । विशदाधराणाम्, अलक्तकार्पणविरहात् । स्वाभाविककान्तियुक्तानामेव मुखानामापाण्डरीभावः, कुङ्कुमविरहात् । स्वेदोद्गम आतपकृतः। पत्रेषु कपोलगतेषु। विशेषकेषु ललाटगतेषु। पदकरणमर्थादुच्छ्वासनम् ॥ ३३ ॥

(विवरणम्)

हिमवच्छिखरवर्तिनीनां किम्पुरुषाद्यङ्गनानामपि तत्कालसुलभं विशेषं वर्णयति—

हिमेति । किम्पुरुषाङ्गनानां पत्रविशेषकेषु स्वेदोद्गमः पदं चक्रे । किम्पुरुषाङ्गनानां किन्नरस्त्रीणां पत्रेषु विशेषकेषु च कपोलगतेषु पत्रभङ्गेषु ललाटतटघटितेषु तिलकेषु च स्वेदोद्गमः उद्भूतस्वेदः पदं चक्रे स्थानं कृतवान् । आतपकृताः स्वेदबिन्दवः किन्नराङ्गनानां पत्रभङ्गतिलकेषु किञ्चिदुच्छूनताम[1]जनयन्नित्यर्थः । स्वाभाविकमङ्गसौन्दर्यमपि तासां तदानीमभिव्यक्तमासीदिति विशेषणद्वयेन दर्शयति — हिमव्यपायादित्यादिना । हिमव्यपायाद् विशदाधराणां हिमस्य तुषारस्य व्यपायादपगमाद् विशदो निर्मलोऽधरो यासां तासाम् । शीतकाल एव हि स्त्रीणामधरेष्वलक्तकरसार्पणम्, अलक्तकस्योष्णस्वभावत्वात् । अलक्तकरसाभावात् स्वाभाविकेन रागेण मनोहराधराणामित्यर्थः । विशेषणान्तरमाह — आपाण्डरीभूतमुखच्छवीनामिति । अत्रापि हिमव्यपाय एव हेतुः । उष्णस्वभावकुङ्कुमार्पणाभावादापाण्डरीभूता मुखच्छविर्यासां तासाम् । मुखेऽपि स्वभाविकी शोभैव प्रकटाभूदिति भावः । अनेन श्लोकेन तासां तत्कालसुलभशोभातिशय उक्तः ॥ ३३ ॥

१. 'च्छून' ग. पाठः.

तपस्विनः स्थाणुवनौकसस्ता-
माकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशा मनसां बभूवुः ॥ ३४ ॥

(प्रकाशिका)

एवंविधामुद्दीपनसम्पदं कार्यमुखेन स्फारयति —

**तपस्विन** इति । मत्वर्थेनावासविशेषणेन च विकारानुपपत्तिः । आकालिकीं सद्यःसमुद्भवसमाप्तिकाम् । 'आकालिकडाद्यन्तवचने' (५. १. ११४) इत्यकालशब्दस्याकालिकडादेशः । प्रयत्नः प्रत्याहारादिः । विक्रिया हर्षादिरतिर्वासनारूपा । यदाह —

'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥"

इति । सपरिग्रहाणां च तादात्विकी रतिः ॥ ३४ ॥

(विवरणम्)

इत्थमुपवर्णितस्योद्दीपनस्य कामदेवाभिमते कार्ये प्रवृत्तिं प्रतिपादयति—

**तपस्विन** इति । स्थाणुवनौकसः तपस्विनः आकालिकीं तां मधुप्रवृत्तिं वीक्ष्य कथञ्चिद् मनसाम् ईशाः बभूवुः । स्थाणोः शिवस्य वनं तपोवनमेव ओको गृहं येषां ते तपस्विनः वानप्रस्थाः आकालिकीं सद्यस्समुद्भवसमाप्तिमतीम् । 'आकालिकडाद्यन्तवचने' (५. १. ११४) इत्य-

१. 'वसरवि' क. ख. ग. पाठः. २. 'विनाशाम्' क. पाठः. ३. 'दी र' क. ग. घ. पाठः. ४. 'मन्दम' क. पाठः.

कालशब्दस्याकालिकडादेशः । पूर्वव्यवस्थापितकालात् प्रागेव सञ्जातां सद्यो विनाशवतीं चेत्यर्थः । तां पूर्वप्रतिपादितां मधोर्वसन्तस्य प्रवृत्तिं विजृम्भणरूपं व्यापारं वीक्ष्य सम्यगवलोक्य कथञ्चिद् यथाकथञ्चिद् मनसामीशाः स्वामिनो बभूवुः । अत्र तपस्विन इति मतुबन्तेन स्थाणुवनौकस इति परमेश्वरसान्निध्यप्रतिपादनेन च मनोविक्रियाहेतुः प्रतिपादितः । आकालिकत्वादनिरूपि(तत्वा? ता)गतत्वेन तु मनोविकारोत्पत्तौ हेतुः प्रतिपादितः । अत एव कथञ्चिदीशा बभूवुरित्युक्तम् । मनोविकारप्रशमनप्रकारमाह — प्रयत्नसंस्तम्भितविक्रियाणामिति । प्रयत्नैः प्रत्याहारादिरूपैर्व्यापारैः संस्तम्भिता सम्यक् स्तम्भिता विक्रिया वासनारूपेण वर्तमाना हर्षादिर्येषाम् । सपरिग्रहाणां तु तादात्विकी रतिः । हर्षादिरतीनां वासनारूपेण वर्तमानत्वमुक्तं शाकुन्तले—

"रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥"

इति । महर्षयः कृतबहुविधप्रशस्ततपस्त्वात् परमेश्वरसान्निध्यवशाच्च प्राणायामप्रत्याहारादिभिरात्मनो मनोविकारं कथमपि निवारयामासुरित्यर्थः ॥ ३४ ॥

**तं देशमारोपितपुष्पचापे**
**रतिद्वितीये मदने प्रपन्ने ।**
**काष्ठागतस्नेहरसानुविद्धं**
**द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥**

(प्रकाशिका)

अथ मदनागमनस्य प्रभावं वर्णयति —

१. 'पकत्वा' ग. घ. पाठः. २. 'त्तौ हे' ग. पाठः.

तमिति । आरोपितपुष्पचाप इति संरम्भः । रतिद्वितीय इति तस्याः प्रीत्यभिमानित्वाद् अस्य सहायसम्पत् । काष्ठामुत्कर्षं गतं काष्ठागतम् । 'द्वितीया श्रिता —' (२. १. २४) इत्यादिना समासः । तत्कालभावि चैतद्विशेषणम् । काष्ठागतत्वाच्च स्नेहो[1] रसः रसनियतत्वात्, तेनानुविद्धम् । तद्विजृम्भानुरूपं द्वन्द्वानि जङ्गमस्थावराणि भावं सम्भोगेच्छाम् । क्रियया अनुभावरूपया ॥ ३५ ॥

(विवरणम्)

इत्थं वसन्तागमनप्रभावमुक्त्वा मदनागमनप्रभावमेवाह —

तमिति । रतिद्वितीये मदने तं देशं प्रपन्ने द्वन्द्वानि भावं क्रियया विवव्रुः । रतिद्वितीये रतिरेव द्वितीया यस्य तस्मिन् । अनेन मदनस्य तस्यां प्रीत्यभिमानित्वात् सहायसम्पदुक्ता । भावमभिलाषं, सम्भोगेच्छामित्यर्थः । क्रियया इच्छायाः कार्यभूतेन व्यापारेण, आलिङ्गनादिभिरित्यर्थः । विवव्रुः प्रकाशयामासुः । मदनागमनानन्तरं सर्वाणि मिथुनान्यपि स्वात्मनि सञ्जातां सम्भोगेच्छां तत्कालभूतैर्व्यापारैः प्रकाशयामासुरित्यर्थः । मदनस्योद्योगमाह — आरोपितपुष्पचाप इति । आरोपितं सज्जीकृतं पुष्पमयं चापं शरासनं येन तस्मिन् । भावस्योत्कर्षमाह — काष्ठागतस्नेहरसानुविद्धमिति । काष्ठामुत्कर्षम् । 'काष्ठोत्कर्षे स्थितौ दिशी'त्यमरः । गतेन प्राप्तेन । 'द्वितीया श्रितातीत–'(२.१.२४)इत्यादिना समासः । तत्कालविशेषणं चेदम् । स्नेह एव रसनियतत्वाद्रसः स्नेहरसः, स्नेहातिशयो वा, तेनानुविद्धं विजृम्भितमित्यर्थः । द्वन्द्वानि मदनागमनवशात् परमकाष्ठामधिष्ठितं परस्परानुरागं तत्प्रकाशकैः कर्मभिः प्रकाशयाञ्चक्रुरित्यर्थः ॥ ३५ ॥

मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्तमानः ।

1. 'हे' छ. पाठः.

शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥

(प्रकाशिका)

तत्प्रकारानाह —

मध्विति । प्रियामनुवर्तमान इति नागरिकवृत्तमप्यशिक्षितमेव प्रतिभातमित्यर्थः । 'पाययेयुरनुपिबेयुश्चे'ति दर्शनात् । कण्डूयनमनुवृत्तिप्रकर्षः । कण्ड्वा दुर्लक्षत्वात् ॥ ३६ ॥

(विवरणम्)

अथ क्रियया भावप्रकाशनमेव प्रपञ्चयति चतुर्भिः श्लोकैः । तत्रादौ भ्रमरद्वन्द्वानां मृगद्वन्द्वानां च प्रकाशन[२]प्रकारमाह

मध्विति । द्विरेफः स्वां प्रियाम् अनुवर्तमानः कुसुमैकपात्रे मधु पपौ । द्विरेफो भ्रमरः स्वां प्रियाम् आत्मीयां वल्लभाम् अनुवर्तमानः अनुसरन् कुसुमैकपात्रे कुसुममये एकस्मिन् पात्रे साधारणे पात्रे मधु पपौ पीतवान् । अत्र नागरिकवृत्तं भ्रमरैरशिक्षितमपि मदनसान्निध्यवशादुद्बुद्धमभूदित्युक्तं भवति । नागरिका ह्येकस्मिन्नेव पात्रे सम्भृतं मद्यं वल्लभां पाययन्ति, स्वयं चानुपिबन्ति । 'पाययेयुरनुपिबेयुश्चे'ति वचनात् । कृष्णसारः शृङ्गेण मृगीम् अकण्डूयत । कृष्णसारो मृगविशेषः शृङ्गेण स्वेनैव विषाणेन मृगीं वल्लभाम् अकण्डूयत कण्डूयि[३]तवान् । कृष्णसारः स्वां वल्लभां कण्डूयनादिभिरनुवर्तितवानित्यर्थः । मृग्या अपि भावविशे[४]षप्रकारमाह — संस्पर्शनिमीलिताक्षीमिति । संस्पर्शेन समीचीनेन स्पर्शनेन, स्पर्शसुखेनेति यावत् । निमीलिते अक्षिणी यया ताम् । अत्राक्षिनिमीलनं स्पर्शसुखस्यानुभावः ॥ ३६ ॥

१. 'रमाह' क. ख. ग. पाठः. २. 'नमा' ख. ग. पाठः. ३. 'तं कृतवा' ख. पाठः. ४. 'षणप्र' ख. ग. घ. ङ. पाठः.

ददौ सरःपङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः ।
अर्धोपयुक्तेन बिसेन जायां
सम्भावयामास रथाङ्गनामा ॥ ३७ ॥

(प्रकाशिका)

ददाविति । गण्डूषजलं मुखान्तर्गतजलम् । अर्धोपयोग आस्वादपरीक्षार्थम् ॥ ३७ ॥

(विवरणम्)

गजमिथुनानां चक्रवाकमिथुनानां च प्रवृत्तिमाह —

ददाविति । करेणुः गजाय गण्डूषजलं ददौ । करेणुः करिणी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । गजाय करिणे गण्डूषजलं मुखान्तर्गतजलं ददौ दत्तवती । गण्डूषजलस्य प्रियतमावदनसम्पर्कव्यतिरिक्तमपि गुणान्तरमाह—सरःपङ्कजरेणुगन्धीति । सरसि यानि पङ्कजानि तेषां रेणुः परागः तस्य गन्धोऽस्त्यस्मिन्निति तथा । यथा कामिनी सुरभिलकुसुमादिसंस्कृतं मुखासवं कामिने ददाति तद्वदित्यर्थः । यथाह माघः —

"सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि ।
आययुः सुमधुराणि सुरायाः पात्रतां प्रियतमावदनानि ॥"
(स. १०. श्लो. १)

इति । रथाङ्गनामा अर्धोपयुक्तेन बिसेन जायां सम्भावयामास । रथाङ्गनामा चक्रवाकः । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । अर्धोपयुक्तेन अर्धकबलितेन । अत्रार्धोपयुक्तत्वमास्वादपरीक्षार्थम् । तेन च स्वयमेवादौ कि-

१. 'रसात् प' मुद्रितकोशपाठः. २. 'भु' मुद्रितकोशपाठः. ३. 'र्थः ।' क. पाठः.

ञ्चिदास्वाद्य तस्य स्वादिष्ठतामवगम्य प्रियतमायै ददावित्यर्थः प्रदर्शितः। बिसेन मृणालेन जायां प्रियतमां सम्भावयामास सम्मानितवान्। अत्र 'ताम्बूलीदलमर्धखण्डितमहं वाञ्छामी'त्यादिषु प्रसिद्धं मुखताम्बूलार्पणं प्रतीयते ॥ ३७ ॥

गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभं
प्रियामुखं किम्पुरुषश्चुचुम्ब ॥ ३८ ॥

(प्रकाशिका)

गीतान्तरेष्विति। गीतयोः प्रक्रान्तप्रक्रंस्यमानयोरन्तर इत्यर्थः। अवसरज्ञत्वं च द्योत्यते। पुष्पासवाघूर्णितयोर्नेत्रयोः शोभा यत्रेति विग्रहः। मुखस्य विशेषणाभ्यां विभावनापरिपोषः ॥ ३८ ॥

(विवरणम्)

एवं हिमवच्छिखरवर्तिनां मृगपक्षिणां कामविकारमुक्त्वा किम्पुरुषादीनामप्याह—

गीतान्तरेष्विति। किम्पुरुषः गीतान्तरेषु प्रियामुखं चुचुम्ब। किम्पुरुषः किन्नरः गीतान्तरेषु अतीतानागतयोर्गानयोरन्तरालेषु। अतीते कस्मिंश्चिद्गाने गानान्तरे चानागते सतीत्यर्थः। अनेनोद्दीपनविभाव उक्तः। अवसरज्ञत्वं च तस्य द्योत्यते। प्रियाया मुखं प्रियामुखं चुचुम्ब चुम्बितवान्। अत्र हि भावपरिपोषार्थं मुखस्य विशेषणद्वयम्। तत्राद्यमाह—श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखमिति। श्रमवारीणां गानश्रमसञ्जातानां स्वेदजलानां लेशैः कणैः। किञ्चित्समुच्छ्वासितपत्रलेखं किञ्चित्समुच्छ्वासिता स्वेदजलसं-

१. 'भि' मुद्रितकोशपाठः. २. 'योरतीतप्रक्रं' ख. ग. घ. ङ. पाठः. ३. 'त्वं द्यो' ख. घ. पाठः. ४. 'स्ये' क. ग. घ., 'स्मिंस्तत्रेति' ङ. पाठः.

सर्गादीषदुच्छ्वासिता उच्छूनतां प्रापिता पत्रलेखा पत्रभङ्गो यस्मिंस्तत् तथा । द्वितीयं विशेषणमाह — पुष्पासवाघूर्णितनेत्रशोभमिति । पुष्पासवेन माध्वी-सुरया । 'गौली माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा' इत्यादिस्मृतिप्रसिद्ध-येत्यर्थः । आघूर्णितयोः कलुषीकृतयोः नेत्रयोः शोभा यस्मिंस्तत्तथोक्तम् । अत्र माध्व्यास्तद्देशसुलभत्वात्, सौरभ्यादिगुणविशिष्टत्वाच्च पुष्पशब्दस्योप-योगः ॥ ३८ ॥

**पर्याप्तपुष्पस्तबकस्तनाभ्यः**
**स्फुरत्प्रवालोष्ठमनोहराभ्यः ।**
**लतावधूभ्यस्तरवोऽप्यवापु-**
**र्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥**

(प्रकाशिका)

पर्याप्तेति । पर्याप्तं पूर्णम् । प्रियसन्निधौ स्तनपूरणमधरस्फुरणं च नायिकाधर्मः । विनम्रम् अस्तब्धम् ॥ ३९ ॥

(विवरणम्)

अथ स्थावराणामपि मदनोन्मादं दर्शयति —

पर्याप्तेति । तरवः अपि लतावधूभ्यः विनम्रशाखाभुजबन्धनानि अवापुः । तरवोऽपि स्थावरात्मका वृक्षा अपि । अन्ये तिष्ठन्त्वित्यर्थः । लतावधूभ्यः लताभ्य एव वधूभ्यः स्त्रीभ्यः सकाशाद् विनम्रशाखाभुजबन्धनानि विनम्रैः विशेषेण नम्रैः अस्तब्धैः । द्विविधा हि लतानां शाखाः स्तब्धाः सन्नताश्च । तत्र स्तब्धैरालिङ्गनानुपपत्तेरेवमुक्तम् । तरुषु तरुषु लीनैरित्यर्थः । नायिकापक्षे तु अनेनालिङ्ग(ने?न)स्वभावोक्तिः । शाखाभिरेव भुजैः यानि बन्धनानि आ-

१. 'मंसस्फु' घ. पाठः. २. 'म्रं स्त' ग. पाठः. ३. 'षु ली' ख. पाठः. ४. 'नेन स्व' क. पाठः.

लिङ्गनानि तानि अवापुः प्रासवन्तः । आलिङ्गनसौख्यमाह — पर्याप्तपुष्पस्तबकस्तनाभ्य इति । पर्याप्ताः सम्पूर्णाः पुष्पस्तबकाः कुसुमगुच्छा एव स्तनाः यासां ताभ्यः । किञ्च अधरार्पणमप्यासीदित्याह — स्फुरत्प्रवालोष्ठमनोहराभ्य इति । स्फुरद्भिः कम्पमानैः प्रवालैः पल्लवैरेवौष्ठैः मनोहराभ्यः । सन्निहिते हि प्रियतमे वधूनां स्तनपूर्तिरधरस्फुरणं च भवति । कामशास्त्रप्रसिद्धश्चायमर्थः ॥ ३९ ॥

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ ४० ॥

(प्रकाशिका)

अथ यथावसरमाधिकारिकं वृत्तमवतारयति —

श्रुतेति । अत्राप्सरसामुपस्थानं सकलदिविषत्साधारणं[3], न त्वन्यमुनिवत् समाधिभङ्गार्थम् । उक्तं च 'अप्सरसां मुखेभ्यः श्रुतमि'ति । अस्मिन् क्षणे एवंविधे सकलचेतनक्षोभसमये । प्रसङ्ख्यानं परमात्मानुसन्धानम् । चित्ताधिकारे पातञ्जले[4]— 'तदेव रजोलेशमलापेतं[5] स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यथाख्यातिमात्रं धर्ममेघाख्यध्यानोपगमं भवति । तत् प्रसङ्ख्यानमित्याचक्षते ध्यायिन' इति । चित्तस्य धर्ममेघाख्यध्यानोपगमः प्रसङ्ख्यानम् । आत्मेश्वराणां वश्यात्मनाम् । समाधिरैकाग्र्यम् ॥ ४० ॥

(विवरणम्)

इत्थमुपवर्णितं मधुमदनवृत्तं प्रकृते योजयति —

१. 'ख्यभाग्यमा' क. पाठः. २. 'नी' घ. पाठः. ३. 'द्भिः साधा' क. ख. ग. ङ. पाठः. ४. 'ले' ङ. पाठः. ५. 'तं तत्त्व' क. पाठः.

श्रुतेति । हरः अस्मिन् क्षणेऽपि प्रसङ्ख्यानपरः बभूव । हरः परमेश्वरः अस्मिन् क्षणे एवंविधसकलचेतनवर्गमनःक्षोभकरे समयेऽपि प्रसङ्ख्यानपरः । प्रसङ्ख्यानं परमात्मानुसन्धानम् । 'परमात्मानुसन्धानप्रसङ्ख्यानसमाधय' इति भोजः । एवंविधे वसन्तकोलाहले मन्मथे च स्वयमेवागते सति हरः किञ्चिदप्यस्खलितचित्तवृत्तिः परमात्मानुसन्धानान्न विरराभेत्यर्थः । सेवार्थमागतानामप्सरसां स्तुतिमात्रमेव तदा हरेण भक्तानुकम्पया श्रुतमित्याह — श्रुताप्सरोगीतिरिरिति । श्रुताः (आकर्णिताः) अप्सरसां सेवार्थमागतानाम् अप्सरःस्त्रीणां गीतयो गानानि येन । अत्राप्सरसां सेवार्थमेवागमनं[1] नान्यमुनिसन्निधाविव चित्तक्षोभविधानार्थम् । भगवत्सेवायाः सर्वसुरसाधारणत्वादप्सरसामुपस्थानम् । अत एव 'अप्सरसां मुखेभ्यः श्रुतमि'ति पूर्वमुक्तम् । उक्तमर्थमर्थान्तरन्यासेन समर्थयते — विघ्नाः जातु आत्मेश्वराणां समाधिभेद[2]प्रभवो न भवन्ति हि इति । विघ्नाः विघ्नकारिणो रम्यपदार्थाः जातु कदाचिदपि आत्मेश्वराणां आत्मनः मनसः ईश्वराणां स्वामिनां, स्ववशमनसामित्यर्थः । समाधिभेदे[3] चित्तैकाग्र्यभञ्जने प्रभवः समर्थाः न भवन्ति । हिशब्दः प्रसिद्धौ । सकलचित्तक्षोभविधायिनोऽपि पदार्थाः कदाचिदपि न धीराणां मनसः क्षोभमापादयन्तीति भावः ॥ ४० ॥

**लतागृहद्वारगतोऽथ नन्दी**
**वामप्रकोष्ठार्पितहेमवेत्रः ।**
**मुखार्पितैकाङ्गुलिसंज्ञयैव**
**मा चापलायेति गणान् व्यनैषीत् ॥ ४१ ॥**

(प्रकाशिका)

अथात्मनिर्विशेषस्य देवामात्यस्य प्रतीहारपदे स्थितस्य भगवतः शैलादेस्तत्कालोचितं विधिमाह —

१. 'न स्तुत्यथमेवागमन, ना' ख. ग. घ. पाठः. २. 'भङ्गप्र' क. ख. ग. पाठः. ३. 'भङ्गे चि' ख. ग. पाठः.

लतागृहेति । वामप्रकोष्ठेऽर्पणं दक्षिणाङ्गुल्या गणतर्जने व्यापृतत्वात् । अङ्गुलिस्तर्जनी[1] । संज्ञा विनयसूचना । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचने'ति सिंहः । मा चापलाय चापलं कर्तुं मा भूतेति शेषः ॥ ४१ ॥

(विवरणम्)

एवं मधुमदनवृत्तसम्भ्रान्तचित्तेषु जरायुजादिषु चतुर्विधेषु शरीरिवर्गेषु भगवत्प्रतिहारपदे वर्तमानस्य देवामात्यस्य नन्दिकेश्वरस्य तत्कालोचितां प्रवृत्तिमाह —

लतेति । अथ नन्दी लतागृहद्वारगतः गणान् चापलाय मा इति मुखार्पितैकाङ्गुलिसंज्ञया एव व्यनैषीत् । अथ सर्वभूतानामविनयवर्धनानन्तरं नन्दी नन्दिकेश्वरः लतैव गृहं लतागृहं तस्य द्वारं गतः सन् गणान् भूतगणान् चापलाय चापलं कर्तुं मा भूत इति शेषः । इतिशब्दो विनयप्रकारवचनः । मुखार्पितैकाङ्गुलिसंज्ञया मुखे वदने अर्पितया न्यस्तया एकयैवाङ्गुल्या, तर्जन्येत्यर्थः । तया या संज्ञा अर्थसूचना । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इति सिंहः । तयैव । एवकारो वचनादिव्यावृत्त्यर्थः । तेन चास्य प्रभावातिशयः सूचितः । व्यनैषीत् शिक्षितवान् । सर्वेऽपि काममविनयमाचरन्तु, वयं तु भगवत्परिचारकाः, ततो नास्माकमुचितोऽयमविनय इतीममर्थं स नासारोपितया तर्जन्यैव सूचितवानित्यर्थः। अथ नन्दिनस्तत्कालविशेषणमाह— वामप्रकोष्ठार्पितहेमवेत्र इति । वामे दक्षिणेत(र ?रस्मिन्) प्रकोष्ठे मणिबन्धकूर्परमध्ये अर्पितं न्यस्तं हेमवेत्रं सुवर्णमयं वेत्रं यष्टिर्येन स तथा । अत्र दक्षिणहस्तस्य गणविनयव्यापृतत्वात् सुवर्णवेत्रस्य[2] वामप्रकोष्ठार्पणमित्यवसेयम् ॥ ४१ ॥

निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम् ।

१. 'ली तर्ज' घ. ङ. पाठः. २. 'वा' ङ. पाठः.

**तच्छासनात् काननमेव सव**
**चित्रार्पितारण्यमिवावतस्थे ॥ ४२ ॥**

(प्रकाशिका)

गणानां विनयेनादेव जरायुजादिचतुर्विधभूतग्रामस्य विनयो जात इत्याह —

**निष्कम्पेति । अत्र द्विरेफाः स्वेदजाः । 'स्वेदजाः कृमिदंशाद्या' इत्यमरः[3] । अण्डजाः पक्षिणः । उपमया निष्पन्दतातिशय उक्तः । पारमेश्वर्या आज्ञाशक्तेरयं प्रभाव इति भावः ॥ ४२ ॥**

(विवरणम्)

एवं गणविनयनादेव चतुर्विधस्यापि भूतग्रामस्य विनयो जात इति परमेश्वरद्वारपालस्य नन्दिनः प्रभावातिशयमाह —

निष्कम्पेति । तच्छासनात् काननं सर्वमेव चित्रार्पितारण्यमिव अवतस्थे । तच्छासनात् तस्य नन्दिनः शासनात् काननं वनम् । सर्वमेव, न तु भूतगणमात्रं, नापि काननावस्थितजनमात्रमित्यर्थः । चित्रार्पितारण्यं चित्रे अर्पितं लिखितम् अरण्यं वनमिवावतस्थे अवस्थितमासीत् । अत्र जरायुजाण्डजस्वेदजोद्भिजभेदेन चतुर्विधेषु भूतग्रामेषु उद्भिज्जादीनां तच्छासनानुष्ठानस्य विस्मयकरत्वात् प्रथमं तत्प्रकारमाह — निष्कम्पवृक्षमिति । निष्कम्पा निश्चला वृक्षा यस्मिंस्तत्तथा । वृक्षा अपि तदानीमचञ्चला जाता इत्यर्थः । अथ वृक्षाद्यपेक्षया किञ्चिदधिकज्ञानानां स्वेदजानां तच्छासनानुष्ठानप्रकारमाह — निभृतद्विरेफमिति । निभृता निश्चलाः द्विरेफा भ्रमराः यस्मिंस्तत्तथा । भ्रमरा अपि तदा स्वाभाविकं भ्रमणशीलत्वं तत्यजुरित्यर्थः । अत्र द्विरेफानां स्वेदजत्वं 'स्वेदजाः क्रिमिदंशाद्याः' इत्यमरसिंहवचनाद् द्रष्टव्यम् । स्वेदजापेक्षया अण्डजानां ज्ञानाधिक्यादनन्तरं तेषां नन्दिनियोगाव-

१. 'म्भ' मुद्रितकोशपाठः. २. 'यादे' ङ. पाठः. ३. 'ति सिंहः ।' ङ. पाठः.

स्थितिमाह—मूकाण्डजमिति । मूका निश्शब्दा अण्डजाः पक्षिणो यस्मिंस्तत्तथा । अथ जरायुजा अपि तन्नियोग एव स्थिता इत्याह—शान्तमृगप्रचारमिति । शान्तो मृगाणां हरिणादीनां प्रचारः सञ्चारो यस्मिंस्तत्तथा । भूतग्रामाणामेवमेव चतुर्विधत्वमुक्तं भोजराजेन—

"उद्भिज्जा वृक्षगुल्माद्याः पक्षिसर्पादयोऽण्डजाः ।
स्वेदजाः क्रिमिदंशाद्या नृमृगाद्या जरायुजाः ॥"

इति । अत्राभिप्रायवेदिनां तच्छासनावस्थानं कैमुतिकन्यायादवगतमित्युपेक्षितमित्यवसेयम् । उपमया निष्कम्पत्वाद्यतिशयः प्रतिपादित इति महेश्वरप्रभावोऽनेन श्लोकेन दर्शितः ॥ ४२ ॥

**दृष्टिप्रतीपं परिहृत्य तस्य**
**कामः पुरश्शुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं**
**ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥**

(प्रकाशिका)

प्रकृतं प्रस्तौति—

**दृष्टिप्रतीपमिति** । प्रतीपमाभिमुख्यमित्यर्थः । प्रयाणे पुरश्शुक्रो निषिद्धः शास्त्रे । प्रान्तेषु संसक्तनमेरुशाखमिति आत्मनिगूहनार्थम् । ध्यानास्पदं प्रकृतं लतागृहम् । अत्र दृष्टिप्रतीपपरिहरणेन कामस्य देवसन्निकर्षाद्धतौजस्कत्वं द्योत्यते ॥ ४३ ॥

( विवरणम् )

अथ प्रकृतं मदनस्य परमेश्वरसमाधिभङ्गव्यापारमेवानुसन्धत्ते—

दृष्टीति । कामः प्रयाणे पुरश्शुक्रमिव तस्य दृष्टिप्रतीपं परिहृत्य भत-

१. 'प्रतं प' मुद्रितकोशपाठः. 'ति नि' घ. ङ. पाठः. ३. 'त्र प्र' घ. ङ. पाठः.
४. 'र्षात्वाद्ध' ङ. पाठः.

पतेः ध्यानास्पदं विवेश । कामः कामदेवः प्रयाणे यात्रायां पुरश्शुक्रं पुरोभागस्थितं शुक्रमिव तस्य हरस्य । दृष्टिप्रतीपं दृष्टेः प्रतीपमाभिमुख्यमित्यर्थः । परिहृत्य त्यक्त्वा भूतपतेः गिरीशस्य । 'भूतेशः खण्डपरशुरि'त्यमरः । ध्यानार्थमास्पदं ध्यानास्पदम् । आस्पदं स्थानम् । 'लतागृहद्वारगतः'(श्लो.४१) इत्यत्र प्रकृतं लतागृहमित्यर्थः । विवेश प्रविष्टोऽभूत् । प्रयाणे हि पुरश्शुक्रः प्रतिषिद्धो मुहूर्तशास्त्रे—

"आग्नेयाद्यास्तारकाः साभिजित्काः प्रागाद्याशासंस्थिताः सप्त सप्त ।
यस्यां तिष्ठेद् भार्गवो दिश्यमुष्यां यात्रा पुंसां प्राणमानार्थहन्त्री ॥"

इति । यथा प्रयाणोद्युक्ता जनाः पुरोभागस्थितं शुक्रं वर्जयित्वैव गच्छन्ति, तथासावपि हरस्य दृष्टिमार्गं परिहृत्यैव गतवान् । यथात्मानं हरो न पश्येत् तथा जगामेत्यर्थः । अनेन दृष्टिमार्गपरिहारकथनेन कामस्य हरसान्निध्यप्रतिहतशक्तित्वं सूचितम् । यथा पुरश्शुक्रपरिहाराभावे विनाशनिश्चयस्तथैवास्याप्येतदभिमुखप्रयाणेऽप्यभूदिति भावः । आत्मनिगूहनोपायोऽपि दैववशात्तत्र तस्यासीदित्याह—प्रान्तेषु संसक्तनमेरुशाखमिति । प्रान्तेषु परिसरेषु संसक्ता संश्लिष्टा नमेरूणां सुरपुन्नागानां शाखा यस्मिंस्तत् । क्षितितलपर्यन्तनिरन्तराश्लिष्टनमेरुविटपत्वात् तत्प्रदेशस्य दृष्टिमार्गपरिहारसौकर्यमिति भावः ॥ ४३ ॥

**स देवदारुद्रुमवेदिकायां**
**शार्दूलचर्मव्यवधानवत्याम् ।**
**आसीनमासन्नशरीरपात-**
**स्त्रियम्बकं संयमिनं ददर्श ॥ ४४ ॥**

(प्रकाशिका)

पुनरप्यस्यावसादकरं देवदर्शनं वर्णयति—

स[1] इति। शार्दूलेति तदास्तृतायामित्यर्थः। आसन्नशरीरपात इति सोपहासम्। त्रियम्बकमिति यणादेशे प्राप्तेऽपि[2] छन्दोभङ्गे छन्दोविचितिकारैरियङुवङादेशस्योक्तत्वादियङादेशः। संयमिनमित्यनवसरोपस्थानं दर्शयता आसन्नशरीरपातत्वमुपपादितम्। अवसरे तु वक्ष्यति—'तस्यानुमेने' (स. ७. श्लो. ९३) इत्यादि॥ ४४॥

(विवरणम्)

मदनस्य भगवद्दर्शनप्रकारमाह—

स इति। सः त्रियम्बकं ददर्श। सः कामदेवः त्रियम्बकं त्रिनेत्रम्। अम्बकं नेत्रम्। त्रियम्बकमित्यत्र यणादेशे प्राप्ते छन्दोभङ्गप्रसङ्गे सति छन्दोविचितिकारैरियङुवङादेशयोर्विहितत्वादियङादेशः। 'त्रियम्बकं[3] नान्यमुपस्थितासावि'ति भर्तृहरिप्रयोगाच्च नायं दोषः। ददर्श दृष्टवान्। अत्र त्र्यम्बकशब्दप्रयोगेण[4] 'तृतीयादक्ष्णः कृशानुः किल निष्पपात' (श्लो. ७१) इति वक्ष्यमाणोऽर्थः सूचितः। त्र्यम्बकस्य समाधियोग्यमवस्थानप्रकारमाह—देवदारुद्रुमवेदिकायाम् आसीनमिति। देवदारुर्वृक्षविशेषः। देवदारुरेव द्रुमो देवदारुद्रुमः, तस्य वेदिकायाम्। शिलादिभिर्बद्धे मूलप्रदेश इत्यर्थः। आसीनं स्थितम्। 'ईदासः' (७. २. ८३) इति शानच ईकारादेशः। तस्यां समाधियोग्यमवस्थानमाह—शार्दूलचर्मव्यवधानवत्यामिति। शार्दूलो व्याघ्रः, तस्य चर्मणा व्यवधानवत्याम् आच्छादनसहितायाम्। शार्दूलचर्मास्तृतायामित्यर्थः। अथ कविस्तादृशपरमेश्वराभिभवोद्युक्तं[5] मदनं सोपहासं विशिनष्टि—आसन्नशरीरपात इति। आसन्नः समीपवर्ती शरीरपातः शरीरस्य पातो नाशो यस्य स तथोक्तः। अहो मदनस्यानात्मवेदित्वमिति भावः। आसन्नशरीरपातत्वोप-

१. 'तमिति' घ. ङ. पाठः. २. 'पि छन्दोवि' घ. ङ. पाठः. ३. 'को मा' घ. पाठः. ४. 'ब्देन तृ' घ. पाठः. ५. 'शं प' घ. पाठः.

पादकं त्र्यम्बकविशेषणमाह — संयमिनमिति। संयम इन्द्रियनिग्रहः सोऽस्यास्तीति संयमी, तम्। अनवसरोपस्थानादस्य शरीरनाश इति भावः। अवसरोपस्थानेनानुग्रहः पुनः 'तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम्' (स. ७. श्लो ९३) इत्यादिना वक्ष्यते ॥ ४४ ॥

**पर्यङ्कबन्धस्थिरपूर्वकाय-**
**मृज्वायतं सन्नमितोभयांसम्।**
**उत्तानपाणिद्वयसन्निवेशात्**
**प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

(प्रकाशिका)

**पर्यङ्के**ति। पर्यङ्को वीरासनं, तस्य बन्धेन स्थिरः पूर्वकायोऽधःकायो यस्य। अत्र वसिष्ठः — 'एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितमि'त्यादि। ऋज्वायतत्वमर्थादूर्ध्वकाये। उत्तानपाणिद्वयसन्निवेशात् सन्नमितोभयांसत्वम्। अत्र योगसारवचनम्

"उत्तानितं करतले करमुत्तानितं परम्।
आधायाङ्कगतं कृत्वा ध्यायेद् यस्तत्र नान्तरम् ॥"

इति ॥ ४५ ॥

(विवरणम्)

अथ मन्मथावसादकरं भगवतस्तपःप्रभावदुष्प्रेक्षत्वमेव विशेषणैः प्रपञ्चयति षड्भिः श्लोकैः। तत्र तपसामासनस्थैर्यमूलत्वादादावासनप्रकारमाह

पर्यङ्केति। पर्यङ्कबन्धस्थिरपूर्वकायं पर्यङ्कस्य वीरासनस्य बन्धेन बन्धनेन स्थिरः निश्चलः पूर्वकायः अधःकायः कायस्याधोभागो यस्य। वीरासनबन्धनेन निश्चलशरीरपूर्वार्ध इत्यर्थः। यथाह वसिष्ठ

"एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितम्।
इतरस्मिंस्तथाचोरुं वीरासनमुदाहृतम् ॥"

१. 'थान्यस्मिन्' घ. पाठः.

इति । तं ददर्शेति पूर्वेणान्वयः । ऊर्ध्वकायावस्थानप्रकारमाह — ऋज्वायतमिति । ऋजु अवक्रम् अत एवायतं दीर्घं च । अवक्रायतोर्ध्वकायमित्यर्थः । पाणिद्वयावस्थापनप्रकारमाह — उत्तानपाणिद्वयसन्निवेशाद् अङ्कमध्ये प्रफुल्लराजीवमिवेति । उत्तानस्य ऊर्ध्वमुखस्य पाणिद्वयस्य सन्निवेशाद् अवस्थापनाद् । अङ्कस्य मध्ये । प्रफुल्लराजीवं प्रफुल्लं विकसितं राजीवं पङ्कजं यस्य तम् । उत्तानयोः करतलयोरङ्कमध्यावस्थापितत्वाद् अङ्कमध्ये प्ररूढारविन्दमिव दृश्यमानमित्यर्थः । अत्र पाणिद्वयस्याङ्के सन्निवेशादेवांसयोः सन्नमितत्वमपि सम्भवतीति न तस्य शास्त्रीयत्वम् । पाणिद्वयस्याङ्कावस्थापनं तु योगसारवचनसिद्धम् । यथोक्तम्—'उत्तानिते करतले करमुत्तानितं परम् । आधायाङ्कगतं कृत्वा ध्यायेदि'त्यादि ॥ ४५ ॥

भुजङ्गमोन्नद्धजटाकलापं
कर्णावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभाभ्यङ्गविशेषनीलां
मृगत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥

(प्रकाशिका)

भुजङ्गमेति । अक्षसूत्रस्य द्विगुणनं शैथिल्यपरिहाराय । श्रवसि स्थापनं श्रवसः पवित्रतास्मृतेः । अभ्यङ्गो व्याप्तिः । ग्रन्थिरस्रंसनाय ॥४६॥

(विवरणम्)

ध्यानोद्योगद्योतकमलङ्कारविशेषमाह—

भुजङ्गमेति । भुजङ्गमोन्नद्धजटाकलापं भुजङ्गमेन सर्पेण उन्नद्धः ऊर्ध्वं नद्धः जटाकलापः जटासमूहो येन तम् । योगमात्रव्याप्तस्य जपविरामादक्षमालार्पणप्रकारमाह — कर्णावसक्तद्विगुणाक्षसूत्रमिति । कर्णे अवसक्तं कर्णाव-

१. 'स' मुद्रितकोशपाठः. २. 'कृष्णत्व' मुद्रितकोशपाठः.

सक्तम् । द्वौ गुणौ परिवृत्ती यस्य तद् द्विगुणम् । कर्णे दक्षिणकर्णे अवसक्तं स्थितं द्विगुणमक्षसूत्रम् अक्षमाला यस्य तम् । अक्षसूत्रस्य कर्णे निधानं कर्णस्य पवित्रतास्मृतेः । द्विगुणत्वं चाञ्चल्यपरिहारार्थम् । कटिप्रदेशस्यापि योगानुगुणं स्थिरत्वापादनप्रकारमाह — ग्रन्थिमतीं मृगत्वचं दधानमिति । ग्रन्थिः ग्रथनमस्या अस्तीति ग्रन्थिमती । अतिशायने मतुप् । तादृशीं मृगत्वचं मृगस्य त्वचं दधानं परिदधानम् । निबिडग्रथितं[1] मृगचर्म वसानमित्यर्थः । अत्र निबिडग्रथनं मध्ये स्रंसपरिहारार्थम् । भगवत्परिधानभूताया मृगत्वचः शोभाधिक्यमाह — कण्ठप्रभाभ्यङ्गविशेषनीलामिति । कण्ठस्य प्रभाया अभ्यङ्गेन व्याप्त्या विशेषतो नीलाम् । गलगलितया बहलतरया गरलप्रभया विशेषतोऽपि श्यामलामित्यर्थः । मृगत्वचः स्वतो नीलत्वाद् विशेषनीलोक्तिः ॥ ४६ ॥

किञ्चित्प्रकाशस्तिमितोग्रतारै-
र्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालै-
र्लक्षीकृतघ्राणमधोमयूखैः ॥ ४७ ॥

(प्रकाशिका)

किञ्चिदिति । विशेषणानि योगदृष्टिस्वभावाख्यानपराणि चित्तैकाग्रताद्योतकानि ॥ ४७ ॥

(विवरणम्)

नेत्राणामपि योगानुगुणमवस्थानविशेषमाह —

किञ्चिदिति । नेत्रैः लक्षीकृतघ्राणम् । नेत्रैः त्रिभिर्लोचनैः । लक्षीकृतघ्राणं लक्षीकृतं लक्षतां प्रापितं घ्राणं नासाग्रं येन तम् । शरादिप्राप्यभूमिर्लक्षशब्दार्थः । अत्र तु प्राप्यभूमित्वगुणयोगाद् घ्राणे गौणः प्रयोगः । त्रिभि-

1. तमृगचर्मवाससमि' ख. घ पाठः.

रपि लोचनैरश्रान्तमवलोक्यमाननासिकाग्रमित्यर्थः। अथ योगदृष्टिख्यापनपराणि चित्तैकाग्र्यद्योतकानि च नेत्रविशेषणान्याह — किञ्चिदित्यादिभिः। किञ्चित्प्रकाशस्तिमितोग्रतारैः। किञ्चन प्रकाशो यासां ताः किञ्चित्प्रकाशाः स्तिमिता निश्चलाः उग्रा दुर्निरीक्षाश्च ताराः कनीनिकाः येषां तैः। अत्र किञ्चित्प्रकाशत्वं नयनानामीषन्मीलनात्। तच्च योगस्वभावकृतम्। स्तिमितत्वं चित्तैकाग्र्यकृतम्। स्तिमितत्वादेवोग्रत्वम्। नेत्राणां स्तिमितत्वाद् भ्रुवोरपि स्तिमितत्वमाह — भ्रूविक्रियायां विरतप्रसङ्गैरिति। भ्रुवोर्विक्रियायां विकारे। विरतो निवृत्तः प्रसङ्गो व्यापारो येषां तैः। भ्रूविकारस्य नेत्रविकारपूर्वकत्वादेवमुक्तम्। नेत्रावयवानामपि निस्पन्दत्वमाह — अविस्पन्दितपक्ष्ममालैरिति। अविस्पन्दिता अचलिताः पक्ष्ममाला अक्षिरोमसमूहाः येषां तैः। नासाग्रमात्रावलोकप्रकारमाह — अधोमयूखैरिति। अधोभाग एव मयूखा रश्मयो येषां तैः। अनेन समाधेरचलत्वमुक्तम् ॥ ४७ ॥

**अवृष्टिसंरम्भमिवाम्बुवाह-**
**मपामिवाधारमनुत्तरङ्गम्।**
**अन्तश्चराणां मरुतां निरोधा-**
**न्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥**

(प्रकाशिका)

अवृष्टीति। अत्राध ऊर्ध्वं तिर्यक् च वायोर्गतित्रयनिरोधादुपमानत्रयोपपत्तिः ॥ ४८ ॥

(विवरणम्)

अथ योगाभ्यासयोग्यं प्राणादिवायूनां निरोधमुपमामुखेन दर्शयति —

अवृष्टीति। अन्तश्चराणां मरुतां निरोधाद् अवृष्टिसंरम्भम् अम्बुवाहमिव। अन्तश्चरन्तीत्यन्तश्चराः, तेषाम्। शरीरान्तर्वर्तिनामित्यर्थः। मरुतां प्राणादिवायूनां निरोधाद् नियमनाद्धेतोः। अवृष्टिसंरम्भम्। संरम्भ उद्योगः

वृष्टिसंरम्भो यस्य नास्ति सोऽवृष्टिसंरम्भः, (तम्) वर्षोद्योगरहितमम्बुवाहं मेघमिव दृश्यमानम्। अनेनोपमानेन मरुतामधःप्रदेशप्रवृत्त्यभावः सूचितः। ऊर्ध्वप्रवृत्त्यभावमपि दर्शयति — अनुत्तरङ्गम् अपाम् आधारमिवेति । अनुत्तरङ्गम् उद्गतस्तरङ्गो यस्मात् स उत्तरङ्गः, उत्तरङ्गो न भवतीत्यनुत्तरङ्गः, (तम्) अपां जलानाम् आधारमधिष्ठानं जलाशयमिवेत्यर्थः। 'जलाशयो जलाधार' इत्यमरः। अन्तश्चराणां मरुतां निरोधादिति अत्रापि योजनीयम् । तिर्यक्प्रवृत्त्यभावमपि प्रतिपादयति — निवातनिष्कम्पं प्रदीपमिवेति । निवातं वाताभावः। अर्थाभावेऽव्ययीभावः। तेन हेतुना निष्कम्पं निश्चलं प्रदीपमिव । अन्तश्चराणां मरुतां निरोध एवात्रापि हेतुः। कुम्भितपवनत्वेन कुत्रापि पवनप्रवृत्त्यभावान्निश्चलशरीरमित्यर्थः ॥ ४८ ॥

कपालनेत्रान्तरलब्धमार्गै-
ज्योतिःप्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्यान्
बालस्य रश्मीन् ग्लपयन्तमिन्दोः ॥ ४९ ॥

(प्रकाशिका)

कपालनेत्रान्तरेति । कपालं ब्रह्मशिरस्सम्बन्धि । वक्ष्यति च 'कपालनेत्रामलशेखरश्रीः' (स.७.श्लो.३२) इति । तन्नेत्ररन्ध्रनिर्गतैर्ज्योतिःप्ररोहैरन्तरात्मेयमण्डलसमुद्गतैः । शिरस्तः ब्रह्मरन्ध्रात्। मृणालेत्याद्युत्प्रेक्षामाणकम् ॥ ४९ ॥

(विवरणम्)

इत्थं प्रतिपादितसाधनजयादिरूपस्य योगस्य सिद्धिं दर्शयति—

कपालेति। शिरस्तः उदितैः ज्योतिष्प्ररोहैः बालस्य इन्दोः रश्मीन्

१. 'प्रवृ' घ. पाठः. २. 'र्यां' मुद्रितकोशपाठः ३. 'लक्ष्मीं ग्ल' मुद्रितकोशपाठः

ग्लपयन्तम् । शिरस्तः ब्रह्मरन्ध्राद उदितैः उद्गतैः ज्योतिष्प्ररोहैः ज्योतिषाम् अन्तर्गताग्नेयमण्डलसमुद्गतानां तेजसां प्ररोहैः अङ्कुरैः बालस्य इन्दोः जटाकोटितटघटितस्य बालचन्द्रस्य रश्मीन् ग्लपयन्तं ग्लानिं प्रापयन्तम् । अयमभिप्रायः—योगिनो हि नियमितप्राणा आग्नेयमण्डलापरनामधेयं कुण्डलिनीशब्दाभिधेयमात्मतेजो मूलाधारादुत्थाप्य क्रमात् सुषुम्नान्तरं नाभिप्रदेशं हृदयं भ्रूमध्यं च नीत्वा द्वादशान्तस्थिते परमात्मनि योजयन्ति । परमेश्वरस्य तु तदानीं तेन तेजसा तन्मध्यवर्तिनो बालचन्द्रस्य प्रभासङ्कोचोऽपि सञ्जातः । बालचन्द्रे परमात्मसाम्यं च प्रतीयत इति । ज्योतिष्प्ररोहाणामूर्ध्वगमनाभ्युपायमभ्युह्य कथयति — कपालनेत्रान्तरलब्धमार्गैरिति । कपालस्य ब्रह्मशिरःकपालस्य यन्नेत्रान्तरं नेत्ररन्ध्रं, तेन पथा लब्धमार्गैः । ब्रह्मशिरःकपालनेत्ररन्ध्रनिर्गतैरित्यर्थः । बालचन्द्ररश्मीनां ग्लानिप्राप्तौ हेतुमाह — मृणालसूत्राधिकसौकुमार्यानिति । मृणालस्य सूत्रं मृणालसूत्रं, तस्मादप्यधिकं सौकुमार्यं येषां तान् । प्रबलसन्निधौ दुर्बलं ग्लानिमेतीति हि प्रसिद्धमिति भावः ॥ ४९ ॥

मनो नवद्वारनिषिद्धवृत्ति
  हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो विदुस्त-
  मात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥

(प्रकाशिका)

मन इति । हृदि स्थानविशेषे । अत्र वसिष्ठः

"यतो निर्याति विषयाद् यस्मिंश्चैव प्रलीयते ।
हृदयं तद् विजानीयान्मनसः स्थितिगोचरम् ॥"

१. 'रसः क' ख. ग. पाठः. २. 'रः' क. ङ. पाठः.

इति । अत्रोपायमाह — समाधिवश्यमिति । अक्षरमनश्वरम् । क्षेत्रविदः क्षेत्रक्षेत्रज्ञविभागविद इत्यर्थः । आत्मानं परमात्मानम् । आत्मनि स्वस्मिन् । अत्र परमपावनस्य योगिदशापन्नपरमेश्वरस्वरूपस्य कविशक्त्या प्रत्यक्षायमाणत्वं कृतमित्येतदनुसन्धातॄणां काव्यमात्ररसिकानां गुरुकटाक्षपातरहितानामपि सकलबन्धध्वंसो भवति । अयमेव चात्र कारुणिकस्य कवेरभिप्रायः ॥ ५० ॥

(विवरणम्)

योगसिद्धेः फलमाह —

मन इति । क्षेत्रविदः यम् अक्षरं विदुः, मनः हृदि व्यवस्थाप्य तम् आत्मानम् आत्मनि अवलोकयन्तम् । क्षेत्रं शरीरं विदन्तीति क्षेत्रविदः । आत्मनो भिन्नत्वेन शरीरमवगच्छन्त इत्यर्थः । क्षेत्रक्षेत्रज्ञविभागविद इति यावत् । यमक्षरं विदुः अनश्वरं जानन्ति । 'विदो लटो वा'(३. ४. ८३)इति झेरुसादेशः । (मनः) अन्तःकरणम् । हृदि हृदये मनोनिवासस्थान इत्यर्थः । यथाह वसिष्ठः —

"यतो निर्याति विषयाद् यस्मिश्चैव प्रलीयते ।
हृदयं तद् विजानीयान्मनसः स्थितिगोचरम् ॥"

इति । व्यवस्थाप्य स्थिरतया स्थापयित्वा । तम् आत्मानं परमात्मानमित्यर्थः । आत्मनि स्वस्मिन्, जीवात्मनीत्यर्थः । अवलोकयन्तं पश्यन्तम् । विषयेभ्यो मनो निवार्य जीवपरयोरैक्यमेवावगच्छन्तामिति भावः । तत्तदिन्द्रियानुसारेण विषयाननुधावतो मनसो निरोधप्रकारमाह — नवद्वारनिषिद्धवृत्तीति । शरीरस्य हि नवद्वाराणि सन्ति । यथाहुः —

१. 'दः क्षेत्रज्ञ' क. ख. ङ. पाठः. २. 'क्षर' ङ. पाठः. ३. 'न्धप्रध्वं' ङ. पाठः.

"नयनश्रवणे द्वे द्वे नासिके वदनं तथा ।
पायूपस्थौ च देहेऽस्मिन् नवद्वाराणि देहिनाम् ॥"

इति । नवभ्योऽपि द्वारेभ्यो निषिद्धा वारिता वृत्तिर्यस्य तत् । मनोनिषेधोपायमाह — समाधिवश्यमिति । समाधिरैकाग्र्यं, तेन वश्यं विधेयम् । समाधिपरिशीलनमेव हि विषयेभ्यो मनोनिवारणस्योपायः । एवम्भूतं त्र्यम्बकं ददर्शेति पूर्वेणान्वयः । अत्र महाकविः परमकारुणिको योगिदशापन्नस्य परमेश्वरस्य परमपावनं स्वस्वरूपमनुसन्धातॄणां कर्मबन्धपरिध्वंसार्थं कविशक्त्या प्रत्यक्षायमाणतया प्रदर्शितवानिति भाविकमलङ्कारः । 'अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकमि'ति ॥ ५० ॥

**स्मरस्तथाभूतमयुग्मनेत्रं**
**पश्यन्नदूरान्मनसाप्यधृष्यम् ।**
**नालक्षयत् साध्वससन्नहस्तः**
**स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१ ॥**

(प्रकाशिका)

एवं परमामनभिभवनीयतामधितिष्ठति देवे कामस्यावस्थां वर्णयति —

**स्मर** इति । साध्वसं भयम् । तस्य चालम्बनं (तथाभूतत्वम्) । तथाभूतत्वात् सङ्कल्पेनाप्यधृष्यत्वम् । अदूरादिति स्फुटप्रत्यये हेतुः । नालक्षयदिति विषादव्यभिचारिणी जडता । तथाभूतं पश्यन्नित्यनेन पूर्वं दाक्षायणीसाहचर्ये समग्रशृङ्गारास्पदत्वेन देवस्यं स्वयमनुभूतत्वात् तथाभावः कदाचिदप्यतर्कितपूर्वः कामेनेति प्रतीयते ॥ ५१ ॥

१. 'पं मनसा ध्यातृ' क. ख. ग. घ. पाठः. २. 'चावल' ग. पाठः. ३. 'ष्यम् ।' ङ. पाठः. ४. 'ति पदं प्रत्ययेह' ख. घ. ङ. पाठः. ५. 'स्यानु' ख. घ. पाठः. ६. 'मभिभू' ग. पाठः.

(विवरणम्)

एवं परमेश्वरस्य दुरभिभवत्वं प्रतिपाद्य तमेवमालोकयतो मदनस्य तदनुगुणामवस्थामाह —

स्मर इति । अयुग्मनेत्रम् अदूरात् तथाभूतं पश्यन् स्मरः स्वहस्तात् स्रस्तं शरं चापमपि न अलक्षयत् । अयुग्मनेत्रं त्र्यम्बकम् अदूरात् समीपे इत्यर्थः । 'दूरान्तिकार्थेभ्यो द्वितीया च' (२. ३. ३५) इति पञ्चमी । अनेन सम्यगवलोकनोपपत्तिर्दर्शिता । तथाभूतं पश्यन् अत्यन्तदुर्निरीक्षतया साक्षात्कुर्वन् । पूर्वं दाक्षायणीसाहचर्ये समग्रशृङ्गारास्पदत्वात् तथाभूतत्वेनानुभूतस्य भगवतस्तथाभावो मनसापि न स्मरेण सम्भावित इति भावः । स्मरः मदनः स्वहस्ताद् आत्मनः करात् । स्रस्तं गलितं शरं चापमपि । अपिशब्दः समुच्चये । नालक्षयत् न ज्ञातवान् । अत्र स्वहस्तस्रस्तस्याप्यज्ञातत्ववचनेन साध्वसस्योत्कर्ष उक्तः । तथाभूतत्वमेवोपपादयति — मनसाप्यधृष्यमिति । सङ्कल्पेनाप्यनभिभवनीयम् । अहमेनमभिभविष्यामीति सङ्कल्पयितुमप्यशक्यमित्यर्थः । स्वहस्ताच्छरचापस्रंसे हेतुमाह — साध्वससन्नहस्त इति । साध्वसेन भयेन । 'भीतिर्भीः साध्वसं भयमि'त्यमरः । सन्नौ क्षीणौ हस्तौ यस्य स तथा । अत्र साध्वसस्यालम्बनं तथाभूतत्वम् ॥ ५१ ॥

**निर्वाणभूयिष्ठमथास्य वीर्यं**
**सन्धुक्षयन्तीव वपुर्गुणेन ।**
**अनुप्रयाता वनदेवताभ्या-**
**मदृश्यत स्थावरराजकन्या ॥ ५२ ॥**

(प्रकाशिका)

अथ पूर्वप्रकृतं देवीकर्तृकं शुश्रूषालक्षणं प्रयोज्यस्योपावर्तनं स्वावसरेऽवतारयति —

१. 'प' ख. पाठः.

निर्वाणभूयिष्ठमिति। आहिताग्न्यादिषु पाठात् पूर्वनिपातानियमः। निर्वाणसन्धुक्षणाभ्यामग्निसाम्यप्रतीतिः। वपुर्गुणेन रूपसम्पदा। वनदेवताभ्यामोषधिप्रस्थयोषिद्भ्यां[1] सखीभ्याम्। यद्वक्ष्यति 'योषितो वनदेवताः' (स. ६. श्लो. ३९) इति। अनेन 'सखीसमग्राम्' (स. १. श्लो. ५८) इत्येतदनुसंहितम्। ते च विजयामालिन्यौ प्रसिद्धे। दर्शनस्य तद्वीर्योद्दीपनत्वाददृश्यतेत्युक्तं, न त्वाजगामेति॥ ५२॥

(विवरणम्)

अथ प्रथमसर्गे प्रतिपादितं शुश्रूषादिलक्षणं[2] प्रयोज्योपावर्तनं स्वावसरेऽवतारयति—

निर्वाणेति। अथ स्थावरराजकन्या अदृश्यत। अथ साध्वसप्राप्त्यनन्तरम्। स्थावरराजकन्या स्थावराणां राजा हिमवान्, तस्य कन्या पार्वती। अदृश्यत दृष्टाभूत्। तद्दर्शनस्य मन्मथोद्दीपनत्वप्रदर्शनार्थमदृश्यतेत्युक्तं, नत्वभ्याययाविति। दर्शनं हि मन्मथकर्तृकं, तेन च तस्य कृता(र्था? र्थता)भिमानः, तेन च तस्य वीर्यसन्धुक्षणमिति क्रमः। अत एवोत्प्रेक्षते—निर्वाणभूयिष्ठमस्य वीर्यं वपुर्गुणेन सन्धुक्षयन्तीवेति। निर्वाणभूयिष्ठं नष्टप्रायम्। आहिताग्न्यादिषु पाठात् पूर्वनिपातनियमाभावः। कर्तरि निष्ठान्तश्चायं निर्वाणशब्दो 'निर्वाणोऽवाते' (८. २. ५०) इति निपातितः। अस्य कामदेवस्य वीर्यं बलम्। 'वीर्यं बले प्रभावे च' इत्यमरः। वपुषो गुणेन सौन्दर्यातिशयेन सन्धुक्षयन्तीव[3] वर्धयन्तीव। अत्र निर्वाणसन्धुक्षणशब्दाभ्यां मन्मथवीर्यस्याग्निसाम्यं प्रतीयते। तेन चात्यन्तदुस्सहत्वम्। 'सखीसमग्रां समादिदेशे'ति पूर्वोक्तमर्थमनुसन्दधान आह—वनदेवताभ्यामनुप्रयातेति। तत्रत्यानां योषितां वनदेवतात्वाद् वनदेवताभ्यामित्युक्तम्। वक्ष्यति च 'योषितो वनदेवताः' (स. ६. श्लो. ३९) इति। एते च विजया मालिनी चेति प्रसिद्धे देवीसख्यौ। अनुप्रयाता अनुगता॥ ५२॥

१. 'षित्सखी' घ. पाठः. २. 'पाल' घ. पाठः. ३. 'न्ती वर्ध' घ. पाठः.

अशोकनिर्भर्त्सितपद्मराग-
माकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं
वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥

(प्रकाशिका)

अशोकेति । मुक्ताकलापो हारः । वसन्तपुष्पमयमाभरणमाभरणजातमित्यर्थः ॥ ५३ ॥

( विवरणम् )

अथ देवीदर्शनस्य मन्मथवीर्यसन्धुक्षणसामर्थ्यं प्रतिपादयितुं देवीविशेषणभूताश्चत्वारः श्लोकाः । तत्रादौ दूरतो दृश्यमानाया अपि देव्या वसन्तपुष्पाभरणानामुज्ज्वलतरत्वाद् दूरतोऽपि दर्शनोपपत्तेर्वसन्तपुष्पाभरणसमर्पितत्वमाह —

अशोकेति । वसन्तपुष्पाभरणं वहन्ती । वसन्तपुष्पाभरणमिति जातावेकवचनम् । वसन्तपुष्पमयान्याभरणानि दधानेत्यर्थः । वसन्तपुष्पाभरणानामितराभरणव्यतिरेकं प्रतिपादयितुं वसन्तपुष्पाभरणं विशिनष्टि—अशोकेत्यादिना । तत्रादावशोककुसुमानामौज्ज्वल्यातिरेकात् तद्दर्शनं जातमिति पूर्वमशोकपुष्पाभरणं वर्णयति — अशोकनिर्भर्त्सितपद्मरागमिति । अशोकैः अशोककुसुमैः निर्भर्त्सिता निन्दिताः पद्मरागाः पद्मरागमणयो येन तत् । अनेन देव्याः काञ्चीनूपुरादिप्रत्युप्तानामुत्तमतराणां पद्मरागाणामशोककुसुमेभ्यो न्यूनताप्रतीतिः प्रतिपादिता । काञ्चीनूपुरादीनामपि कर्णिकारकुसुमापेक्षया न्यूनतां प्रतिपादयति — आकृष्टहेमद्युतिकर्णिकारमिति । आकृष्टा निन्दिता हेम्नः सुवर्णस्य द्युतिः कान्तिर्यैस्तादृशाः कर्णिकाराः कर्णिकारपुष्पाणि यस्मिंस्तत् अनेनाशोककुसुमापेक्षया कर्णिकारकुसुमानां न्यूनप्रभावत्त्वादशोकपुष्पदर्शनानन्तरमेव कर्णिकारपुष्पदर्शनमिति च प्रतिपादितम् । अत एवानन्तरमेव तदुपादानम् । अथ पुनरपि प्रत्यासत्तिबलात् सिन्दुवारकुसुमानामपि दर्शनं जातमि-

१. 'कपुष्पापे' क. ख. ग. घ. पाठः.

त्याह — मुक्ताकलापीकृतसिन्दुवारमिति। मुक्ताकलापो हारः, मुक्ताकलापीकृतानि मुक्ताकलापतां प्रापितानि सिन्दुवारकुसुमानि यस्मिन्। अत्राभूततद्भावप्रयोगेण सिन्दुवारपुष्पाणां मुक्ताकलापापेक्षया बहुगुणत्वाद् मुक्ताकलापमपहाय तत्स्थानप्रापणमुक्तमिति व्यतिरेकोपपत्तिः॥ ५३॥

आवर्जिता किञ्चिदिव स्तनाभ्यां
वासो वसाना तरुणार्कराग॑म्।
सुजातपुष्पस्तबकावनम्रा
सञ्चारिणी पल्लविनी॑ लतेव॥ ५४॥

(प्रकाशिका)

आवर्जितेति। इवशब्दो वाक्यालङ्कारे। तरुणार्करागमिति वसन्ते स्त्रीणां रक्तं वासः। तदुक्तम् 'अरुणरागनिषेधिभिरंशुकैरि'ति॥५४॥

(विवरणम्)

अथ क्रमेण किञ्चिद्वयस्सत्वाद् विभाव्यमानस्तनजघनाद्यवयवविभागां देवीं विशिनष्टि —

आवर्जितेति। स्तनाभ्यां किञ्चिदिव आवर्जिता इति। स्तनाभ्यामावर्जनकर्तृभूताभ्यां स्तनभाराभ्यां किञ्चिद् ईषदिव। इवशब्दो वाक्यालङ्कारे। आवर्जिता आनमिता। स्तनभारगौरवादवनमितशरीरेत्यर्थः। पुनश्च क्रमेण वसनवर्णस्यापि विशेषावगमो जात इत्याह — तरुणार्करागं वासो वसाना इति। तरुणस्य अचिरोदितस्य अर्कस्य सूर्यस्य राग इव रागो यस्य तादृशं वासो वसाना परिदधाना। अत्रारुणाम्बरधारणं वसन्तोचितम्। यथोक्तं रघुवंशे 'अरुणरागनिषेधिभिरंशुकैः'(स. ९. श्लो. ४३) इति। अत्रोत्प्रेक्षते — सुजात पुष्पस्तबकावनम्रा पल्लविता लता सञ्चारिणीवेति। सुजातेन मनोहरेण पुष्पस्तबकेन मञ्जर्या। अत्र स्तबकशब्देनैव विवक्षितार्थसिद्धावपि मनोहारित्वातिशयप्रदर्शनार्थं पुष्पशब्दप्रयोगः। यदुक्तं काव्यप्रकाशकृता — 'कर्णावतंसा-

१. 'पर्याप्तपु' मुद्रितकोशपाठः. २. 'नां' मुद्रितकोशपाठः.

द्विपदे कर्णादिध्वनिनिर्मितिः। सन्निधानादिबोधार्थमि'ति। अवनम्रा अवनमिता। पल्लविता सञ्जातपल्लवा। तारकादित्वादितच्। सञ्चारिणी सञ्चरणशीला लतेव। अत्र गौरीलतयोः स्तनस्तबकयो रक्तवासःपल्लवयोश्च परस्परसाम्यमुत्प्रेक्षाबीजम्॥ ५४॥

स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केसरदामकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण
द्वितीयमौर्वीमिव कार्मुकस्य॥ ५५॥

(प्रकाशिका)

**स्रस्तामिति**। स्रंसनं गमनवशात्। गमनप्रतिबन्धनिरासाय चावलम्बनम्। पुनश्शब्द उभयशेषः। स्थानविदा, अत्र निक्षिप्तमापदि सुलभं स्यादिति। 'मौर्वी द्वितीयामिति युक्तमि'ति भोजादयः। अत्र युक्तिर्विस्तरभयादस्माभिर्न लिख्यते॥ ५५॥

(विवरणम्)

अथ तदपेक्षयापि किञ्चित् प्रत्यासन्नां विभाव्यमानव्यापारविशेषां देवीं विशिनष्टि—

**स्रस्तामिति**। नितम्बात् स्रस्तां केसरदामकाञ्चीं पुनः पुनः अवलम्बमाना। नितम्बाद् जघनप्रदेशात् स्रस्तां गमनवशाद् गलिताम्। केसरदामकाञ्चीं केसरमालामयीं काञ्चीं रशनाकलापम्। केसरो वकुलः। पुनश्शब्द उभयशेषः। गमनवशात् पुनः पुनर्गलितां केसरदामकाञ्चीं पुनः पुनरवलम्बमानेत्यर्थः। गमनप्रतिबन्धनिरासाय स्वयमेव स्वस्थानं नीत्वा करेण गृह्णतीति भावः। काञ्चीमुत्प्रेक्षते—स्थानविदा स्मरेण न्यासीकृतां कार्मुकस्य द्वितीयेमौर्वीमिवेति। स्थानविदा स्थानं वेत्तीति स्थानवित् तेन। अत्र निक्षिप्तमापदि मया सुलभं भवेदिति निक्षेपस्थानज्ञेनेत्यर्थः। स्मरेण मदनेन न्यासीकृतां निक्षेपतां प्रापितां कार्मुकस्य चापस्य द्वितीयां

'मौर्वी द्वितीयामि' मुद्रितकोशपाठः. २. 'यां मौ' घ. पाठः.

मौर्वीं शिञ्जिनीमिव । चापभृतो[1] हि युद्धमध्ये मौर्वीभङ्गमाशङ्क्य द्वितीयां कामपि मौर्वीमासजने निक्षिपन्ति । अत्र द्वितीयमौर्वीमित्यत्रोत्प्रेक्षाविषयभूतस्य द्वितीयात्वस्य समासान्तर्गतत्वमयुक्तम् । तस्मा'न्मौर्वीं द्वितीयामि'त्येव युक्तः पाठ इति केश्चिदुक्तम् । तदयुक्तम् । समासान्तर्गतत्वेऽपि कविशक्त्या द्वितीयात्वप्रतिपत्तेः सुलभत्वात् । न चात्र द्वितीयात्वमात्रमुत्प्रेक्ष्यम्, अपि तु स्मरेण न्यासीकृतत्वं द्वितीयात्वं मौर्वीत्वं च । तत्र मौर्वीत्वोत्प्रेक्षयैव तदितरोत्प्रेक्षासिद्धिरिति मौर्वीत्वमेवात्र विधेयांश इति नाविमृष्टविधेयांशत्वदोषः ॥ ५५ ॥

सुगन्धिनिःश्वासविवृद्धतृष्णं
बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं सम्भ्रमलोलदृष्टि-
र्लीलारविन्देन निवारयन्ती ॥ ५६ ॥

(प्रकाशिका)

**सुगन्धीति ।** बिम्बाधर[2] इति 'बिम्बाधरे[3] इति वृत्तौ मध्यमपदलोपिन्याम्'(५.२.१५) इति वामनः । बिम्बाकारोऽधर इति विग्रहः । शाकपार्थिवादित्वात् समासः । अन्यथाधरबिम्ब इति स्यात् । अनेन कुलकेन कविः प्रतिभामय्या स्वदृष्ट्या साक्षात्कृतं समग्रलोकोत्तरविभावतापात्र[4]भूतं तत्कालसमुचित[5]भूषणविलासविशेषितं देव्या वपुः सहृदयानां साक्षात्कारपदवीं स्वशक्त्या नीतवानिति भाविकमलङ्कारः । अत्रापि पूर्ववदभिप्रायः कवेः ॥ ५६ ॥

(विवरणम्)

अथ देवीगतानां सूक्ष्मतराणां व्यापाराणामपि विभाव्यमानत्वात् तद्विशिष्टां देवीं विशिनष्टि —

१. 'तोऽपि हि' घ. पाठः. २. 'धरासन्नचर' क. ख. ग. पाठः. ३. 'रत्र' क. ख. ग. पाठः. ४. 'ना' क. ङ. पाठः. ५. 'लभूषणसमुचितवि' घ. पाठः. ६. 'चि' ख.

सुगन्धीति । बिम्बाधरासन्नचरं द्विरेफं प्रतिक्षणं लीलारविन्देन निवारयन्ती । बिम्बाधरासन्नचरम् । बिम्बाकारोऽधरो बिम्बाधरः । शाकपार्थिवादित्वात् समासः । तस्यासन्ने चरतीति तथा । द्विरेफं भ्रमरं प्रतिक्षणं क्षणे क्षणे । लीलारविन्देन लीलार्थमेव हस्ते गृहीतेन पद्मेन निवारयन्ती नितरां वारयन्ती । लीलारविन्दगन्धानुभवस्य प्रतिक्षणं विद्यमानत्वेऽपि भ्रमरस्य तत्परित्यागपूर्वकस्य बिम्बाधरसञ्चारस्य हेतुमाह — सुगन्धिनिःश्वासविवृद्धतृष्णमिति । शोभनो गन्धो यस्य सः सुगन्धिः । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः(५. ४. १३५)इतीत् । तादृशे निःश्वासे विवृद्धा तृष्णा यस्य तम् । भ्रमरबाधानुभावमाह — सम्भ्रमलोलदृष्टिरिति । सम्भ्रमेण लोला चञ्चला दृष्टिर्यस्याः सा तथा । अत्र किल कुलके महाकविः प्रतिभामय्या स्वदृष्ट्या लोकोत्तरसौन्दर्यसौकुमार्यादिभिः स्वत एव रमणीयं तत्कालोचितभूषाविलासादिभिश्च नितरां हृदयङ्गमं देवीशरीरं साक्षात्कृत्य स्वशक्त्या सहृदयानामपि साक्षात्कारपदवीं नीतवानिति भाविकमलङ्कारः । अत्रापि पूर्ववदेवानुसन्धातॄणामखिलक्लेशनाश एव महाकारुणिकस्य कवेरभिप्रायः ॥ ५६ ॥

**तां वीक्ष्य सर्वावयवानवद्यां**
**रतेरपि ह्रीतिमिवादधानाम् ।**
**जितेन्द्रिये शूलिनि पुष्पकेतुः**
**स्वकर्मसिद्धिं पुनराशशंस ॥ ५७ ॥**

(प्रकाशिका)

इत आरभ्य प्रयोज्यस्य देवस्याभियोक्त्या देव्यास्तत्सहोत्थायिनः कामस्य तत्सख्यादीनां च वृत्तं यथास्वमवसरे तिलतण्डुलकन्यायेन वर्णयति । तत्र तावल्लब्धबलस्य कामस्य वृत्तमाह —

**तामिति । ह्रीतिमादधानामिवेति रूपाभिमानमपहरन्तीमित्यर्थः ।**

१. 'षणवि' घ. पाठः. २. 'ह्रीपदमाद' मुद्रितकोशपाठः. ३. 'चापः' मुद्रितकोशपाठः. ४. 'हायि' ङ. पाठः. ५. 'केन' ख. घ. ङ. पाठः.

**जितेन्द्रिये जितेन्द्रियेऽपीत्यर्थः। शूलिनीति तीक्ष्णदण्डत्वं द्योत्यते. पुष्पकेतुरिति सुकुमारोपकरणत्वम् । पुनश्शब्देनाशंसायाः पूर्वत्रुटितत्वमनुसंहितम् ॥ ५७ ॥**

(विवरणम्)

अथ तादृशदेवीदर्शनलब्धबलस्य कामस्यावस्थामाह —

तामिति। पुष्पकेतुः तां वीक्ष्य जितेन्द्रिये शूलिनि पुनः स्वकर्मसिद्धिम् आशशंस। पुष्पकेतुः पुष्पमेव केतुर्यस्य सः कामदेवः। अनेनात्मनः सुकुमारसाधनत्वमुक्तम् । तां पार्वतीं वीक्ष्य सम्यगवलोक्य । जितेन्द्रिये जितानीन्द्रियाणि येन तस्मिन्। उपरतेन्द्रियव्यापारेऽपीत्यर्थः । शूलिनीत्यनेन तीक्ष्णदण्डत्वादनभिभवनीयत्वं द्योत्यते । पुनश्शब्देनाशंसायाः पूर्वं भग्नत्वमनुसंहितम्। स्वकर्मसिद्धिं स्वस्य कर्मणः हरचित्तवशीकरणव्यापारस्य सिद्धिं फलप्राप्तिम् आशशंस श्रद्दधे । अत्र परस्मैपदित्वं चिन्त्यम्। तद्दर्शनेन स्वकर्मलाभाशंसायां हेतुमाह — सर्वावयवानवद्यामिति। सर्वेष्ववयवेष्वनवद्यामवद्यरहिताम्। निर्दोषामिति यावत्। अत एवोत्प्रेक्षते — रतेरपि ह्रीतिमादधानामिवेति । रतेः कामदेवेन सह तत्रागतायाः कामपत्न्याः । अपिशब्देनान्यासां का गति(रिति) द्योत्यते। ह्रीतिं लज्जाम्। 'ह्री लज्जायामि'ति धातोः स्त्रियां क्तिन्। आदधानां विरचयन्तीमिव। रतिरपि तामवलोक्य किमपि व्रीलाकुला नूनं जातैवेत्यर्थः । तस्या रूपाभिमानदर्पं हरन्तीमिति भावः । शूलिनस्तीक्ष्णदण्डत्वेऽपि पुष्पकेतुः सुकुमारसाधनस्यात्मनस्तज्जयो नूनमनया भविष्यतीति कल्पितवानिति भावः ॥ ५७ ॥

**भविष्यतः पत्युरुमा च शम्भोः**
**समाससाद प्रतिहारभूमिम्।**
**योगात् स चान्तः परमात्मसंज्ञं**
**दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥**

(प्रकाशिका)

अथ कथां संविदधाति—

**भविष्यत इति। भविष्यतः पत्युरिति प्राप्तौ लज्जामन्थरत्वं द्योत्यते। प्रतिहारभूमिं द्वारदेशम्। योगादुपारराम, योगश्चित्तवृत्तिनिरोधः। चशब्दौ दैवाद् यौगपद्यं सूचयतः॥ ५८॥**

(विवरणम्)

अथ कथामेवानुसन्दधान आह—

भविष्यत इति। उमा शम्भोः प्रतिहारभूमिं समाससाद च। सः परमात्मसंज्ञं परं ज्योतिः अन्तर्दृष्ट्वा योगादुपारराम च। उमा पार्वती शम्भोः शिवस्य प्रतिहारभूमिं द्वारप्रदेशं समाससाद प्राप्तवती। सः शम्भुः। परमात्मसंज्ञं परमात्मेति संज्ञा यस्य तादृशम्। परं ज्योतिः दृश्यप्रपञ्चोत्तीर्णं स्वयम्प्रकाशस्वरूपम् अन्तः हृदयकुहरे दृष्ट्वा साक्षात्कृत्य योगात् समाधेः उपारराम उपरतोऽभूत्। 'व्याङ्परिभ्यो रमः' (१. ३. ८३) इति परस्मैपदम्। परमात्मसाक्षात्कारपर्यन्तो हि योगः। अत्र चशब्दद्वयेन दैवादागतं यौगपद्यं द्योत्यते, प्रयोज्यस्योपावर्तनमित्यत्रोक्तमवसरोपस्थानं च। ननु 'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्' (स. १०. श्लो. ६.) इति रघुवंश उक्तम्। अत्र पुनः कामदहनाद्यनर्थप्राप्तिरेव भाविनी। अत आह—पत्युः भविष्यत इति। भर्तृत्वेन भविष्यत इत्यर्थः। अनेन देवीप्राप्तेर्लब्धावसरत्वं द्योत्यते। अपिच मुखदर्शनमात्रं तदानीमेव भविष्यति। 'उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि' (श्लो. ६७) इति वक्ष्यमाणत्वात्। समुच्चयोऽत्रालङ्कारः। गुणक्रियायौगपद्यं समुच्चय इति॥ ५८॥

१. 'द्योतय' ख. ग. घ. ङ. पाठः.

ततो भुजङ्गाधिपतेः फणाभि-
रधः कथञ्चिद् धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः
पर्यङ्कबन्धं निबिडं बिभेद ॥ ५९ ॥

(प्रकाशिका)

योगावसानिकं विधिमाह —

तत इति । फणाभिरिति सर्वोपप्रसर उक्तः । कथञ्चित् कृच्छ्रात् शनैरिति शास्त्रसिद्धो रेचनाक्रमः ॥ ५९ ॥

(विवरणम्)

अथ योगादुपरतस्य भगवतस्तदवसानकर्तव्यं विधिमाह —

तत इति । तत ईशः पर्यङ्कबन्धं बिभेद । ततः योगविरामानन्तरम् ईशः परमेश्वरः पर्यङ्कबन्धं वीरासनं बिभेद विसृष्टवान् । योगादुपरते त्रैलोक्यात्मके भगवति तच्छरीरगौरवमप्यनन्तेन कथमपि सोढमित्याह — भुजङ्गाधिपतेः फणाभिः अधः कथञ्चिद् धृतभूमिभाग इति । भुजङ्गानां नागानाम् अधिपतेः अनन्तस्य । फणाभिरिति बहुवचनेन सर्वासामपि स्वशक्तीनां तत्रैवोपयोगविधानमुक्तम् । अधः क्षितितलस्याधोभागे कथञ्चिद् यथाकथञ्चित् । धृतभूमिभागः, धृतः स्वावस्थानभूमिभागो यस्य स तथोक्तः । भगवति योगादुपरते तद्भारमसहमानेनानन्तेन सर्वा अपि फणास्तदधोभाग एवाधाय भूमिर्धृताभूदिति भावः । कुम्भेन क्रमेण पूरितानां प्राणवायूनां योगशास्त्रोक्तरेचनक्रमेण विमुक्तिमाह—शनैः कृतप्राणविमुक्तिरिति । शनैः योगशास्त्रोक्त-

१. 'ग्रे' मुद्रितकोशपाठः. २. 'द्ध' ख. घ. ङ. पाठः. ३. 'न' ख. घ. ङ. पाठः. ४. 'वः । क्र' क. पाठः.

क्रमेणेत्यर्थः । कृतः प्राणानां शरीरवायूनां विमुक्तिः मोचनं येन स तथा । भगवद्बद्धस्य पर्यङ्कबन्धस्य योगशास्त्रानुगुणत्वमाह — निबिडमिति । अच्छिद्रमित्यर्थः । अच्छिद्रत्वं च योगशास्त्रसिद्धम् ॥ ५९ ॥

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥

(प्रकाशिका)

अथ नायिकानायकयोः परस्परावलोकनं घटयितुमाह —

**तस्मा** इति । तस्मै लब्धावसराय । प्रणिपत्येति समुदाचारः । शुश्रूषयेत्यनौचित्यपरिहारः । अनुमतोऽनुज्ञातः । मात्रशब्देन सत्त्वजं माधुर्यमुक्तम् । 'श्लक्ष्णो विकारो माधुर्यं संक्षोभे सुमहत्यपी'ति ॥ ६० ॥

(विवरणम्)

अथ नायिकानायकयोः परस्परदर्शनोपायमाह —

**तस्मा** इति । नन्दी प्रणिपत्य शैलसुतां शुश्रूषया उपेतां तस्मै शशंस । नन्दी नन्दीश्वरः । प्रणिपत्येत्यनेन भृत्यानां समुदाचार उक्तः । शैलसुतां पार्वतीम् । शुश्रूषया प्रतिदिनं क्रियमाणया परिचर्यया हेतुभूतया । नात्र किञ्चिदनुचितत्वमस्तीति भावः । देवस्य सर्वसेव्यत्वात् । उपेतां प्राप्ताम् । तस्मै योगादुपरतत्वेन लब्धावसराय हराय शशंस निवेदितवान् । निवेदनानन्तरं हरानुज्ञापुरस्सरीं नन्दिनः प्रवृत्तिमाह — भर्तुः भ्रूक्षेपमात्रानुमतप्रवेशाम् एनां प्रवेशयामास चेति । भर्तुः स्वामिनो हरस्य । भ्रूक्षेपमात्रानुमतप्रवेशाम् ।

१. 'द्रं च' घ. पाठः. २. 'सदा' क. ख. ग. पाठः

भ्रुवः क्षेपो भ्रूक्षेपः । क्षेपश्चालनम् । एकस्या भ्रुवश्चालनमात्रेणेत्यर्थः । अनेन सत्त्वजं माधुर्यमुक्तम् । 'श्लक्ष्णो विकारो माधुर्यं संक्षोभे सुमहत्यपी'त्युक्तत्वात् । अनुमतः अनुज्ञातः प्रवेशः समीपप्राप्तिर्यस्याः ताम् । एनां पार्वतीं प्रवेशयामास अन्तर्भागं प्रापयामास च । एककर्तृकयोः शंसनप्रवेशनक्रिययोः समुच्च(यो ? ये)ऽत्र चशब्दः ॥ ६० ॥

तस्याः सखीभ्यां प्रणिपत्य पूर्व
स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥

(प्रकाशिका)

देव्या देवोपस्थाने क्रममाह —

तस्या इति । पूर्वं देवीप्रणामात् प्रागित्यर्थः । स्वहस्तलून इति सौष्ठवार्थम् । शिशिरात्ययस्य वसन्तस्य । मूले निकटे । भिन्नो मिश्रः । प्राक् पुष्पविकिरणमाभ्यामीश्वरभावज्ञानार्थमिति दक्षिणावर्तः । देव्याः शालीनतापनयनार्थत्वं तु युक्तम् ॥ ६१ ॥

(विवरणम्)

नायकदर्शनानन्तरं सञ्जातसात्त्विकविकाराया देव्या लज्जापनोदार्थमादौ तत्सखीभ्यामेव परमेश्वरसेवा कृतेत्याह —

तस्या इति । तस्याः पूर्वं सखीभ्यां शिशिरात्ययस्य पुष्पोच्चयः त्र्यम्बकपादमूले प्रणिपत्य व्यकीर्यत । तस्याः देव्याः पूर्वम् । 'अन्यारादितरर्ते दिक्शब्द-'(२. ३. २९)इत्यादिना पञ्चमी । देवीप्रणामात् प्रागित्यर्थः । स-

१. 'यस्तत्र' क. ख. पाठः. २. 'पातपू' मुद्रितकोशपाठः ३. 'र्थं तु' ख. ङ. पाठः

खीभ्यां विजयामालिनीभ्यां शिशिरात्ययस्य वसन्तस्य । पुष्पोच्चयः पुष्पाणामुच्चयः समूहः । वसन्तकुसुमराशिरित्यर्थः । त्र्यम्बकपादमूले त्र्यम्बकस्य हरस्य पादमूले पादयोर्मूले निकटे । प्रणिपत्य नमस्कृत्य । व्यकीर्यत विक्षिप्तोऽभूत् । पुष्पोच्चयस्य सौष्ठवद्योतकं विशेषणमाह — स्वहस्तलून इति । आत्मनो हस्ताभ्यामेव लूनः अवचितः, परमेश्वरभक्त्या स्वयमेव शिक्षापूर्वकमाहृत इत्यर्थः । दर्शनीयत्वमाह — पल्लवभङ्गभिन्न इति । भग्नाः पल्लवाः पल्लवभङ्गाः, पल्लवभङ्गैर्भिन्नो मिश्रः पल्लवभङ्गभिन्नः । स्वयमेवाहृतैः पल्लवैरुपेत इत्यर्थः ॥ ६१ ॥

उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन
मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥

(प्रकाशिका)

अत एवाह —

उमेति । अत्र विशेषणानि रत्युद्दीपनाभिप्रायेणोपात्तानीति परिकरः प्रकृतां प्रणामक्रियामुपस्करोति ॥ ६२ ॥

(विवरणम्)

अथ देव्याः प्रणाममाह —

उमापीति । उमापि मूर्ध्ना वृषभध्वजाय प्रणामं चकार । उमा पार्वती । अपिशब्दः पूर्वोक्तसखीप्रणामसमुच्चयार्थः । वृषभध्वजाय परमेश्वराय प्रणामं प्रणमनं चकार कृतवती । प्रणामसमये देव्याः प्रह्वत्वमाह — नीलालकमध्यशोभि नवकर्णिकारं विस्रंसयन्तीति । नीलानां कृष्णवर्णानामलकानां मध्ये शोभितुं शीलमस्येति तथा । नवकर्णिकारं नवमभिनवं कर्णिकारं

१. 'रः कृ' इ. पाठः.

कर्णिकारकुसुमम् । विस्रंसयन्ती अत्यन्तनम्रशिरस्तया निपातयन्ती । अनेनात्यन्तप्रवणत्वमुक्तम् । अत्र नीलशब्दनवशब्दाभ्यामलककर्णिकारकुसुमयोः परभागलाभातिशयः सूचितः । कर्णावतंसपल्लवोऽपि प्रणामसमये गलित इत्याह — कर्णच्युतपल्लवेनेति । कर्णात् च्युतः गलितः पल्लवः कर्णावतंसपल्लवो यस्य तेन मूर्ध्ना । अत्र प्रणामक्रियायां लालित्यापादकानि विशेषणानि रत्युद्दीपनपरतया प्रयुक्तानीति परिकरोऽलङ्कारः ॥ ६२ ॥

अनन्यभाजं पतिमाप्नुहीति
सा भव्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति पाके विपरीतमर्थम् ॥ ६३ ॥

(प्रकाशिका)

प्रत्यभिवादनप्रकारमाह

अनन्येति । अन्यां न भजतीत्यनन्यभाक् । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । भव्यमेव, न केवलमाचारसिद्धम् । भव्यं भावि । भावित्वमेवोपपादयति — न हीति । ईश्वरव्याहृतयः आगमप्रभृतयः । कदाचिदिति स्वतः प्रामाण्यं द्योतयति । पुष्णन्तीत्यनेन कारकत्वमप्यस्तीति द्योतयति । पाके परिणामे ॥ ६३ ॥

(विवरणम्)

देवं प्रणतस्य देवस्याशीर्वादप्रकारमाह —

अनन्येति । भवेन सा अनन्यभाजं पतिम् आप्नुहि इति भव्यमेव अभिहिता । भवेन रुद्रेण । 'भवो भीमः स्थाणू रुद्र' इत्यमरः । सा पार्वती ।

१. 'तथ्यमे' मुद्रितकोशपाठः. २. 'लो' मुद्रितकोशपाठः. ३. 'त्रेण पुं' ङ. पाठः.

अनन्यभाजम् । अन्यां स्त्रियं न भजत इत्यनन्यभाक् । अन्यशब्दस्य सर्वनामत्वात् पुंवद्भावः । पतिं भर्तारम् । भार्यान्तररहितं भर्तारमित्यर्थः । सपत्नीसद्भावो हि स्त्रीणां परं दुःखकारणमिति भावः । आप्नुहि प्राप्नुहि । इतिशब्दः प्रकारवचनः । भव्यं भावि । न केवलं कन्यकाजनप्रणामेष्वाचारसिद्धत्वादेवमुक्तं, किन्तु भाव्यर्थकथनमेवेत्येवकारस्यार्थः । अभिहिता उक्ता । भावित्वमेवोपपादयति—ईश्वरव्याहृतयः लोके कदाचिद् विपरीतमर्थं न पुष्णन्ति हीति । ईश्वराणां महात्मनां व्याहृतयः उक्तयः लोके लोकत्रये कदाचित् कालत्रयेऽपि विपरीतमन्यथाभूतम् अर्थं न पुष्णन्ति न प्राप्नुवन्ति । ईश्वराणां वचनं देशान्तरे कालान्तरेऽवस्थान्तरे वा न व्यभिचरतीत्यर्थः । तत्प्रतिबन्धकं दुरितं निरस्यापि साध्यं साधयत्येवेति पुष्णन्तीत्यनेन द्योत्यते । 'पुष पुष्टावि'ति धातुः । हिशब्दः प्रसिद्धौ । प्रसिद्धिश्च श्रुतिस्मृतिषु । 'पाक' इति पाठे परिणाम इत्यर्थः ॥ ६३ ॥

**कामस्तु बाणावसरं प्रतीक्ष्य**
**पतङ्गवद्वह्निमुखं विविक्षुः ।**
**उमासमक्षं हरबद्धलक्षः**
**शरासनज्यां मुहुराममर्श ॥ ६४ ॥**

(प्रकाशिका)

तस्मिन्नवसरे कामस्योद्यममाह

**काम** इति । तुशब्दोऽवस्थान्तरद्योतकः । बाणावसरं परिचयविशेषमित्यर्थः । पतङ्गवत् शलभवत् । वह्निमुखं विविक्षुः महासाहसं कर्तुकाम इत्यर्थः । इतोऽपि किञ्चित् प्रसृतं परिचयं प्रतिपाल्य प्रहरिष्याम्येनमिति व्यवसित इत्यर्थः । उमासमक्षं देव्याः समक्षं यथा भवति । इदं

१. 'क्ष्यः' मुद्रितकोशपाठः. २. 'इव ।' ङ. पाठः.

देवीप्रोत्साहनार्थम् । हरे बद्धलक्षो दत्तदृष्टिरित्यर्थः । ज्यापरामर्शनं शरसन्धानपूर्वरङ्गः ॥ ६४ ॥

(विवरणम्)

अथ लब्धावसरस्य मदनस्योद्योगमाह—

कामस्त्विति । कामः तु बाणावसरं प्रतीक्ष्य उमासमक्षं शरासनज्यां मुहुः आममर्श । कामः कामदेवः । तुशब्दोऽवस्थान्तरद्योतनार्थः । बाणावसरं बाणस्यावसरं नायिकानायकयोः परस्परपरिचयविशेषरूपं प्रहरणावकाशं प्रतीक्ष्य प्रतिपाल्य । उमासमक्षमित्यामर्शनक्रियाविशेषणम् । उमायाः पार्वत्याः समक्षं प्रत्यक्षं यथा भवति तथा । ज्यापरामर्शनस्योमासमक्षत्वमहमस्मि ते सहाय इति देवीप्रोत्साहनार्थम् । शरासनज्यां शरासनस्य चापस्य ज्यां शिञ्जिनीम् । मुहुः पुनः पुनः आममर्श आमृष्टवान् । ज्यापरामर्शश्च धन्विनां शरसन्धानस्य पूर्वरङ्गतया प्रसिद्धः । अथ कामस्य साहसोद्योगं कविः सोपहासमाह— पतङ्गवद्वह्निमुखं विविक्षुरिति । पतङ्गवच्छलभ इव । वह्निमुखं वह्नेर्मुखं, भोक्तुकामस्य व्यात्तवदनस्य वह्नेरग्नेर्मुखं वदनकुहरमेव । विविक्षुः प्रवेष्टुकामः । अतिसाहसमेव कर्तुकाम इत्यर्थः । ज्यापरामर्शसमयोचितं स्वभावमाह—हरबद्धलक्ष इति । हरे परमेश्वर एव बद्धलक्षः, बद्धदृष्टिरित्यर्थः । शरनिपाताधिकरणं परमेश्वरमेव सावधानमवलोकयन्निति भावः । नायिकानायकयोरितोऽपि किञ्चिदुपचिते सति परिचये सहसैव प्रहरिष्याम्येनमिति शरसन्धानं कर्तुमुद्युक्तस्तस्थावित्यर्थः ॥ ६४ ॥

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखै-
र्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥

१. 'बद्धद' ङ. पाठः.

(प्रकाशिका)

परिचयस्य कारणान्तरमाह —

अथेति । उपनिन्ये उपजहार । तपस्विन इत्युपायनविशेषौचित्यार्थम् । ताम्ररुचेत्युद्दीपनाभिप्रायम् । मन्दाकिनीसम्बन्धात् श्लाघ्यत्वम् ॥ ६५ ॥

(विवरणम्)

दैवात् परिचयस्य कारणान्तरमपि तदैव जातमित्याह —

अथेति । अथ गौरी तपस्विने गिरिशाय ताम्ररुचा करेण मन्दाकिनीपुष्करबीजमालाम् उपनिन्ये । अथ प्रणामानन्तरं गौरी पार्वती । तपस्विन इत्यनेन तादृशोपायनविशेषौचित्यं द्योत्यते । गिरिशाय हराय । ताम्ररुचा ताम्रा रक्ता रुक् शोभा यस्य तादृशेन करेण । उद्दीपनाभिप्रायमेतद्विशेषणम् । मन्दाकिनीपुष्करबीजमालां, मन्दाकिन्यां गङ्गायां यानि पुष्कराणि पद्मानि तेषां बीजैः कृतां मालाम् । पद्माक्षमालामित्यर्थः । मन्दाकिनीशब्देन पद्माक्षाणां सुलभत्वमुक्तं, मन्दाकिन्या हिमवच्छिखरवर्तित्वात् । मन्दाकिनीसम्बन्धेन पद्माक्षाणां पावनत्वाधिक्यं च द्योत्यते । उपनिन्ये उपजहार । पद्माक्षस्य धारणमात्रमेवातः परं कर्तव्यं, संस्कारस्तु सर्वोऽपि कृत एवेत्याह — भानुमतः मयूखैः विशोषितामिति । भानवो रश्मयोऽस्य सन्तीति भानुमानित्यादित्य उच्यते । तस्य मयूखैः रश्मिभिः । विशोषितां विशेषेण शोषितां कृतशोषणाम् । भगवदुपायनार्थं स्वयमेवादाय शोषितामित्यर्थः ॥ ६५ ॥

**प्रतिग्रहीतुं प्रणयिप्रियत्वात्**
**त्रिलोचनस्तामुपचक्रमे च ।**
**सम्मोहनं नाम च पुष्पधन्वा**
**धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥**

(प्रकाशिका)

परिचयस्य प्रसरमाह —

प्रतिग्रहीतुमिति । प्रणयिनः प्रार्थयितारः प्रिया यस्य । दाक्षिण्यादित्यर्थः । तां पुष्करबीजमालाम् । नाम प्रसिद्धौ । अत्र यौगपद्येन कामस्य क्षिप्रकारित्वमुक्तम् ॥ ६६ ॥

(विवरणम्)

परिचयस्य ततोऽपि किञ्चिदाधिक्यमाह —

प्रतिग्रहीतुमिति । त्रिलोचनः प्रणयिप्रियत्वात् तां प्रतिग्रहीतुम् उपचक्रमे च । पुष्पधन्वा धनुषि सम्मोहनं नाम बाणं समधत्त च । त्रीणि लोचनानि सन्त्यस्येति त्रिलोचनः शिवः । प्रणयिनः प्रार्थयितारः । 'प्रणयः स्नेहयाच्ञयोरि'ति भोजः । ते प्रिया यस्य तस्य भावस्तत्त्वं तस्माद्धेतोः, दाक्षिण्यादित्यर्थः । तां पद्माक्षमालां । प्रतिग्रहीतुम् उपचक्रमे आरब्धवान् । पुष्पधन्वा कामः धनुषि चापे सम्मोहनं नाम सम्मोहन(मि ? इ)ति प्रसिद्धम् ।

"द्रावणः क्षोभणश्चैव वशीकरण इत्यपि ।
आकर्षणश्च कामस्य बाणः सम्मोहनोऽपरः ॥"

इत्युक्तत्वात् । बाणं शरं समधत्त संयोजयामास च । अत्र चकारद्वयेन यौगपद्यमुक्तम् । तेन च कामस्य क्षिप्रकारित्वं ध्वन्यते । सम्मोहनबाणस्य यथार्थनामकत्वमाह—अमोघमिति । सफलमित्यर्थः । सर्वत्र दृष्टसद्यःफलमिति भावः । अत्र समुच्चयोऽलङ्कारः ॥ ६६ ॥

**हरस्तु किञ्चित्परिवृत्तधैर्य-**
**श्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे**
**व्यापारयामास विलोचनानि ॥ ६७ ॥**

१. 'लुप्तधै' मुद्रितकोशपाठः.

(प्रकाशिका)

तत्फलमाह —

**हर इति । तुशब्दोऽवस्थाविशेषद्योतकः । किञ्चिदिति अगाधसत्त्वात् । उपमानेऽपि[1] किञ्चिद्धैर्यपरिवृत्तिरुदयारम्भशब्देनोपदर्शिता । बिम्बफलाधरोष्ठ इति विभावोपस्कारः । विलोचनव्यापारेण नैसर्गिक्या रतेरुदयावस्था द्योत्यते । स च औत्सुक्यावेगचापलहर्षादेर्व्यभिचारिणोऽपि साधारणः ॥ ६७ ॥**

(विवरणम्)

तादृशबाणसन्धानस्य फलमाह —

हर इति । हरः तु उमामुखे विलोचनानि व्यापारयामास । हरः त्रिलोचनः । तुशब्दः पूर्वावस्थातो व्यतिरेकं द्योतयति । उमामुखे उमायाः पार्वत्या मुखे । विलोचनानि त्रीण्यपि लोचनानि । व्यापारयामास प्रवर्तयामास । उमामुखे विलोचनव्यापारस्य हेतुमाह — किञ्चित्परिवृत्तधैर्य इति । किञ्चित्परिवृत्तम् ईषदन्यथाभूतं, (तद्धि? न तु वि)गलितं, धैर्यं यस्य स तथा । हरधैर्यस्यापि तदानीं किञ्चिदन्यथात्वं जातमिति भावः । महासत्त्वत्वादीषत्परिवृत्तत्वम् । अत्रोपमामाह — चन्द्रोदयारम्भे अम्बुराशिरिवेति । चन्द्रोदयस्यारम्भे अम्बुराशिः समुद्र इव । अत्राप्युदयारम्भशब्देन उपमानभूतस्य समुद्रस्यापि किञ्चिद्धैर्यपरिवृत्तिरुपदर्शिता । देवस्य देव्यां सञ्जातं भावविशेषं प्रकाशयन्नुमामुखं विशिनष्टि — बिम्बफलाधरोष्ठ इति । बिम्बस्य लताविशेषस्य फलं बिम्बफलं, तदिव रक्तवर्णोऽधरोष्ठो यस्य तस्मिन् । अनेन विलोचनव्यापारयोग्यत्वमुक्तम् । अत्र देवस्य तादृशे वदने विलोचनव्यापारेण स्वाभाविक्या रतेरुद्बोधावस्था दर्शिता । स तु विलोचनव्यापारः रतेर्व्यभिचारिणामौत्सुक्यावेगचापलहर्षादीनामप्युपलक्षणम् ॥ ६७ ॥

१. 'ने कि' ङ. पाठः.

विवृण्वती शैलसुतापि भाव-
मङ्गैः [1]कुंचद्बालकदम्बकल्पैः ।
[2]साचिक्रियाचारुतरेण तस्थौ
मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥

(प्रकाशिका)

[3]हरदृष्टिपाते देव्या दशां वर्णयति —

विवृण्वतीति । शैलसुतापी[4]ति, न केवलं देवो विवृण्वन् विलोचनानि व्यापारितवान् । कुचन्तो मीलन्तः । मीलत्पुष्पबालकदम्बकल्पैरि[5]त्यर्थः । रोमाञ्चितत्वाच्च तत्सादृश्यम् । स्तनवाचिनः कुचशब्दस्यापि कुचतीति निर्वाहः, कुड्मलसन्निवे[6]शत्वात् । साचिक्रिया त्र्यश्रीकरणम् । तच्च लज्जाकार्यम् । 'तिर्यगर्थे साचि तिरोऽपी'ति सिंहः । पर्यस्तं विवर्तितम् । अनेनान्योन्यदृष्टिसमागम उक्तः ॥ ६८ ॥

(विवरणम्)

देवस्य तादृशदृष्टिपाते देव्याः समवस्थां वर्णयति —

विवृण्वतीति । शैलसुता अपि अङ्गैः भावं विवृण्वती तस्थौ । शैलसुता पार्वती । न केवलं देव एव भावं व्यवृणोत्, किन्तु शैलसुतापीत्यपिशब्दार्थः । अङ्गैः शरीरावयवैः भावमभिलापं विवृण्वती प्रकाशयन्ती तस्थौ अतिष्ठत् । अङ्गानां भावविवरणप्रकारं दर्शयति — कुचद्बालकदम्बकल्पैरिति । कुचन्तः सङ्कुचन्तः । सङ्कुचत्पुष्पा इत्यर्थः । निमीलत्पुष्पबालकदम्बसदृशैरित्यर्थः । कदम्बो वृक्षविशेषः । अङ्गानां रोमाञ्चितत्वादत्र तत्सादृश्यम् । कदम्बकुसुमानि हि रोमतुल्यदलानि । तेषां निमीलनावस्थाप्रदर्शनेन रोमाञ्चस्य निबिडत्वमुक्तम् । बालशब्देन देव्या यौवनावस्था दर्शिता ।

---

१. 'स्फुरद्बा' मुद्रितकोशपाठः. २. 'चकृता चा' मुद्रितकोशपाठः. ३. 'देवद' ख. ग. घ. ङ. पाठः. ४. 'पि, न' ङ. पाठः. ५. 'स्य कु' ङ. पाठः. ६. 'शि' ख. पाठः.

तेन मनोहारित्वातिशयः। अन्योन्यदृष्टिसमागमोऽपि जात इत्याह—पर्यस्त-विलोचनेन मुखेन उपलक्षिता इति। पर्यस्तविलोचनेन पर्यस्तं विवर्तितं विलोचनं नेत्रं यस्य तादृशेन मुखेन उपलक्षिता। भगवद्दृष्टिपातसञ्जातया लज्जया विवर्तितनयनमुखारविन्देत्यर्थः। तादृशस्य वदनस्य पुनरपि लज्जाद्योतकं विशे-षणमाह—साचिक्रियाचारुतरेणेति। साचिक्रिया त्र्यश्रीकरणम्। 'तिर्यगर्थे साचि तिरोऽपी'ति सिंहः। त्र्यश्रीकरणं च लज्जाकार्यम्। तेन चारुतरेण अत्यन्तचारुणा। अत्र देव्याः शङ्करे पूर्वमुत्पन्ना रतिः साभिलाषतदवलो-कनवसन्तादिभिरुद्दीप्यमाना रोमाञ्चोत्कण्ठादिभिः सात्त्विकव्यभिचार्यादि-भिरनुबध्यत इत्यवसेयम्॥ ६८॥

अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद् बलवन्निगृह्य।
हेतुं स्वचेतोविकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम्॥ ६९॥

(प्रकाशिका)

अथ बलवद्भावान्तरोदयेन सत्त्वनिधौ देवे रतेः प्रशमं दर्शयति

अथेति। पुनरिति प्रत्याहरणमुक्तम्। वशित्वादिति। जितेन्द्रियो हि प्रमादादुत्पथगामीन्यपीन्द्रियाणि नियन्तुं शक्नोति, शान्तरसवासनाया अप्रमुषितत्वादित्यर्थः। बलवत् सुष्ठु। स्वशब्देन हेतोरनल्पत्वं द्योत्यते। उपान्तेषु मुखेषु। अत्रेन्द्रियक्षोभनियमनेन शान्तव्यभिचारिण्या मतेरुदयः प्रतीयते। दिदृक्षुरिति तद्व्यभिचार्यौत्सुक्यम्। दृष्टिसर्जनमनुभावः॥ ६९॥

(विवरणम्)

अथ सत्त्वनिधौ भगवति झटिति शान्तरसव्यभिचारिण्याः परमार्थविमर्शनरूपाया[2] मतेराविर्भावे सति तस्याः प्राबल्यात् तादृश्या अपि रतेः प्रशमं दर्शयति—

१. 'न च शा' क. ख. ग. पाठः. २. 'र्शरू' ङ. पाठः.

अथेति । अथ अयुग्मनेत्रः वशित्वाद् इन्द्रियक्षोभं पुनः बलवद् निगृह्य स्वचेतोविकृतेः हेतुं दिदृक्षुः दिशाम् उपान्तेषु दृष्टिं ससर्ज । अथ तत्तादृशस्य प्रशमस्य तादृशावस्थाप्राप्त्यनन्तरम् । अयुग्मनेत्रः त्रिलोचनः । द्व्यादयो युग्मसङ्ख्या युग्मशब्देनोच्यन्ते । युग्मसङ्ख्याकनेत्रो न भवतीत्ययुग्मनेत्रः । वशित्वाद् जितेन्द्रियत्वात् । प्रमादादुत्पथगामिनामिन्द्रियाणां निग्रहे वशिनामेव हि सामर्थ्यमित्यर्थः । शान्तरसस्यात्यन्तप्रमुषितत्वाभावादिति भावः । इन्द्रियक्षोभम् इन्द्रियाणां चक्षुरादीनां क्षोभं विकारम् । पुनश्शब्देन प्रत्याहरणमुक्तम् । पुनरपीत्यर्थः । बलवदिति निग्रहक्रियाविशेषणम् । बलवत् सुष्ठु यथा भवति तथा निगृह्य नियम्य । क्षोभवासनामपि परिहृत्येत्यर्थः । स्वचेतोविकृतेः स्वस्य चेतसः मनसः विकृतेः विकारस्य । अत्र स्वशब्देन बलवता कारणेन विनानुपपत्तिरुक्ता । हेतुं कारणं दिदृक्षुः द्रष्टुमिच्छुः दिशामुपान्तेषु मुखेषु दृष्टिं नेत्रं ससर्ज विससर्ज । अत्र शान्तरसव्यभिचारिण्या मतेरुदय इन्द्रियक्षोभनियमने हेतुः । क्षोभकारणदर्शनौत्सुक्यं तादृश्या मतेर्व्यभिचारि । दृष्टिविसर्गस्तस्या अनुभाव इति विवेकः ॥ ६९ ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं
प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥

(प्रकाशिका)

स इति । चक्रीकृतं मण्डलीकृतम् । इदमालीढाख्यं स्थानम् । 'आलीढं तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्यय' इति यादवः । प्रहर्तुमभ्युद्यतं स्पष्टापकारमित्यर्थः । अत्रालीढस्थानस्वभावोक्तिर्देवक्रोधस्य वक्ष्यमाणस्यालम्बनविभावतां पुष्णाति ॥ ७० ॥

१. 'नां' क. पाठः.

(विवरणम्)

दृष्टिविसर्गस्य फलमाह —

स इति । सः आत्मयोनिं ददर्श । सः अयुग्मनेत्रः आत्मयोनिं कामदेवं ददर्श दृष्टवान् । अयमेव चेतोविकृतिहेतुरिति दर्शनमात्रेणैव ज्ञातुं शक्यमिति द्योतयितुमात्मयोनेर्विशेषणान्याह — दक्षिणापाङ्गनिविष्टमुष्टिमित्यादिभिः । दक्षिणे अपाङ्गे नेत्रकोणे सशरचापमौर्वीविकर्षणवशान्निविष्टा स्थिता मुष्टिर्यस्य तम् । नतांसं विनम्रदक्षिणांसम् । आकुञ्चितसव्यजानुम् आकुञ्चितः वक्रीकृतः सव्यजानुः वामपादजानुर्येन तम् । अनेनालीढाख्यो धन्विनामवस्थानविशेष उक्तः ।

"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् ।
त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृती ॥
अन्वर्थं स्यात् समपदमालीढं तु ततोऽग्रतः ।
दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्यये ॥"

इति यादवः । उक्तं च रघुवंशे — 'अतिष्ठदालीढविशेषशोभिना' (स. ३. श्लो. ५२) इति । इयमालीढस्वभावोक्तिर्वक्ष्यमाणस्य देवकोपस्यालम्बनविभावः । चापस्याप्यवस्थामाह — चक्रीकृतचारुचापमिति । चक्रीकृतं मण्डलीकृतं चारु सुन्दरं चापं येन तम् । अनेन प्रहारस्य दृढानित्वं सूचितम् । एभिर्विशेषणैः सिद्धमर्थमेवाह — प्रहर्तुमभ्युद्यतमिति । प्रहर्तुमात्मनि बाणप्रयोगं कर्तुम् अभ्युद्यतमुद्युक्तम् । अनेन स्पष्टापकारत्वमुक्तम् ॥ ७० ॥

तपःपरामर्शविवृद्धमन्यो-
र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल निष्पपात ॥ ७१ ॥

(प्रकाशिका)

अत एवाह —

तप इति । परामर्शो धर्षणम् । भ्रूभङ्गेत्यादि रौद्रेव्यभिचारिण औग्र्यस्यानुभावप्रपञ्चनम् । कृशानुरिति, यः कल्पान्तेषु विश्वं संहरति। यथाह मुरारिः —

"नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः ।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत् ॥"

(अङ्क. ७. श्लो. ३१)

इति । किलैतिह्ये ॥ ७१ ॥

(विवरणम्)

भगवतस्तत्तादृशमदनदर्शनजं क्रोधं तत्फलं चाह —

तप इति । तपःपरामर्शविवृद्धमन्योः तस्य तृतीयादक्ष्णः कृशानुः सहसा निष्पपात किल । तपःपरामर्शविवृद्धमन्योः तपसः परामर्शेन धर्षणेन हेतुना विवृद्धः प्रवृद्धः मन्युः क्रोधो यस्य । तृतीयादक्ष्णः ललाटलोचनात् कृशानुः अग्निः । यः किल कल्पान्ते सकलमपि लोकं भस्मसात्करिष्यति । यदाह मुरारिः —

"नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः ।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत् ॥"

इति । सहसा झटिति निष्पपात निर्जगाम । मदनमभिमुखीकृत्येति शेषः । किलैतिह्ये । अनेन निजवचनस्य मूलभूतं प्रमाणं दर्शयति । रौद्ररसव्यभिचारिणः क्रौर्यस्यानुभावं प्रपञ्चयति — भ्रूभङ्गेत्यादिना । भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य

१. 'त आह' ङ. पाठः. २. 'द्रस्य व्य' ङ. पाठः. ३. 'तृतीयलो' क. पाठः.

भ्रूभङ्गेन भ्रूकुट्या दुष्प्रेक्षं दुर्दर्शं मुखं यस्य तस्य । कृशानुनिष्पतनस्यावस्थां दर्शयति — स्फुरन्निति । प्रकाशमानः, आदौ तावत् तृतीयलोचने किञ्चित्प्रकाशमानो दृष्ट इत्यर्थः । द्वितीयावस्थां दर्शयति — उदर्चिरिति । उद्गतज्वालः, तदनन्तरं जाज्वल्यमानो दृष्ट इत्यर्थः । अत्र स्फुरन् उदर्चिः निष्पपातेति पदत्रयेण कृशानुस्वभावसिद्धः क्रमो विवक्षित इत्यवसेयम् ॥ ७१ ॥

**कोपं प्रभो! संहर संहरेति**
**यावद् गिरः खे मरुतां चरन्ति ।**
**तावत् स वह्निर्भवनेत्रजन्मा**
**भस्मावशेषं मदनं चकार ॥ ७२ ॥**

(प्रकाशिका)

तत्फलमाह —

**कोपमिति** । संहर प्रार्थने लोट् । सम्भ्रमे द्विर्वचनम् । मरुतां कामं नियुज्य प्रतिपालयताम् । यावच्चरन्तीति लटो निर्वाहो रघुवंशप्रकाशिकायां 'यावदादिशति' (स.११.श्लो.३) इत्यत्र दर्शितः । तत्समकालमेव स दग्ध इत्यर्थः । भवनेत्रजन्मेति तत्समर्थत्वं द्योत्यते । अनेन परमेश्वरप्रातिकूलस्य देवानामुद्यमस्य भङ्गो दर्शितः ॥ ७२ ॥

(विवरणम्)

कृशानुनिष्पतनस्य फलमाह —

**कोपमिति** । प्रभो! त्वं कोपं संहर संहर इति मरुतां गिरः यावत् खे चरन्ति तावद् भवनेत्रजन्मा वह्निः मदनं भस्मावशेषं चकार । प्रभो ! हे त्रैलोक्याधिपते ! । हरप्रभावदर्शनेन सञ्जातपरमार्थबोधानामत एव विगलिता-

१. 'भ्रु' घ. पाठः. २. 'स्थां प्रद' घ. पाठः. ३. 'क्रोधं प्र' मुद्रितकोशपाठः. ४. 'क्रोधमि' क. पाठः.

भिमानानां देवानामियमुक्तिः। संहरेति प्रार्थनायां लोट्। द्विर्वचनं तु सम्भ्रमं प्रतिपादयति। इतिशब्दः प्रकारवाची। मरुतां कामं नियुज्य निजमनीषितलाभदर्शनार्थं हरसमीपे वर्तमानानां देवानाम्। गिरः वाचः यावद् यस्मिन् काले खे आकाशे चरन्ति। अत्र लट्प्रयोगस्यायं निर्वाहः 'तदादौ च' इति भोजसूत्रम्। तस्य चायं वृत्तिग्रन्थः—तदादौ चोपपदे भूतार्थे लड् भवतीति। वृत्तौ चायमेव श्लोक उदाहरणत्वेन दर्शितः, 'अथाह वर्णी—'(स.५.श्लो.६५) इति च। माधवस्त्वेवमाह—यावत्तावच्छब्दौ क्रिययोस्तुल्यकालतामाहतुः। गिरां चरणे वर्तमाने सति वह्निः काममदहदित्यर्थः। नहि मरुतां वचनेषु चरत्सु वह्निः काममदहदिति प्रयोगे कोऽपि दोष इति। वाक्प्रचारसमकालमेव मदनो दग्धोऽभूदित्यर्थः। भवनेत्रजन्मा भवस्य शम्भोर्नेत्राज्जन्म यस्य सः। वह्निः मदनं भस्मावशेषं भस्मैवावशेषम् अवशिष्टं यस्य तथाविधम्। चकार कृतवान्। अत्र भवनेत्रजन्मेत्यनेन दहनसामर्थ्यं द्योत्यते। देवानां परमेश्वरप्रतिकूलः समुद्यमोऽपि भग्नोऽभूदिति अनेनैव श्लोकेन दर्शितः। पुनश्च भग्नमदैर्देवैः सेनानीप्रसूत्यै भगवानभ्यर्थितोऽभूदित्यवसेयम्। अत एव षष्ठे सर्गे हर एव वक्ष्यति—

"सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः॥" (श्लो. २७)

इति॥ ७२॥

**तीव्राभिषङ्गप्रभवेण वृत्तिं**
**मोहेन संस्तम्भयतेन्द्रियाणाम्।**
**अज्ञातभर्तृव्यसना मुहूर्तं**
**कृतोपकारेव रतिर्बभूव॥ ७३॥**

(प्रकाशिका)

अथ 'रौद्रात्तु करुणो रस' इति न्यायेन देवगतस्य तथाविधस्य रौद्रस्य कार्यत्वेनोत्तरसर्गे वर्णयिष्यमाणं करुणमुपक्षिपति—

**तीव्रेति। अभिषङ्गो दुःखम्। मोहोऽत्र प्रलयः सात्त्विको भावः करुणव्यभिचारी। स च नष्टसंज्ञत्वम्। व्यसनं विपत्। मोहेन कृतोपकारेवेत्यन्वयः॥ ७२॥**

(विवरणम्)

अथ परमेश्वरगतस्य तत्तादृशस्य रौद्ररसस्य 'रौद्रात् तु करुणो रस' इति न्यायेन कार्यभूतमुत्तरसर्गे वर्णयिष्यमाणं करुणमुपक्षिपति—

तीव्रेति। रतिः मुहूर्तं मोहेन कृतोपकारा बभूव इव। रतिः कामभार्या। मुहूर्तं कञ्चित्कालमित्यर्थः। मोहेन करुणव्यभिचारिणा प्रलयाख्येन सात्त्विकेन भावेन कर्त्रा।

"स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू।
अश्रु वैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता॥
प्रलयो नष्टसंज्ञत्वं शेषाः स्युर्व्यक्तलक्षणाः।"(प्रकाशः ४.श्लो.५,६)

इति दशरूपके। कृतोपकारा कृत उपकारो यस्याः तथाविधा बभूवेव। मोहस्य कारणमाह—तीव्राभिषङ्गप्रभवेणेति। तीव्रो दुस्सहः अभिषङ्गो दुःखम्। 'अभिषङ्गस्तु कथ्यते। आक्रोशशापाभिभवसङ्गेष्वाह तु सज्जनः। दुःखे पराभवे त्वाह सिंह' इति केशवः। तस्मात् प्रभव उद्भवो यस्य तेन। मोहस्य स्वरूपमाह—इन्द्रियाणां वृत्तिं संस्तम्भयतेति। इन्द्रियाणां सान्तःकरणानां चक्षुरादीनां वृत्तिं स्वस्वविषयव्यापारम्। संस्तम्भयता सम्यक् स्तम्भयता। अत एवाज्ञातभर्तृव्यसना अज्ञातमनवगतं भर्तुः कान्तस्य व्यसनं विपत्तिर्यया सा तथा। अयमेव कृतोपकारत्वोत्प्रेक्षायां हेतुः॥ ७२॥

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावरुज्य ।
स्त्रीसन्निकर्षं परिहर्तुमिच्छ-
न्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥

(प्रकाशिका)

अथ दाह्याभावात् प्रशान्तरोषस्य देवस्य पुनरपि शान्ते विश्रान्तिमाह —

तमिति । आशु इति शान्तस्यादूरविच्छेदः प्रकाश्यते । तत्र हेतुः— तपस्वीति । नित्ययोगे मतुप् । तथाच पुराणेषु श्रूयते देवः । वज्रोऽशनिः । उपमानेन तत्स्वभावत्वं द्योत्यते । स्त्रीसन्निकर्षं परिहर्तुम् 'अङ्गारसदृशी[2] नारी घृतकुंभसमः पुमानि'ति न्यायेन देवीप्रत्यासत्तिजं स्वचित्तविकारं देव्या वैलक्ष्यविषादादेः कामपत्न्याः शोकस्य चानुसन्धानं च परिहर्तुमित्यर्थः । अन्तर्दधे अन्तर्धानेन तद्देशवासमजहात् । सभूतः सगणः । एतत् सर्वपरिच्छेदोपलक्षणं. सर्वस्यापि स्वेच्छापरिकल्पितत्वात् ॥ ७४ ॥

(विवरणम्)

अथ मदने दग्धे दाह्यस्यान्यस्याभावात् स्वयमेव शान्ते रोषे देवस्य पुनरपि प्रकृते शान्ते विश्रान्तिमाह —

तमिति । भूतपतिः तपसः विघ्नं तं वज्रः वनस्पतिमिव आशु अवरुज्य स्त्रीसन्निकर्षं परिहर्तुमिच्छन् सभूतोऽन्तर्दधे । भूतानां पतिः भूतपतिः । 'भूतेशः खण्डपरशुः' इत्यमरः । तपसः विघ्नं शरीरमवलम्ब्यावस्थितं तपोविघ्नम् । तं कामदेवम् । वज्रोऽशनिः । 'ह्रादिनी वज्रमस्त्री स्यात् कुलिशम्' इत्यमरः । वनस्पतिं वृक्षमिव । अनेनोपमानेन आशुशब्दोक्तमर्थमनुस्मारयति ।

१. 'भ्र' मुद्रितकोशपाठः. २. 'शा' ख. पाठः. ३. 'शमज' ख. पाठः. ४. 'च्छे' ख, ग, घ. पाठः.

आशु शीघ्रम् । अनेन शान्तरसस्यादूरविच्छेदः प्रकाश्यते । अवरुज्य अवभज्य । स्त्रियाः सन्निकर्षः स्त्रीसन्निकर्षः तम् । परिहर्तुं हातुम् इच्छन् । 'अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्' इति न्यायेन देवीसन्निकर्षेण ममावश्यं चित्तविकारो भविष्यति, देव्या वैलक्ष्यविषादादिदर्शनेन कामपत्न्याः शोकानुसन्धानदर्शनेन च तपसो महान् विघ्नो भविष्यतीत्याशङ्कचेत्यर्थः । सभूतः भूतगणसहितः सन् अन्तर्दधे तिरोऽधात् । तद्देशावासमजहादित्यर्थः । अत्र भूतशब्दः सर्वपरिच्छदानामुपलक्षणम् । तेषामपि स्वेच्छामात्रपरिकल्पितत्वादिच्छाभावे तिरोधानम् । एवम्भूतं तपोविघ्नं सद्य एव विनाश्य तत्क्षणमेव शान्तरसावलम्बने हेतुमाह—तपस्वीति । नित्ययोगे मतुप् । पुराणप्रसिद्धश्चायमर्थः 'शिवो योगरतः शश्वद्' इत्यादि ॥ ७४ ॥

**शैलात्मजापि पितुरुच्छिरसोऽभिलाषं**
**व्यर्थं समीक्ष्य ललितं वपुरात्मनश्च ।**
**सख्योः समक्षमिति चाधिकजातलज्जा**
**शून्या जगाम भवनाभिमुखी कथञ्चित् ॥ ७५ ॥**

(प्रकाशिका)

अथ नायिकाया वृत्तान्तमपि तावदुपसंहरति—

**शैलात्मजेति**[2] । अपीति, न केवलं देवः । पितुरिति, न तथा(त्मा)भिलाषभङ्ग इति भावः । अत्र हेतुः—उच्छिरसः[3] अभिमानिनः अभिलाषं देवोपावर्तनविषयम् । ललितं वपुरिति, व्यर्थमित्यनुषङ्गः । समक्षम् अक्ष्णोः समीपे । 'अव्ययं—' (२. १. ६) इत्यादिना समासः । 'तृतीया—' (२. ४. ८४) इत्यादिना अम्भावः । इतिशब्दः सखीसाक्षात्कारस्य लज्जाधिक्ये हेतुत्वद्योतकः । शून्येति, चेतसः शून्यत्वं चिन्ताया अनुभावः । चिन्तालज्जे चानिष्टोपालम्भजस्य शोकस्य व्यभिचारिण्यौ, स च पूर्वानुरागस्य । कथञ्चिदिति लज्जाकार्यम् ॥ ७५ ॥

१. 'मध्य ल' मुद्रितकोशपाठः. २. 'ति न' ङ. पाठः. ३. 'सा मा' ङ. पाठः.

(विवरणम्)

नायिकायाः शुश्रूषावृत्तान्तमप्युपसंहरति—

शैलात्मजेति। शैलात्मजा अपि उच्छिरसः पितुः अभिलाषमात्मनो ललितं वपुश्च व्यर्थं समीक्ष्य कथञ्चिद् भवनाभिमुखी जगाम। शैलात्मजा पार्वती। न केवलं देवस्तद्देशवासमजहाद् अपितु शैलात्मजापीत्यपिशब्दार्थः। उच्छिरसो मानिनः। अनेनाभिलाषभङ्गस्यात्यन्तदुःसहत्वमुक्तम्। अत एव पितुरभिलाषमित्युक्तं न पुनरात्मनोऽभिलाषमिति। पितुरभिलाषश्च देवोपावर्तनविषय एव। आत्मनो ललितं सुन्दरं वपुः शरीरं च व्यर्थं निरुपयोगं समीक्ष्य सम्यगवधार्य। कथञ्चित् कृच्छ्रेण। एतच्च लज्जाया अनुभावः। भवनाभिमुखी भवनं प्रत्यभिमुखी जगाम। भवनमभिमुखीकृत्य प्रतस्थ इत्यर्थः। विशेषतोऽपि लज्जाया आधिक्यमाह—सख्योः समक्षमिति अधिकजातलज्जा चेति। सख्योर्विजयामालिन्योः। समक्षम् अक्ष्णोः समीपे। प्रत्यक्षमित्यर्थः। 'अव्ययं विभक्ति—'(२.१.६) इत्यादिना समासः। 'तृतीयासप्तम्योर्बहुलम्' (२. ४. ८४) इत्यम्भावः। इतिशब्दः सखीसाक्षात्कारस्य लज्जाधिक्ये हेतुत्वं द्योतयति। अधिकजातलज्जा अत्यन्तजाता लज्जा यस्याः सा तथोक्ता। सौभाग्यभङ्गस्यान्यदर्शनमेवात्यन्तलज्जावहं, किं पुनः सखीदर्शनमिति भावः। इत्थमभिप्रवृद्धस्य मनोरथस्यात्यन्तभङ्गे जाते सति सञ्जातायाश्चिन्ताया अनुभावमाह—शून्येति। शून्यहृदयेत्यर्थः। आत्मानमप्यजानानेति भावः। अत्र शोकः पूर्वानुरागहेतुकः, चिन्तालज्जे च शोकस्य व्यभिचारिण्यौ। एतच्च सर्वं पञ्चमसर्गादौ देवीवृत्तान्तप्रस्तावे स्फुटीकरिष्यति॥ ७५॥

**सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या**
**दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।**
**सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां**
**प्रतिपथगतिरासीद् वेगदीर्घीकृताङ्गः॥ ७६॥**

१. 'ङ्गः' मुद्रितकोशपाठः.

(प्रकाशिका)

अत्र देव्याः शोच्यतां परिहरति —

सपदीति । सपद्यादायेत्यन्वयः । संरम्भः क्रोधः । मुकुलिताक्षीं 'बहुव्रीहौ सक्थ्यक्ष्णोः—' (५. ४. ११३) इति षच् । 'षिद्गौरादिभ्यश्च' (४. १. ४१) इति ङीष् । दुहितरमिति निसर्गवात्सल्यम् । अनुकम्प्यामिति तदवस्थोचितम् । दोर्भ्यामादायेत्यनुभावः । उपमानेनानुरूपता द्योत्यते । पन्थानं प्रतिगता प्रतिपथा । 'अत्यादयः क्रान्ता —' (वा० २. २. १८) इत्यादिना समासः । 'ऋक्पूरब्धूः —'(५. ४. ७४) इत्यादिना समासान्तः । येनागतस्तेनैव पथा गतवानित्यर्थः । अत्र प्रतिपथं वेगेन गमनं हिमवतो वैलक्ष्यद्योतकम् । अत्र दीर्घीकरणं महाबलत्वमहावर्ष्मत्वयोः । अत्रैतत्पर्यन्त इतिवृत्ते देवस्य दाक्षायणीविषयाया रतेस्तद्देहत्यागात् करुणेन विच्छेदः । तस्य च नैसर्गिकतत्त्वज्ञानपरिपोषितेन निर्वेदात्मना शान्तेन प्रशमः । पुनश्च देहान्तरं गताया देव्यास्तदुद्दीपनसेवाकृतिदर्शनोदिताया वासनास्थितायाः प्राक्तन्या रतेः 'प्रणयिप्रियत्वात्' (श्लो. ६६) इति दर्शितदाक्षिण्यात्मना दयावीरेण शान्तं व्यवधाय 'हरस्तु किञ्चित्' (श्लो. ६७) इत्यादिना किञ्चिदाविर्भावमुपगतायाः प्रबलवासनाव्यभिचारिण्या 'अथेन्द्रियक्षोभम्' (श्लो. ६९) इत्यादिना दर्शितया मत्याभिभवः । तस्याश्च स्मरविषयेण रौद्रेणाभिभवः । तस्मिंश्च दाह्याभावात् प्रशान्ते 'तमाशुविघ्नम्' (श्लो. ७४) इत्यादिना पुनः शान्ते विश्रान्तिरित्यजसेयम् ॥ ७६ ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

तृतीयः सर्गः ।

१. 'वस्य शो' क. पाठः. २. 'व म' ख. पाठः. ३. 'स्य नै' ख. पाठः. ४. 'कत्व' क. ख. पाठः. ५. 'सर्वाङ्क' ख. घ. पाठः. ६. 'नाशान्तव्य' ख. घ. पाठः.

(विवरणम्)

अथ पुत्र्यास्तादृशीं दशामवलोकयतो भग्नमनोरथस्य हिमवतस्तत्कालोचितां प्रवृत्तिं दर्शयति —

सपदीति। अद्रिः दोर्भ्यां दुहितरं सपदि आदाय प्रतिपथगतिः आसीत्। अद्रिः हिमवान् दोर्भ्यां स्वहस्ताभ्यां दुहितरं पुत्रीम्। अनेन निसर्गवात्सल्यास्पदत्वमुक्तम्। एतच्च सपद्यादानप्रयोजकम्। दोर्भ्यामादानं वात्सल्यस्यानुभावः। प्रतिपथगतिः पन्थानं प्रतिगता प्रतिपथा। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'ऋक्पूरब्धूः —' इत्यादिना समासान्तः। प्रतिपथा गतिर्यस्य स प्रतिपथगतिः। येन पथा पूर्वमागतस्तेनैव गतवानित्यर्थः। एतच्च वेगेन प्रतिपथगमनं वैलक्ष्यद्योतकम्। अत्रोपमामाह — सुरगजः पद्मिनीं दन्तलग्नां बिभ्रदिवेति। सुरगज ऐरावतः पद्मिनीं पद्मम्। दन्तलग्नां दन्तयोर्लग्नां सतीम्। बिभ्रद् दधानः सन्निव। यथा सुरगजः पद्मिनीं दन्ताभ्यां बिभ्रद् यथागतं गच्छति, तथा हिमवान् पुत्रीं दोर्भ्यामादायेत्यर्थः। अनेनोपमानेनानुरूपता द्योत्यते। देव्याः पारवश्यमाह — रुद्रसंरम्भभीत्या मुकुलिताक्षीमिति। रुद्रस्य संरम्भो रुद्रसंरम्भः। संरम्भः क्रोधः। 'संरम्भौ क्रोधसम्भ्रमौ' इति भोजः। तस्माद् भीत्या भयेन हेतुना। मुकुलिताक्षीं मुकुलिते निमीलिते अक्षिणी नेत्रे यस्याः सा तथा। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' 'षिद्गौरादिभ्यश्च' इति ङीष्। पद्मिन्यपि जलाशयादुद्धृता मुकुलिता भवति। देव्यास्तादृशलालनयोग्यत्वमाह—अनुकम्प्यामिति। दयनीयाम्। गमनप्रकारमाह — वेगदीर्घीकृताभ्र इति। वेगेन सत्वरप्रयाणजेन दीर्घीकृतमभ्रं मेघो येन स तथा। अभ्युन्नताङ्गसङ्घट्टनाद् दीर्घीकृतगगनासक्तमेघमण्डल इत्यर्थः। एतच्च विशेषणं सुरगजेऽपि योजनीयम्। अनेन विशेषणेन महाबलत्वं महाशरीरत्वं च द्योत्यते। अत्र देवगता दाक्षायणीविषया या रतिस्तद्देहत्यागेन करुणेन विच्छिन्ना तत्त्व-

ज्ञानोपबृंहिता शान्तरसे विश्रान्तिमुपयाता, सैवात्र देहान्तरमवलम्ब्योपगताया देव्या दर्शनादिभिः समुन्मिषिता । 'हरस्तु किञ्चित् परिवृत्तधैर्य' इत्यादिना तदुन्मेषो दर्शितश्च । ततः सापि चिरकालपरिचितेन शान्तेनाभिभूता । 'अथेन्द्रियक्षोभम्' इत्यादिना तदभिभावस्थैव दर्शिता च । पुनश्च तस्यापि रौद्ररसेनाभिभवः । तस्य तु मदने दग्धे दाह्याभावात् पुनरपि शान्ते विश्रान्तिः । 'तमाशुविघ्नं तपस' इत्यादिना तस्य शान्ते विश्रान्तिर्दर्शिता च । पुनश्च देव्यास्तपश्चरणानन्तरं प्राचीना रतिरेवोन्मेषमुपयास्यतीत्यवसेयम् ॥ ७६ ॥

'श्रीमासोत्सवचम्पु'काव्यरचनादक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये ।
व्याख्यानेऽत्र कुमारसम्भवपदार्थालोचनप्रक्रिया-
निष्णाते स्म तृतीय एति विरतिं सर्गो निसर्गोज्ज्वलः ॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ

कुमारसम्भवविवरणे

तृतीयः सर्गः ।

# अथ चतुर्थः सर्गः ।

---

**अथ मोहपरायणा सती**
**विवशा कामवधूर्विबोधिता ।**
**विधिना प्रतिपादयिष्यता**
**नववैधव्यमसह्यवेदनम् ॥ १ ॥**

(प्रकाशिका)

अथोपक्षिप्तं करुणं वर्णयति । स च प्रतिपक्षगतत्वेन नायकोत्कर्षावह इति प्रसिद्धम् ।

अथेति । अथशब्दः प्रकरणान्तरोपक्रमे । परायणं परमाश्रयः । 'परायणमभिप्रेते तत्परे परमाश्रय' इति यादवः । सती भवन्ती । अनेन मोहस्येष्टत्वं गम्यते[1] । विवशा विबोधितेति विबो[2]धनस्यानिष्टत्वम् । नवत्वमसह्यत्वे हेतुः । प्रतिपादयिष्यतेति एवं साध्यवसायस्य विधेरनिच्छन्त्यामेव तस्यां विबोधनं घटत एवेति भावः ॥ १ ॥

(विवरणम्)

अथ पूर्वसर्गोपक्षिप्तः प्रतिपक्षगतत्वेन नायकोत्कर्षप्रतिपाद(न?)कः करुणरसश्चतुर्थेनानेन सर्गेण वर्ण्यते । तत्र हरे तिरोहिते गतायां च देव्यां कामदहनप्रस्तावमोहमुपगता रतिः किमकरोदित्याकाङ्क्षायामाह —

अथेति । अथ मोहपरायणा सती कामवधूः विधिना विबोधिता । अथशब्दः प्रकरणान्तरोपक्रमे वर्तते । मोहपरायणा मोह एव परायणं परमाश्रयो यस्याः सा तथा । 'परायणमभिप्रेते तत्परे परमाश्रये' इति यादवः । मोहैकशरणेत्यर्थः । सती भवन्ती । अनेन मोहस्येष्टत्वं प्रतिपादितम् । कामवधूः कामस्य वधूर्भार्या रतिः । विधिना दैवेन । विबोधिता बोधं प्रापिता ।

१. 'ते । विबो' क. पाठः. २. 'भस्या' ङ. पाठः.

दैववशादुपलब्धचेतनाभूदित्यर्थः । अनेन प्रबोधनस्यानिष्टत्वमुक्तम् । तर्हि किमर्थमसौ निजानभिमतं प्रबोधमुररीचकार । अत आह—विवशेति । परवशा विधिपराधीनेत्यर्थः । तर्हि किं विधिरनिच्छन्त्यै तस्यै बोधं विततारेत्यत्राह — असह्यवेदनं नववैधव्यं प्रतिपादयिष्यता । नवमभिनवं वैधव्यम् । नव(म? त्वम)सह्यवेदनत्वे हेतुः । गते हि काले वेदना सह्या भवति । प्रतिपादयिष्यतेति । लटः शत्रादेशः । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनमि'त्यमरः । दातुमारब्धेनेत्यर्थः । इत्थं साध्यवसायस्य विधेस्तस्या अनिष्टस्यापि बोधस्य विधानं कर्तव्यमेवेत्यर्थः ॥ १ ॥

**अवधानपरे चकार सा**
**प्रलयान्तोन्मिषिते विलोचने ।**
**न विवेद तयोरतृप्तयोः**
**प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥**

(प्रकाशिका)

विबोधनस्य कार्यमाह -

अवधानेति । अवधानपरे प्रियदर्शनं प्रत्यवहिते इत्यर्थः । प्रलयान्तोन्मिषितत्वाच्च तच्छेषानुवृत्त्या यत्नावधेयत्वम् । कथमत्यन्तास्तमितस्य दर्शनमित्याह — न विवेदेति । अनेन भर्गलोचनाग्निनिर्गमनसमय एव मोहमुपगतेति गम्यते । अतृप्तयोर्दर्शनोत्सुकयोः । 'तद्विपर्यासे च' इति भोजसूत्रेण सप्तमी । तत्र च 'क्रियार्हस्य कारकत्व' इति 'क्रियानर्हस्य चाकारकत्व' इति च सूत्रद्वयगतोऽर्थः तच्छब्देन परामृश्यते । अत्र च दर्शनार्हयोर्दृशोः स्थितयोः दर्शनविलोपात् क्रियार्हस्याकारकत्वम् । अत्र प्रलयशेषानुवृत्तिरौत्सुक्यस्य चोदयः ॥ २ ॥

१. 'शा प' ख. पाठः. २. 'गवलोच' ख. घ. ङ. पाठः.

(विवरणम्)

अथ विबोधस्य कार्यं दर्शयति —

अवधानेति । सा प्रलयान्तोन्मिषिते विलोचने अवधानपरे चकार । सा रतिः । प्रलयान्तोन्मिषिते । प्रलयो मोहः । 'प्रलयो नष्टचेष्टते'त्यमरः । तस्यान्ते अवसाने उन्मिषिते कृतोन्मेषे । अनेन मोहशेषानुवृत्तिर्दर्शिता । अत एव विलोचनयोर्यत्नतः सावधानत्वविधानम् । विलोचने चक्षुषी । अवधाने सावधानत्वे परे तत्परे । प्रियदर्शनसावधाने इत्यर्थः । बोधनानन्तरं प्रियतममेव सावधानमवलोकितवतीति भावः । कथमत्यन्तास्तमितस्य प्रियस्य दर्शनोपपत्तिरत आह — प्रियं तयोः अतृप्तयोः अत्यन्तविलुप्तदर्शनं न विवेदेति । सेति तच्छब्दः पूर्वार्धगत एव कर्तृत्वेनात्राप्यनुषज्यते । प्रियं कान्तम् । तयोः विलोचनयोः । अतृप्तयोः, तृप्ते न भवत इत्यतृप्ते । दर्शनोत्सुकयोः सतोरेवेत्यर्थः । अत्र सप्तमीविधानाभावात् तत्र 'तद्विपर्यासे चे'ति भोजसूत्रेण सप्तमी द्रष्टव्या । अस्य सूत्रस्यायमर्थः — 'क्रियार्हस्य कारकत्वे' 'क्रियानर्हस्य चाकारकत्वे' इति च सूत्रद्वयेन या सप्तमी विहिता, सा तयोर्विपर्यासे च भवति । क्रियार्हस्याकारकत्वे क्रियानर्हस्य च कारकत्वे च भवतीत्यर्थः । अत्र दर्शनार्हयोर्दृशोः सतोरपि दर्शनविलोपात् क्रियार्हस्याकारकत्वम् । अत्यन्तविलुप्तदर्शनम्, अत्यन्तं विलुप्तं नष्टं दर्शनं यस्य तथाविधम् । न विवेद न ज्ञातवती । हरकोपानलोद्गमनसमय एव मोहमुपगतत्वादात्मकान्तं मृतं न विवेदेति भावः । अस्मिन् वाक्ये मोहशेषानुवृत्तिरौत्सुक्योदयश्च दर्शितः ॥ २ ॥

**अयि जीवितनाथ ! जीवसी-**
**त्यभिधायोत्थितया तया पुरः ।**
**ददृशे[1] पुरुषाकृतिः क्षितौ**
**हरकोपानलभस्म केवलम् ॥ ३ ॥**

[1] मुद्रितकोशपाठः.

(प्रकाशिका)

अवधानस्य कार्यमाह —

अयीति । 'अयि प्रश्ने सानुनय' इति हलायुधः । पुरुषाकृतिरिति पाठः । तद्विशेपणं हरकोपानलभस्मेति । हरकोपानले भस्मीभूता । केवलमिति, न कश्चिदप्यभस्मीभूतस्तदवयवस्तत्परिच्छदो वेत्यर्थः । एतद् विभावोद्बोधपरं वाक्यम् ॥ ३ ॥

(विवरणम्)

विलोचनयोरवधानपरत्वविधानस्य फलमाह —

अयीति । जीवितनाथ ! त्वं जीवसि अयीत्यभिधाय उत्थितया तया पुरः क्षितौ पुरुषाकृतिः ददृशे । जीवितनाथ ! प्राणेश्वर ! त्वं जीवसि । अयीति सानुनयप्रश्नविषयमव्ययम् । 'अयि सानुनये प्रश्ने' इति हलायुधः । जीवसि कच्चिदित्यर्थः । इत्यभिधाय उक्त्वा उत्थितया कृतोत्थानया । पुरुषाकृतिमात्रदर्शनं जीवनसन्देहे हेतुः । अत एव सत्वरमुत्थानम् । तया रत्या । (पुरः) अग्रे क्षितौ भूमौ पुरुषाकृतिः पुरुषस्याकृतिराकारः ददृशे दृष्टाभूत् । अयमभिप्रायः — हरकोपानलनिपतनानन्तरमेव मोहमुपगता रतिः ईषन्मोहविगमनानन्तरं प्रियशरीरसंस्थानं पूर्ववदेवावलोक्य सत्वरमुत्थाय तत्समीपमुपगम्य पुरस्तादेव पुरुषाकृतिं ददर्शेति । कीदृशी पुनः सा पुरुषाकृतिरित्यत्राह — केवलं हरकोपानलभस्मेति । केवलं तच्छरीरावयवेषु तत्परिच्छदेषु वा न कश्चिदंशस्तत्राभस्मसाद्भूतो दृष्टोऽभूदित्यर्थः । हरकोपानलभस्म । हरस्य कोपो हरकोपः हरकोपश्चासावनलश्चेति हरकोपानलः तस्य भस्म । सम्यगवलोकनानन्तरं हरकोपानलभस्मैव दृष्टमभूदिति भावः । पुरुषाकृतीत्येव केचित् पठन्ति । तन्मते पुरुषाकृति हरकोपानलभस्म ददृशे इत्यन्वयः । अनेन श्लोकेन करुणस्य विभावोद्बोधो दर्शितः ॥ ३ ॥

१. 'लभस्मसात्कृता' घ. पाठः, 'लेन भस्मसाद्भूता' ख. पाठः. २. 'स्मसात्कृत' क. पाठः. ३. 'धनकरं' क. पाठः.

अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा
समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥

(प्रकाशिका)

अथ तद्विबोधोद्बोधितस्य करुणस्यानुभावव्यभिचारादिकं प्रपञ्चयति —

अथेति[1]। अथ अत्यन्तनाशावगमानन्तरमित्यर्थः । अत एव पुनरेव विलापः । एवशब्दः पौनर्वचनिकः । विह्वलता च ग्लानिः । तस्या अनुभावो वसुधालिङ्गनं मूर्धजविकिरणं च । निर्दयमङ्ग(मे ? व)लनात् स्थल्यास्तथाकरणोत्प्रेक्षा ॥ ४ ॥

(विवरणम्)

भस्ममात्रावलोकनोद्बोधितस्य करुणस्यानुभावव्यभिचार्यादिकं प्रपञ्चयति —

अथेति । अथ सा पुनः एव विह्वला विललाप । (अथ) प्रियतमस्यात्यन्तिकविनाशावगमनानन्तरम् । सा रतिः । पुनरेव पुनरपीत्यर्थः । विह्वला परवशा सती । ग्लानिमुपगम्येति भावः । विललाप परिदेवनमकरोत् । 'विलापः परिदेवनमि'त्यमरः । आत्मनः शरीरावयवेष्वपि निर्दयत्वमाह — वसुधालिङ्गनधूसरस्तनीति । वसुधायाः भूमेः आलिङ्गनेन धूसरौ धूसरवर्णौ स्तनौ यस्याः सा तथा । अनेन पूर्वमुत्थितायाः परमार्थावगमनानन्तरमवनत शरीरतया भूमौ पतनं द्योत्यते । इदं च ग्लानेरनुभावः । अनुभावान्तरमप्याह — विकीर्णमूर्धजेति । विकीर्णाः विक्षिप्ताः मूर्धजाः केशा यस्याः सा तथा । इत्थंभूतव्यापारायास्तस्याः उत्प्रेक्षां दर्शयति । स्थलीं समदुःखां कुर्वती-

१. 'ति । अव' ख. पाठः. २. 'दनन्त' ख. घ. ङ. पाठः. ३. 'व च पु' ग. ङ. पाठः. ४. 'त च विललाप ।' ग. पाठः, 'व विललाप ।' ख. ङ. पाठः.

वेति । स्थलीं पृथिवीम् । समदुःखां समं समानं दुःखं यस्यास्तथाविधां कुर्वतीव । निर्दयं पृथिव्यां परिवर्तनादिभिः स्थल्यास्तथाकरणोत्प्रेक्षा । पश्यतां पक्षिमृगवनचरादीनामपि दुःखोत्पादनाद् वनस्थलीमप्यात्मसमानदुःखां कुर्वाणेवेत्यर्थः ॥ ४ ॥

उपमानमभूद् विलासिनां
करणं यत् तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां
न च दीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥

(प्रकाशिका)

विलापप्रकारानाह —

उपमानमिति। उपमानं नाम प्रसिद्धतद्धर्मकं वस्तु । विलासिनाम् ।

"धीरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाश्रिता ।
स्मितपूर्वमथालापो विलास इति कीर्तितः ॥"

इति विलासलक्षणम् । करणं गात्रम् । चस्त्वर्थे । खलुर्जिज्ञासायाम् । 'निषेधवाक्यालङ्कारजिज्ञासानुनये खल्वि'ति सिंहः । अतः सर्वाः स्त्रियः कठिना इति ज्ञातव्यमित्यर्थः । अत्र निर्वेदः । उन्मादस्त्वेषु वाक्येषु भूयसा द्रष्टव्यः ॥ ५ ॥

(विवरणम्)

विलापप्रकारानेव प्रपञ्चयति उपमानमित्यादिभिः —

उपमानमिति । तव यत् करणं कान्तिमत्तया विलासिनाम् उपमानम् अभूत्, तद् इदम् ईदृशीम् दशां गतम्, अहं च न दीर्ये। तव यत् करणं शरीरम्। 'करणं साधकतमक्षेत्रगात्रेन्द्रियेष्वपी'त्यमरः । कान्ति-

१. 'क्षा ॥' घ. ङ. पाठः. २. 'वि' मुद्रितकोशपाठः. ३. 'मे' ङ. पाठः.

मत्तया। कान्तिरस्त्यस्मिन्निति कान्तिमत्। अतिशायने मतुप्। तस्य भावस्तत्ता। विलासिनाम्।

"धीरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता।
स्मितपूर्वमथालापो विलास इति कीर्तितः॥"

इति विलासलक्षणम्। 'विलासो भूषणालापगतिकर्मसु चारुता' इति च। तद्वतां पुरुषाणाम्। उपमीयतेऽनेनेत्युपमानम्। प्रसिद्धसाधर्म्यं वस्त्वित्यर्थः। कामस्य शरीरमिवास्य शरीरं चारुतरमित्यादिवचनेष्विति भावः। तदिदं शरीरमीदृशीं दशामवस्थाम्। भस्मसाद्भावमित्यर्थः। गतं प्राप्तमासीत्। तुशब्दार्थे चकारः। दीर्य इति कर्मकर्तरि प्रयोगः। अहं तु न दीर्ये विदारणं न गच्छामि। यतोऽहं तादृशे त्वयीदृशीं दशां गतेऽपि न दीर्ये, तत एव शङ्के इत्याह — स्त्रियः कठिनाः खल्विति। खलुशब्दो जिज्ञासायाम्। 'निषेधवाक्यालङ्कारजिज्ञासानुनये खल्वि'त्यमरः। ततोऽहं स्त्रियः कठिना एवेति तर्कयामीत्यर्थः। स्त्रीत्वात् कठिनतैव मम विदारणाभावे हेतुरिति भावः। अनेन वाक्येनात्मनिर्वेदो दर्शितः। उन्मादस्त्वस्मिन् प्रकरणे प्रायेण द्रष्टव्यः॥ ५॥

**क्व नु मां त्वदधीनजीवितां**
**विनिकीर्य क्षणभिन्नसौहृदः।**
**नलिनीं क्षतसेतुबन्धनो**
**जलसङ्घात इवासि विद्रुतः॥ ६॥**

(प्रकाशिका)

**क्वेति। विनिकीर्यापास्य। उपमानेन गत्वरत्वं द्योत्यते॥ ६॥**

१. 'शयनार्थे म' क. ख. ग. पाठः. २. 'र्बी' ङ. पाठः. ३. 'रः। न दी' क. ख. ग. पाठः. ४. 'रस्वभावत्वं' ख. घ. ङ. पाठः.

( विवरणम् )

प्रणयिनीं मां परित्यज्य क्वनुखलु गतोऽसीत्यनुगमनाकाङ्क्षया सोन्मादमाह —

क्वेति । त्वदधीनजीवितां मां विनिकीर्य क्व नु विद्रुतः असि । त्वदधीनजीवितां तवैवाधीनं जीवितं जीवनं यस्यास्ताम् । मत्प्राणनाथत्वं तवैवेति भावः । विनिकीर्य । 'कृ विक्षेप' इति धातुः । अपास्येत्यर्थः । क्व नु विद्रुतोऽसि कस्मिन् प्रदेशे विद्रुतवानसि । अत्रानुरूपामुपमां दर्शयति — जलसङ्घातः नलिनीमिवेति । जलस्य सङ्घातो जलसङ्घातः । सङ्घातः समूहः । नलिनीं पद्मिनीमिव । विनिकीर्येति अत्रापि योज्यम् । यथा जलसङ्घातः नलिनीमितस्ततो विक्षिप्य त्वरितं गच्छति, तद्वदित्यर्थः । प्रियतमस्य सत्वरगमने हेतुमाशङ्कते — क्षणभिन्नसौहृद इति । क्षणेन भिन्नं नष्टं सौहृदं बन्धुत्वं यस्य स तथा । स्नेहभङ्गाभावे हि जिगमिषायां सत्यामपि पुनः पुनरापृच्छय मन्दमेव गच्छति । जलसङ्घातस्य गमने हेतुमाह — क्षतसेतुबन्धनामिति । क्षतं भग्नं सेतोर्बन्धनं यस्यास्ताम् । अत्र सौहृदसेत्वोः परस्परसाम्यं प्रतीयते । नलिन्या जीवितमपि जलसङ्घाताधीनम् । एकत्र सञ्चितो जलसङ्घातोऽपि सेतुभङ्गानन्तरं सत्वरं गच्छति, गमनानन्तरं च कुत्र गत इति न ज्ञायते ॥ ६ ॥

कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते ॥ ७ ॥

(प्रकाशिका)

अथवा न गतोऽसीत्याह —

कृतवानिति । उभयं ह्यमिलने हेतुरिति भावः । अत[1] आह —

1. 'त एवाह' घ. पाठः.

**अकारणमिति। रतय इति परत्वनिर्देशः स्ववाल्लभ्यादिद्योतकः। विल-पन्त्यै इति, परिहासस्यापि नायमवसर इत्यर्थः। अनयोरुपालम्भनवाक्य-योरीर्ष्या ॥ ७ ॥**

(विवरणम्)

अथवा प्रणयिनीं मां परित्यज्य गतोऽसीति यन्मया कथितं (तद्)युक्तमेव, अत्र विश्लेषमात्रेऽपि हेत्वभावादित्याह —

कृतवानिति। त्वं मे विप्रियं न कृतवान् असि। विप्रियमप्रियं कर्म कदाचिदपि न कृतवानसि। त्वया ममानिष्टं कर्म स्वप्नेऽपि नाचरितमित्यर्थः। नापि मया तवानिष्टं कर्म कृतमित्याह — मया ते प्रतिकूलं च न कृतमिति। प्रतिकूलमनिष्टम्। उभयमेव हि द्वन्द्वानां परस्परविश्लेषकारणमिति भावः। तस्मात् तयोरेकैकस्याभावे त्वरितमेव दर्शनं दातव्यमित्याह — किमकारणमेव रतये दर्शनं न दीयत इति। किं कस्माद्धेतोः। अकारणं पूर्वोक्तेन कारणद्वयेन विनैवेत्यर्थः। रतय इति नामग्रहणेनात्मनः प्राचीनं प्रेमविषयत्वमनुस्मारय-तीत्यर्थान्तरसङ्क्रमितवाच्यध्वनिः। दर्शनं न दीयते दृष्टिगोचरो न भवसी-त्यर्थः। ननु परिहासार्थमेवास्त्वित्यत्राह — विलपन्त्यै इति। विलापं कुर्वत्यै। परिहासस्यापि नायमवसर इति भावः ॥ ७ ॥

**स्मरसि स्मर! मेखलागुणै-**
**रुत गोत्रस्खलितेषु बन्धनम्।**
**च्युतकेसरदूषितेक्षणा-**
**न्यवतंसोत्पलताडनानि वा ॥ ८ ॥**

(प्रकाशिका)

अथ कारणमाशङ्कते —

१. 'म्भवा' ख. ग. ङ. पाठः. २. 'रेक' घ. ङ.पाठः.

स्मरसीति । उत विकल्पे । च्युतेति विशेषणं गोत्रस्खलनकारिणि मुखे दण्ड इति द्योतनाय । अत्रोहः ॥ ८ ॥

( विवरणम् )

इत्थं निरस्तेऽपि गमने दर्शनाभावात् पुनरपि गमनमेवात्र शर्थे गमने हेतुमाशङ्कते—

स्मरसीति । स्मर ! त्वं गोत्रस्खलितेषु मेखलागुणैः बन्धनम् उत अवतंसोत्पलताडनानि वा स्मरसि । हे स्मर ! गोत्रस्खलितेषु गोत्रस्य नाम्नः स्खलितेषु स्खलनेषु । सपत्नीनामाक्षरग्रहणेष्वित्यर्थः । मेखलाभिरेव गुणैः पाशैः । उतशब्दो विकल्पे । 'विकल्पे किं किमुत च' इत्यमरः । बन्धनं वेत्यर्थः । अवतंसोत्पलताडनानि अवतंसेन कर्णपूरेण उत्पलेन कुवलयेन यानि ताडनानि तानि वा स्मरसि । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इत्यमरः । यस्मादेवं दर्शनदानाभावः, तस्मात् तयोरन्यतरस्य स्मरणमाशङ्क इत्यर्थः । गोत्रस्खलनकारिणि मुख एव दण्ड इति द्योतयन्नवतंसोत्पलताडनानि विशिनष्टि — च्युतकेसरदूषितेक्षणानीति । च्युतैः पतितैः अवतंसोत्पलस्य केसरैः दूषित पीडिते ईक्षणे नेत्रे येष्वानि । मुखे हि ताडने कृते नेत्रयोरवतंसोत्पलकेसरदूषितत्वं भवतीति भावः । रहस्यन्यवधूनामाक्षरग्रहणे सति मया कृतयोरतादृशयोरपराधयोरन्यतरस्य स्मरणेनैव त्वमिदानीं मत्समीपं नोपयासीत्यूहः ॥८॥

हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥

(प्रकाशिका)

अथवा प्रागपि निःस्नेह एवासीत्याह

हृदय इति । कैतवं धूर्तालापम् । पदं वाक्यम् । अत्रोहपुरस्सरेष्या ॥ ९ ॥

(विवरणम्)

अथवा हेतुसद्भावे एव द्वन्द्वानां परस्परविश्लेष इति यदुक्तं, तत् स्निग्धानामेव। त्वं तु पूर्वमपि मयि निःस्नेह एवेत्याह —

हृदय इति। त्वं हृदये वससीति मत्प्रियं यदवोचः, तदहं कैतवम् अवैमि। हे रते! त्वं मे हृदये वससि मनसि स्थितिं करोषि इत्येवंरूपं मत्प्रियं मम प्रियमिष्टं यदवोचः अब्रवीः, तदहं कैतवं धूर्तालापमेवावैमि अवगच्छामि। कथमवगच्छसीत्यत्राह — इदमुपचारपदं न चेत्, त्वमनङ्गः रतिः अक्षता कथम्। इदं हृदये वससीत्यादिरूपं वचनम्। उपचारपदमुपचारवाक्यम्। पदशब्दस्यात्र वा(क्या? क्यम)र्थः। 'न पदं पदमित्याहुर्वाक्यं हि पदमुच्यते' इति न्यायात्। उपचारः सम्मानं, सम्मानवाक्यमित्यर्थः। न चेत् तर्हि त्वमनङ्गः अशरीरोऽभूः, रतिः पुनरक्षता क्षतरहिता जाता, इदं (कथं, न)कथञ्चिदित्यर्थः। अयमभिप्रायः — यद्यहं ते हृदये वसामि तर्हि त्वयि भस्मसात्कृतेऽपि मम क्षतमात्रेणापि रहितत्वं नोपपद्यते। तस्मान्मत्प्रसादार्थं प्रयुक्तमेव ते तादृशं वचनमिति अत्राहमक्षतत्वरूपसंगत्या च द्योत्यते ॥ ९ ॥

परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव।
विधिना जन एष वञ्चित-
स्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥

(प्रकाशिका)

सस्नेहया त्वया किं कृतमित्याह

परलोकेति। नवशब्दः पदव्यन्वेषणसौकर्यार्थः। तदानीमेव किं नागतासीत्याह — विधिनेति। मोहं विदधतेति शेषः। भोगसाधनेषु

अस्तु किं तवास्मदनुगमनेनेत्याह — त्वदधीनमिति । खलुर्वाक्यालङ्कारे । देहिनां, न केवलं ममैकस्याः । अत्र मरणव्यवसायो मरणम् ॥ १० ॥

(विवरणम्)

अस्त्वहं निःस्नेहः, सस्नेहा त्वं तु किं करिष्यसीत्यत्राह —

परलोकेति । अहं परलोकनवप्रवासिनः तव पदवीं प्रतिपत्स्ये । परलोकनवप्रवासिनः परलोकमुद्दिश्य नवं यथा भवति तथा प्रवासं कर्तुं शीलमस्येति तथा । प्रवासो देशान्तरगमनम् । एतस्माल्लोकात् सद्य एव परलोकं गतस्येत्यर्थः । चिरप्रवासिनो हि पदवी दुरवबोधा स्यात्, नवप्रवासिनस्तु पथिकजनानुयोगादिभिः सुबोधेति नवशब्दस्य ग्रहणम् । पदवीं मार्गं प्रतिपत्स्ये प्राप्स्यामि। मृतं त्वामनुमरिष्यामि सद्य एवेत्यर्थः । तर्हि त्वं तदानीं किं न मृतामीत्यत्राह — एष जनो विधिना वञ्चित इति । एष जनः अहमित्यर्थः । विधिना दैवेन वञ्चितः कृतवञ्चनो जातः । तदानीं मे मोहं विदधतेति शेषः । ननु सुखसाधनेष्वन्नपानादिषु सत्सु किं तवानेन मरणव्यवसायेनेत्यत्राह — देहिनां सुखं त्वदधीनं खलु इति। देहिनां शरीरिणां सुखं त्वदधीनं त्वदायत्तम् । खलुशब्दः प्रसिद्धौ । न केवलं त्वदधीनजीवितायाः ममैव, अपितु सर्वेषामपि सुखं त्वदधीनमिति प्रसिद्धमेवेत्यर्थः । अत्र मरणाख्यो व्यभिचारी । मरणं तु मरणव्यवसाय एवेति दशरूपके ॥ १० ॥

रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय! कामिनां प्रिया-
स्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥

१. 'न म' घ. पाठः.

(प्रकाशिका)

सुखस्य तदधीनत्वमुपपादयति —

**रजनीति । प्रियेति पदच्छेदः ॥ ११ ॥**

(विवरणम्)

अथ सुखस्य तदधीनत्वमुपपादयन्ती तत्पराक्रमाननन्यसाध्याननुस्मृत्य विलपति रजनीत्यादिना श्लोकद्वयेन —

रजनीति । प्रिय! त्वदृते कः पुरमार्गे रजनीतिमिरावगुण्ठिते प्रियाः कामिनां वसतिं प्रापयितुम् ईश्वरः । प्रिय! हे कान्त!। अनया सम्बुद्ध्या त्वया विना कथमहं जीवामीति व्यज्यते । त्वदृते त्वां विना । कः न कोऽपीत्यर्थः । पुरमार्गे पुरे यो मार्गस्तस्मिन् । रजनीतिमिरावगुण्ठिते । रजन्यां रात्रौ यानि तिमिराणि तमांसि तैरवगुण्ठिते आवृते सति । अनेनाभिसारिकावृत्तस्यावसरः कामपीडाविरहितानां दुर्गमत्वं च द्योत्यते । प्रियाः कामिनीः कामिनां प्रियाणां वसतिं गृहं प्रापयितुं नेतुम् । अस्य गत्यर्थण्यन्तत्वाद् द्विकर्मकत्वम् । ईश्वरः समर्थो भवति । त्वमेव समर्थ इत्यर्थः । न केवलं पुरमार्गस्य तिमिरावृतत्वमात्रं भयजनकम्, अन्यदपीत्याह — घनशब्दविक्लवा इति । घनस्य मेघस्य शब्देन विक्लवाः परवशाः । घनागमनसमये निरस्तमाना इति च व्यज्यते । तिमिरावृतत्वाद् भयजनकेषु पुरमार्गेषु भयजनकेषु घनशब्देषु श्रूयमाणेषु च कामिनीनां कामुकगृहप्राप्तौ त्वत्सामर्थ्यमेकमेव निमित्तमिति भावः ॥ ११ ॥

नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२ ॥

१. 'तिच्छे' ख. घ. ङ. पाठः. २. 'मस' क. ख. ग. पाठः. ३. 'षु मेघश' ख. ग. पाठः.

(प्रकाशिका)

**नयनानीति। अधुना इत आरभ्य। विडम्बना हास्यावलम्बनम्। भावशून्यत्वादित्यर्थः । अनयोः पद्ययोस्तत्पराक्रमस्मृतिः ॥ १२ ॥**

( विवरणम् )

ननु वारुणीमद एव प्रियाः प्रियवत्तीं प्रापयिष्यति, किं मयेत्यत्राह—

**नयनानीति** । त्वयि असति वारुणीमदः प्रमदानाम् अधुना विडम्बना । त्वयि असति अत्यन्तास्तमिते सति । वारुणीमदः । वारुणी मद्यं, तज्जनितो मदः । 'सम्मोहानन्दसम्भेदो मदिरादिकृतो मद' इति मदलक्षणम् । प्रमदानां स्त्रीणां विडम्बना हासकारणं, भावशून्यत्वादिति भावः । मदिरामदस्वभावकथनेन हासकारणत्वमेवाभिव्यनक्ति — नयनानीत्यादिना विशेषणद्वयेन । तत्र मदिरा-पानानन्तरमेव जायमानं स्वभावमादौ वर्णयति -- अरुणानि नयनानि घूर्णयन्निति । अरुणानि मद्यपानेन जनितरागाणि नयनानि विलोचनानि घूर्णयन् भ्रामयन् । अथ तदनन्तरं जायमानं स्वभावमाह -- पदे पदे वच-नानि स्खलयन्निति । पदे पदे प्रतिपदं वचनानि वाक्यानि स्खलयन् स्खलितानि कुर्वन् । मदिरामदो हि प्रथमं नयनयोरागिमानमातनोति, पुनश्च स्खलितपदानि वचनानि जनयति । नहि तयोरुभयोरपि भावशून्यत्वे तद्द-र्शिनां हासादन्यत् किमपि सम्भवतीति भावः ॥ १२ ॥

**अवगम्य कथीकृतं वपुः**
**प्रियबन्धोस्तव निष्फलोदयः ।**
**बहुलेऽपि गते निशाकर-**
**स्तनुतां दुःखमनङ्ग! मोक्ष्यति ॥ १३ ॥**

(प्रकाशिका)

विशेषतः त्वत्सुहृदः शोच्याः संवृत्ता इत्याह —

अवगम्येति । कथीकृतमिति कथावशेषीकृतम् । बहुले कृष्णपक्षे । दुःखं कृच्छ्रात् । अत्रोहः ॥ १३ ॥

(विवरणम्)

हन्त तव बन्धवोऽपि सम्प्रति शोचनीयाः संवृत्ता इत्याह—

अवगम्येति । अनङ्ग ! निशाकरः तव वपुः कथीकृतम् अवगम्य बहुले गते अपि दुःखं तनुतां मोक्ष्यति । हे अनङ्ग !, इदानीं त्वमेवं संवृत्त इत्यर्थः । निशाकरः चन्द्रः तव वपुः शरीरम् । कथीकृतम् । कथाशब्दादभूततद्भावे च्वि-प्रत्ययः । कथावशेषीकृतमित्यर्थः । अत एवानङ्गेति सम्बुद्धिरुक्ता । अवगम्य ज्ञात्वा । बहुले कृष्णपक्षे । 'बहुलः कृष्णपक्षेऽपी'ति भोजः । गते अतीतेऽपि । अपिशब्दः कृष्णपक्षात्यये तनुतापरित्यागाभावस्य विरोधमाह । दुःखं कृच्छ्रात् तनुतां कार्श्यम् । 'स्त्रियां तनुः शरीरे स्यात् कृशे भद्रे तनुस्त्रिष्वि'ति नानार्थ-कोशः । मोक्ष्यति त्यक्ष्यति । त्वद्विनाशजनिताद् दुःखात् प्रक्षीणशरीरश्चन्द्रः पूर्वपक्षेऽपि कृच्छ्रेणैव शरीरपुष्टिं प्राप्स्यतीत्यर्थः । त्वद्विनाशस्य दुःखकारण-त्वमाह — प्रियबन्धोरिति । प्रियाः इष्टाः बन्धवो यस्य तस्य । प्रियस्य इष्टस्य बन्धोरिति वा विग्रहः । अयं च दुःखे प्रथमो हेतुः । द्वितीयं[2] हेतुमाह — निष्फलोदय इति । निष्फलः अफलः उदयो यस्य स तथा । चन्द्रोदयस्य कामिनीकामुकसम्भोगसौख्यं हि फलम् । न च तत् कामेन विना सम्भवतीति निशाकरस्य निष्फलोदयत्वमिति दुःखनिमित्तकं शरीरकार्श्यमिति भावः । नहि दुःखनिमित्तं शरीरकार्श्यं बहुलावसानेऽपि नश्यतीति कृच्छ्रेण कार्श्यपरि-त्यागोपपत्तिरूह्या ॥ १३ ॥

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः ।

१. 'थाशे' ख. घ. ङ. पाठः. २. 'यहे' ङ. पाठः.

वद सम्प्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ १४ ॥

(प्रकाशिका)

न केवलं त्वत्सुहृदां, किन्तु त्वत्परिच्छदानामपि नियता शोच्यतेत्याह —

हरितारुणेति । हरितारुणचारुबन्धनत्वं बाणस्यापि धर्मः । दक्षिणावर्तस्तु—सूचिक इति पाठमादृत्य सूचिर्वेधनशल्यमित्याह ॥ १४ ॥

(विवरणम्)

न केवलं त्वत्सुहृदामेव शोच्यत्वं, त्वत्परिच्छदानामपीति श्लोकद्वयेनोच्यते । तत्रादौ बाणानां प्राधान्यात् तेषां शोच्य[1]त्वमाह —

हरितेति । नवचूतप्रसवः सम्प्रति कस्य बाणतां गमिष्यति वद । नवचूतप्रसवः । नवोऽभिनवः चूतप्रसवः चूतपुष्पम् । सम्प्रति एतस्मात् कालादारभ्येत्यर्थः । कस्य बाणतां शरत्वं गमिष्यति प्राप्स्यति वद ब्रूहि । चूतप्रसवोऽद्यप्रभृति निरुपयोगः संवृत्त इति भावः । उद्दीपनत्वातिशयं द्योतयितुं नवशब्दः । नवचूतप्रसवस्य बाणधर्मयोगमाह — हरितारुणचारुबन्धन इति । नवत्वाद्धरितमीषन्नीलमरुणं रक्तवर्णं चारु मनोहरं च बन्धनं वृन्तं यस्य स तथा । बाणोऽपि शिल्पिभिः कृतैर्हरितैररुणैश्च बन्धनैर्युक्तो भवति । चूतपुष्पाणां दर्शनेन विनाप्युद्दीपनत्वमाह — कलपुंस्कोकिलशब्दसूचित इति । कलेन मधुरेण पुँस्कोकिलशब्देन पुँस्कोकिलानां स्वनेन सूचितः ज्ञापितः । नहि चूताङ्कुरास्वादनेन विना कोकिलालापस्य कलत्वं भवति । तदुक्तं 'चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज' (स. ३. श्लो ३२) इति । कलतरकोकिलालापश्रवणानुमितोदय इत्यर्थः । धन्विनां बाणमोक्षोऽपि तालि-

१. 'ता' ख. ग. घ. ङ. पाठः.

ङ्गभूतेन हुङ्कारेणानुमीयते। कूजनसामर्थ्यप्रतीत्यर्थं पुंस्त्वविशेषणं सैनिकत्वप्रतीत्यर्थं च ॥ १४ ॥

अलिपङ्क्तिरनेकशस्त्वया
गुणकृत्ये धनुषो नियोजिना।
विरुतैः करुणस्वरैरियं
गुरुशोकामनुरोदितीव माम् ॥ १५ ॥

(प्रकाशिका)

अलिपङ्क्तिरिति। अनेकशः अनेकेषु। 'मङ्गलार्थे[2]ऽयमिष्यत' इति वचनात्। करुणं दयनीयम्। उत्प्रेक्षया शोच्यता गम्यते ॥ १५ ॥

(विवरणम्)

धनुर्गुणस्यापि शोच्यतामाह —

अलीति। त्वया अनेकशः धनुषः गुणकृत्ये नियोजिता अलिपङ्क्तिः करुणस्वरैः विरुतैः गुरुशोकां माम् अनुरोदिति इव। त्वया भवता अनेकशः बहुशः। बहुषु कार्येष्वित्यर्थः। धनुषः कौसुमस्य चापस्य। गुणकृत्ये गुणस्य मौर्व्याः कृत्ये कार्ये। धनुरारोपण इत्यर्थः। नियोजिता समर्पिता। मौर्वीत्वं प्रापितेत्यर्थः। अनेन प्राचीनानेकोपयोगकथनेन भविष्यतो निरुपयोगत्वस्यात्यन्तदुःखहेतुत्वमुक्तम्। अलिपङ्क्तिः अलीनां भ्रमराणां पङ्क्तिः। करुणस्वरैः करुणो दयनीयः स्वरो येषां तादृशैः। विरुतैः झङ्कारैः। शोकहर्षादौ हि स्वरभेदः प्रसिद्धः 'द्विधा भिन्नाः शिखण्डिभिः'(रघु०स०१.श्लो.३९) इत्यादिषु। गुरुशोकाम्। गुरुरधिकः शोको दुःखं यस्यास्तादृशीम्। मामनुरोदितीव रुदत्या ममानुरोदनं करोतीव। 'रुदादिभ्यः सार्वधातुके' (७. २. ७६) इतीडागमः।

१. 'नि' मुद्रितकोशपाठः. २. 'र्थेषु इत्य' ख. पाठः.

"दर्शनात् क्लिष्टजन्तूनां धर्मशीलस्य चेतसः।
आर्द्रता करुणा तस्या विषयः करुणास्त्रिषु॥"

इति भोजः। उत्प्रेक्षयालिपङ्क्तेः शोच्यता सूच्यते॥ १५॥

**प्रतिपद्य मनोहरं वपुः**
**पुनरप्यादिश तावदुत्थितः।**
**रतिदूतपदेषु कोकिलान्**
**मधुरालापनिसर्गपण्डितान्॥ १६॥**

(प्रकाशिका)

तन्मादेवं कुर्या इत्याह —

प्रतिपद्येति। तावत् प्रथमम्। उत्थित उद्युक्तः। रत्यर्था दूता रतिदूताः। अत्रोत्सुक्यम्॥ १६॥

(विवरणम्)

यदि मद्विनाशादेवम्भूता मम बन्धवः, तर्हि किं मया कर्तव्यमित्यत्राह —

प्रतिपद्येति। त्वं तावद् मनोहरं वपुः प्रतिपद्य उत्थितः पुनः अपि कोकिलान् रतिदूतपदेषु आदिश। तावत् प्रथमम्। आदौ तव बन्धूनां मध्ये कोकिलानां शुचमपनय, पुनः क्रमेणान्येषामपीति भावः। मनोहरं रमणीयं वपुः शरीरम्। प्रतिपद्य, भस्मरूपं वपुरपहाय पूर्ववदतिरमणीयं शरीरमेवोपादायेत्यर्थः। उत्थितः उद्युक्तः सन्। नैवमौदासीन्यं कुर्या इत्यर्थः। पुनरपि, पूर्ववदित ऊर्ध्वमप्यादिशेत्यर्थः। कोकिलान् परभृतान् रतिदूतपदेषु रत्यर्था दूता रतिदूताः तेषां पदेषु स्थानेषु। कामिनीकामुकयोः परस्परं घटनरूपेषु कार्येष्वित्यर्थः। तत्र हि कोकिलानामेव सामर्थ्यम्। यथोक्तं रघु-

१. 'ति' मुद्रितकोशपाठः. २. 'ला' मुद्रितकोशपाठः. ३. 'ताम्' मुद्रितकोशपाठः. ४ 'र्योदित्या' ग. घ. पाठः.

वंशे—

"त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः॥"
(स. ९. श्लो. ४७)

इति। आदिश नियुङ्क्ष्व। आदौ कोकिलानां शुचमपनीय तेष्वपि स्वकृत्ये योजितेषु त्वरितगतयस्ते जगतामपि शुचमपनयन्तीति आदौ कोकिलानाज्ञापयेत्युक्तम्। दूतकार्ये कोकिलानां सामर्थ्यं दर्शयति—मधुरालापनिसर्गपण्डितानिति। मधुरेषु मनोहरेष्वालापेषु निसर्गतः स्वभावत एव पण्डितान् विदग्धान्। अलं तत्र वचनप्रकारशिक्षाविषयैः प्रयासैरिति भावः। अनेन वाक्येनौत्सुक्यं प्रकाशितम्॥ १६॥

शिरसा प्रणिपत्य याचिता-
न्युपगूढानि सवेपथूनि च।
सुरतानि च तानि ते रहः
स्मर! संस्मृत्य न शान्तिरस्ति मे॥ १७॥

(प्रकाशिका)

शिरसेति। प्रथमं कुपितायाः शिरसा प्रणिपत्य याचनं, ततः प्रसन्नाया उपगूहनं, ततो रागोद्बोधे सुरतमिति क्रमेण स्मृतिः। तानीत्यनुभूतपरामर्शिना तच्छब्देनाव्यपदेश्यत्वं, बहुवचनेन बहुप्रकारत्वं च द्योत्यते। शान्तिरनुत्सुकता। तस्याश्च कृदभिहितत्वेनान्याङ्गत्वात् स्मरणस्य भिन्नकर्तृ[1]कत्वभ्रमः स्यात्। संस्मृत्य न शाम्यामीत्यर्थः॥ १७॥

(विवरणम्)

इत्थं बहुप्रकारान् प्रलापान् विधाय निजप्रलापमनर्थकमवधार्य पुनः पूर्वानुभूतानतिमधुरानवाङ्मनसगोचरान् कामानुभावानेव संस्मृत्य प्रलपति—

१. 'कस्य भ्र' क. ग. पाठः.

शिरसेति। स्मर! ते शिरसा प्रणिपत्य याचितानि सवेपथूनि उपगूढानि च रहः तानि सुरतानि च संस्मृत्य मे शान्तिः नास्ति। स्मर! हे मदन!। यस्य सान्निध्यमात्रेणापि जन्तूनां मनोविकारः सम्पद्यते, तेन स्वयमेव[1] कृतानां सुरतादीनाम् अवाङ्मनसगोचरत्वोपपत्तिरनया सम्बुद्धया व्यज्यते। कुपितां मामनुनेतुं शिरसा प्रणिपत्य साष्टाङ्गं नमस्कृत्य। त्वया कृतानि यानि याचितानि याचनानि। भावे निष्ठा। प्रसीद, सदयं मामवलोकयेत्यादीनि प्रार्थनानीत्यर्थः। तथा सवेपथूनि वेपथुः सात्त्विकविकाररूपः शरीरकम्पः तेन सहितान्युपगूढानि उपगूहनानि। अत्रापि भावे प्रत्ययः। रहः रहसि तानि सुरतानि त्वयैव कृतानि तानि पूर्वानुभूतान्यनिर्देश्यानि च। बहुवचनेन कामशास्त्रप्रसिद्धानां करणभेदानामुपादानम्। चकारः समुच्चयार्थः। संस्मृत्य सम्यक् स्मृत्वा। प्रथमं कुपितां मामनुनेतुं प्रणिपत्य याचनं, तदनन्तरं प्रसन्नायां मयि सरागमालिङ्गनं, ततश्च रागस्य समुद्बोधे सति बहुविधानि सुरतानीति स्मरणक्रमोऽत्र विवक्षितः। एवमेतादृशानुभवपात्रीकृताया मम शान्तिरनुत्सुकता नास्ति कथञ्चिदपि न भवति। अत्र शान्त्याः कृदभिहितत्वेन क्रियान्तराङ्गत्वात् स्मरणस्य भिन्नकर्तृकत्वभ्रमः। संस्मृत्य न शाम्यामीत्यर्थः। यदाह महिमा —

"कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा।
क्त्वो भिन्नकर्तृकत्वभ्रमाय भवति क्रियावचश्च तयोः॥"

इति। संस्मृत्य स्थिताया ममेति वा योजना॥ १७॥

**रचितं रतिपण्डित! त्वया**
**नवमङ्गेषु[2] ममेदमार्तवम्।**
**ध्रियते कुसुमप्रसाधनं**
**तव तच्चारु वपुर्न दृश्यते॥ १८॥**

[1] 'विद्यते' क. पाठः. २. 'स्वयम' मुद्रितकोशपाठः.

(प्रकाशिका)

रचितमिति । आर्तवमृतुप्रभवम् । ध्रियते अवतिष्ठते । अत्र विषादः ॥ १८ ॥

( विवरणम् )

अथ स्वशरीरगतानि कुसुमाभरणान्यवलोक्य[2] सविषादमाह —

रचितमिति । रतिपण्डित ! त्वया मम अङ्गेषु रचितं नवम् आर्तवम् इदं कुसुमप्रसाधनं ध्रियते, तव चारु तद् वपुः न दृश्यते । हे रतिपण्डित ! रतिषु सुरतेषु पण्डित ! विदग्ध ! । त्वत्कृतानां कर्मणां कथं विस्मरणं स्यादित्यनया सम्बुद्ध्या व्यज्यते । त्वया स्वहस्तेनैव ममाङ्गेषु रचितं न्यस्तम् । शिरोलङ्कारकर्णावतंसादितां प्रापितमित्यर्थः । नवम् अभिनवम् । अत्र कुसुमाभरणानामभिनवत्वकथनेन क्षणादेव त्वमीदृशीं दशां गतोऽसीति व्यज्यते । आर्तवम् ऋतुप्रभवं, वसन्तपुष्पाभरणमित्यर्थः । इदं दृश्यमानं कुसुमप्रसाधनं कुसुममयं प्रसाधनमलङ्कारः । ध्रियते ममाङ्गेष्वेवावतिष्ठते । 'धृङ् अवस्थाने' इति धातोरिदं रूपम् । चारु सुन्दरम् । तत् प्रसाधनकर्तृत्वेन मयेदानीमेवानुभूतं वपुः शरीरं न दृश्यते । हा हतास्मीति शेषः ॥ १८ ॥

विबुधैरपि[3] यस्य[4] दारुणै-
रसमाप्ते परिकर्मणि स्मृतः[5] ।
तदिमं[6] कुरु दक्षिणेतरं
चरणं निर्मितरागमेत्य मे ॥ १९ ॥

(प्रकाशिका)

विबुधैरिति । विबुधानां सौम्यत्वस्योचितत्वाद् अपिशब्दः ।

१. 'तुभ' क. ग. पाठः. २. 'मान्य' ङ. पाठः. ३. 'सि', ४. 'स्य दा', ५. 'मि', ६. 'हि' मुद्रितकोशपाठः.

परिकर्मणि प्रसाधने[1] । तत्तस्मात् । दक्षिणेतरमिति, तस्य स्त्रीणां सम्भोगसाधनत्वात् । यथा मेघसन्देशे — 'वामश्चास्याः कररुहपदैरि'त्यादि । अत्रौत्सुक्यम् ॥ १९ ॥

(विवरणम्)

अथार्धरचितस्य चरणालक्तकरञ्जनपरिपूरणस्यावश्यकत्वात् त्वरिततरमागच्छेति सौत्सुक्यमाह —

विबुधैरिति । विबुधैः सुदारुणैः परिकर्मणि असमाप्ते स्मृतः यत् तत् त्वम् एत्य मे दक्षिणेतरम् इमं चरणं निर्मितरागं कुरु । विबुधैर्देवैः । विबुधानां सौम्यत्वस्यैवोचितत्वादपिशब्दो विरोधमाह । विबुधत्वे सत्यपि सुदारुणैरत्यन्तदारुणैः । विबुधानां दारुणत्वमसाध्ये कर्मणि नियोगार्थं (स्मरणात् । ) तस्यापि स्मरणस्य प्रसाधनान्तराले कृतत्वात् सुदारुणत्वम् । तथाविधैः सद्भिः । परिकर्मणि प्रसाधने असमाप्ते समाप्तिमप्रापिते सति स्मृतः चिन्तितोऽसीति यत्, तत् तस्माद्धेतोः त्वमेत्यागत्य दक्षिणेतरं वामम् । इममलक्तकशून्यत्वेन शोच्यतया दृश्यमानं चरणं पादम् । निर्मितरागं निर्मितो विहितः रागः अलक्तकरसो यस्मिंस्तथाविधम् । कुरु विधेहि । अयमभिप्रायः — स्नेहातिशयात् स्वहस्तेनैव मम चरणद्वयमलक्तकरसेन रञ्जयितुं प्रवृत्तस्त्वं दक्षिणचरणरञ्जनानन्तरमेव देवकृतात् स्मरणाद् गतोऽसीति यत्, तस्माद् द्रुततरमागत्य वामचरणमलक्तकरसेन रञ्जयेति । प्रियतमकृतस्य वामचरणस्पर्शस्य विशेषतः स्त्रीणां सुखकरत्वं प्रसिद्धम् । यथोक्तं मेघसन्देशे — 'वामश्चास्याः कररुहपदैरि'त्यादि ॥ १९ ॥

अहमेत्य पतङ्गवर्त्मना[2]
पुनरङ्काश्रयिणी[3] भवामि ते ।

१. 'ने । द' ङ. पाठः. २. 'गध' क. ग. पाठः. ३. 'य' मुद्रितकोशपाठः.

**चतुरैः सुरकामिनीजनैः**
**प्रिय! यावन्न विलोभ्यसे दिवि ॥ २० ॥**

**(प्रकाशिका)**

अथवैतत् कर्तव्यमित्याह —

**अहमिति। पतङ्गवर्त्मना अग्निप्रवेशेनेत्यर्थः। भवामि वर्तमानसामीप्ये लट्। यावन्न विलोभ्यसे वञ्च्यसे, तावदियमागतास्मीत्यर्थः। अत्र सपत्नीशङ्का। ननु दिव्यत्वाद् दिवीत्यनुपपन्नम्। मरणादृतेऽपि शक्यश्च प्राप्तुम्। न। दिव्यानामपि शरीरत्यागानन्तरं गतयो भिन्नाः। तस्मात् सालोक्यमनुमरणलभ्यमेव ॥ २० ॥**

**(विवरणम्)**

अथवा वृथा प्रलापैरलं, भर्तुरनुमरणमेव युक्तमिति सपत्नीशङ्कया सहाह —

अहमिति। प्रिय! त्वं यावद् दिवि सुरकामिनीजनैः न विलोभ्यसे, तावद् अहं पतङ्गवर्त्मना एत्य पुनः ते अङ्काश्रयिणी भवामि। हे प्रिय! त्वं यावद् दिवि स्वर्गे सुरकामिनीजनैः स्वर्गस्त्रीभिः न विलोभ्यसे यावन्नात्मवशं नीयसे, तावदहं पतङ्गवर्त्मना पतङ्गानां शलभानां वर्त्मना मार्गेण, अग्निप्रवेशेनेत्यर्थः। एत्य त्वत्समीपं प्राप्य। पुनः पुनरपि ते तव। अङ्काश्रयिणी अङ्कमुत्सङ्गमाश्रयितुं शीलमस्या इति तथा। भवामीति 'वर्तमानसामीप्ये वर्तमानवद्वे'(३. ३. १३१)ति लट्। चिरपरिचये सति सुरसुन्दर्यस्त्वां वशीकरिष्यन्ति, तस्मात् पूर्वमेवाङ्काश्रयिणी भवामीत्यर्थः। नन्वस्ति किं सुरसुन्दरीणां तादृशं सामर्थ्यमित्यत्राह — चतुरैरिति। पुंसां चित्ताकर्षणविचक्षणैरित्यर्थः। नन्वत्र श्लोके दिवीति यदुक्तं तदनुपपन्नं, पूर्वमपि मदनस्य दिव्यत्वात्। नाप्यनुमरणे प्रयोजनमपि पश्यामः, आत्मनो दिव्यत्वेन मरणं विनापि स्वर्गप्राप्त्युपपत्तेः। उच्यते। दिव्यानामपि शरीरत्यागानन्तरं स्वर्ग एवावस्थानमिति नियमो नास्त्येव। तस्मात् सुरकार्यमुद्दिश्य

कृतशरीरत्यागस्य स्वर्गप्राप्तिरेवोचितेति सम्भावनामात्रेणैव दिवीत्युक्तम् । नापि दिव्यानामपि भर्तृलोकप्राप्तिरनुमरणेन विना सम्भवति, स्मृतिपुराणादिषु भर्तृलोकप्राप्तेरनुमरणमात्रोपायत्वेन प्रतिपादनादित्यलमनेन ॥ २० ॥

**मदनेन विनाकृता रतिः**
**क्षणमात्रं किल जीवतीति मे ।**
**वचनीयमिदं व्यवस्थितं**
**रमण! त्वामनुयामि यद्यपि ॥ २१ ॥**

(प्रकाशिका)

दोषस्तु तथाकरणेऽपि नापैतीत्याह—

**मदनेनेति** । इतिशब्दो हेतौ, न तु वचनीयप्रकारवाची । तत्त्वे जीवेदिति स्यात् । व्यवस्थितं शिलालिखितं जातम् । अत्र लज्जा ॥ २१ ॥

(विवरणम्)

हन्त ममानुमरणेन भर्तृलोकप्राप्तौ सिद्धायामपि क्षणमात्रजीवननिमित्तो लोकापवाददोषः कदाचिदपि नापैतीति सलज्जमाह—

**मदनेनेति** । रमण! अहं त्वामनुयामि यद्यपि, रतिः मदनेन विनाकृता क्षणमात्रं जीवति किल इतीदं वचनीयं मे व्यवस्थितम् । रमण! हे कान्त! अहमनुमरणेन यद्यपि त्वामनुयामि सद्य एवानुगमिष्यामि । वर्तमानसामीप्ये लट् । तथापि रतिः मदनेन कामदेवेन । विनाकृतेत्येकं पदम् । विरहितेत्यर्थः । तथाभूता सती । क्षणमात्रं कञ्चित्कालमपि जीवति किल । किलशब्दः प्रसिद्धौ । इतिशब्दो हेतौ, न तु वचनीयप्रकारवाची । तथा सति जीविता किलेति प्रयोगः स्यात् । केचित्तु जीवितेत्येव पठन्ति ।

१. 'णोपा' क. पाठः. २. 'वितेति' मुद्रितकोशपाठः.

जीवतीत्येतस्माद्धेतोरुत्पन्नमित्यर्थः । वचनीयं लोकापवादः । मे व्यवस्थितं, शिलातललिखितं जातमित्यर्थः ॥ २१ ॥

**क्रियतां कथमन्त्यमण्डनं**
**परलोकत्वरितस्य ते मया ।**
**सममेव गतोऽस्यतर्किता**
**गतिमङ्गेन च जीवितेन च ॥ २२ ॥**

(प्रकाशिका)

अनुम्रियमाणापि पतिमात्मानं च मण्डयति । ततश्च यत् ते मण्डनं प्राप्तकालं, तदपि मे दुर्लभमित्याह—

**क्रियतामिति** । प्राप्तकाले लोट् । अशक्यत्वे हेतुमाह—**सममिति** । समं युगपत् । लोके हि जीवितापायेऽपि कञ्चित् कालमङ्गमवतिष्ठते, इह तु न तथेत्यर्थः । दक्षिणावर्तस्तु स्वयमेवेति पाठमादृतवान् । तत्र चतुरश्रम् । अन्त्यमण्डनस्याशक्यत्वं ह्युपपाद्यम् । तत्र च स्वयङ्गमनस्य नोपयोगः । अत्रापि विषादः ॥ २२ ॥

(विवरणम्)

भर्तारमनुमर्तुमुद्यता हि पतिव्रताः पतिमात्मानं च कुसुमचन्दनादिभिरलङ्कुर्वन्तीति नियमाद् यत् ते मण्डनं प्राप्तकालं, तदपि मे विधिवैपरीत्याद् दुर्लभमभूदिति सविषादमाह—

**क्रियतामिति** । परलोकत्वरितस्य ते अन्त्यमण्डनं मया कथं क्रियताम् । परलोकत्वरितस्य परलोकमुद्दिश्य गन्तुं त्वरितस्य, इहलोकं परित्यज्य त्वरितमेव परलोकं गतस्येत्यर्थः । ते तव । अन्त्यमण्डनं, प्रेतशरीरालङ्करणमित्यर्थः । मया कथं क्रियतां, न कथञ्चिदित्यर्थः । क्रियतामिति प्राप्तकाले

१. 'कान्तरि' मुद्रितकोशपाठः. २. 'ति यु' क. पाठः. ३. 'कि' ख. ग. घ. पाठः.

लोट् । अनुमरणकाल एव हि तस्यापि काल इति भावः । अन्त्यमण्डनाशक्यत्वे हेतुमाह — त्वम् अङ्गेन च जीवितेन च सममेवातर्कितां गतिं गतः असीति । अङ्गेन शरीरेण जीवितेन च समं सहैव अतर्कितामनिरूपितां गतिम् । प्रत्यक्षाद्यविष(यां?यं) पदवीमित्यर्थः । गतः प्राप्तोऽसि । सर्वेषां हि मृतानां जन्तूनां शरीरमात्रं तत्रैव तिष्ठति । त्वं तु शरीरप्राणाभ्यां सहैव विनष्टोऽसि । ततः कथमन्त्यमण्डनावकाश इति भावः ॥ २२ ॥

**ऋजुतां नयतः स्मरामि ते**
**शरमुत्सङ्गनिषण्णधन्वनः ।**
**मधुना सह सस्मितां कथां**
**नयनोपान्तविलोकितं च तत् ॥ २३ ॥**

(प्रकाशिका)

ऋजुतामिति । तां कथां तद्विलोकनं च स्मरामीत्यन्वयः । नयत इति हेतौ शता । तदा कथाप्यन्यैवेति भावः । दक्षिणावर्तस्तु कथामित्यत्र स्मरामीत्यनुषङ्गमाह । न तच्छ्रद्धेयम् । पूर्वमन्यान्वये[1] सत्यनुषङ्गः । न च पूर्वं ते स्मरामीत्यन्वयः । न हि तथान्वयप्रतीतिः स्वारसिकी । विभक्तिप्रक्रमदोषश्च स्यात् । न च सुहृत्संकथा कटाक्षवीक्षणं च शरर्जुतानयनानुषङ्गिके तेन समकक्ष्यतां नेये । तयोरेव हि स्वानुभवसिद्धविविधविलासास्पदत्वेन स्मर्यमाणयोः करुणोद्दीपकत्वं विवक्षितं, तथा स्मरणं च तच्छब्देन दर्शितम् । अत्रापि स्मृतिः ॥ २३ ॥

(विवरणम्)

इत्थमनुमरणे कल्पितेऽपि[2] पूर्वानुभूताननतिमनोहरान् भावविशेषान् वचनविशेषानपि संस्मृत्य प्रलपन्ती त्वरितमनुमरणमेव द्रढयति —

ऋजुतामिति । अहं शरम् ऋजुतां नयतः उत्सङ्गनिषण्णधन्वनः ते

१. 'मन्व' क, ग. पाठः. २. 'थि' क., 'लि' ङ. पाठः.

मधुना सह सस्मितां कथां तद् नयनोपान्तविलोकितं च स्मरामि । शरं बाणम् ऋजुतामार्जवम् नयतः प्रापयतः । हेतौ शता । शरर्जुतानयनाद्धेतोः उत्सङ्गनिषण्णधन्वनः उत्सङ्गे अङ्के निषण्णं स्थितं धनुर्यस्य तस्य । ते तव मधुना अत्यन्तबन्धुभूतेन मूर्तिमता वसन्तेन सह सस्मितां मन्दस्मितसहितां कथां सल्लापम् । तत् तादृशम् । अत्र पूर्वानुभूतपरामर्शिना तच्छब्देनानिर्देश्यत्वमुक्तम् । नयनोपान्तविलोकितं नयनस्योपान्तेन नेत्रकोणेनेति यावत् । चकारः समुच्चयार्थः । स्मरामि चिन्तयामि । शरस्य वक्रतामपनेतुमङ्के चापं निधायात्यन्तसावधानत्वयोग्ये तस्मिन्नपि काले मधुना सम्भाषणं कुर्वतस्तन्मध्ये च सस्नेहं नेत्रोपान्तेन मामवलोकयतश्च तव तादृशान् भावान् कथमहं विस्मरामि । अविस्मृता च कथं न त्वरितमेवानुमरिष्यामीति भावः ॥ २३ ॥

क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४ ॥

(प्रकाशिका)

क्वेति । हृदयङ्गमः 'गमश्च' (३.२.४७) इति खश् । कुसुमैरायोजितं सम्पादितं कार्मुकं येन । खलुर्जिज्ञासायाम् । अत्र हेतुबलाद् गमने सम्भाव्ये तदभावसम्भावनं तद्दर्शनस्येष्टत्वात् । त्वद्गतामिति वक्तव्ये सुहृद्गतामिति वचनं सुहृद्गतां गतिमसावपि गच्छत्विति पिनाकिमननस्य हेतुतासंभावनां द्योतयितुम् । तत्र चानुकूलमुग्ररुषेति विशेषणम् । अत्र सुहृद्दर्शनौत्सुक्यं पिनाकिन्यसूया च ॥ २४ ॥

१. 'रासनजु' क. ख. ग. पाठः. २. 'दसंभा' क. ख. ग. पाठः. ३. 'नेत्यस्य हेतुतां द्यो' क. ख. ग. घ. पाठः. ४. 'रूपमु' घ. पाठः.

(विवरणम्)

अथ 'मधुना सह सस्मितां कथाम्'(श्लो. २३)इति प्रसङ्गागतं प्रियतमबन्धुभूतं मधुमुद्दिश्यापि प्रलपति —

क्वेति । ते हृदयङ्गमः सखा मधुः क नु । ते तव । हृदयङ्गमः हृदयं गच्छतीति हृदयङ्गमः । 'गमश्च' (३.२.४७) इति खच् । हृदय एव वर्तमानः, अतिप्रिय इत्यर्थः । तथाभूतः सखा मधुर्वसन्तः क नु । नुशब्दो वितर्के । इदानीं कुत्र वा गत इत्यर्थः । प्रियतमविरहिताहं यदि तमपि द्रक्ष्यामि, तर्हि मे दुःखं किञ्चिदपि शाम्येदित्यर्थः । न केवलं सखित्वादेव हृदयङ्गमत्वम्, अपितु उपकर्तृत्वाच्चेत्याह — कुसुमायोजितकार्मुक इति । कुसुमैः पुष्पैरायोजितं सम्पादितं कार्मुकं चापं येन स तथा । अदर्शने स्नेहादपायमेवाशङ्कयाह— सोऽपि पिनाकिना सुहृद्गतां गतिं न गमितः खलु । सोऽपि । न केवलं मत्प्रियतमः, अपितु तत्स(खा ? खोऽ)पीत्यपिशब्दार्थः । पिनाकिना । पिनाकोऽस्यास्तीति पिनाकी । अनेन साधनसम्पत्तिरुक्ता । सुहृद्गतां सुहृदा बन्धुना गतां प्राप्ताम् । गतिं पदवीम् । न, गमितः प्रापितः । खलुशब्दो जिज्ञासायाम् । अत्र हेतुवशात् सुहृन्मार्गप्राप्तिप्रापणे सम्भाव्येऽपि तदप्रापणसम्भावनं तद्दर्शनौत्सुक्यादिति द्रष्टव्यम् । प्रकरणवशादत्र त्वद्गतां गतिमित्येव वक्तव्ये सुहृद्गतां गतिमिति वचनं पिनाकिनस्तद्विनाशने हेतुसद्भावं प्रदर्शयितुम् । अत एवाह — उग्ररुषेति । अत्युग्रकोपेन । अत्युग्रकोपो हि रिपुजनमुन्मूल्यापि तद्बन्धून(प्यु ? नु)न्मूल्य न विरमति । अत्र पूर्वार्धेन सुहृद्दर्शनौत्सुक्यमुत्तरार्धेन पिनाकिन्यसूया च ध्वन्यते ॥ २४ ॥

**अथ तैः परिदेविताक्षरै-**
**हृदये दिग्धफलै[1]रिवार्पितः[2] ।**
**रतिमभ्युपपत्तुमातुरां**
**मधुरात्मानमदर्शयत परः ॥ २५ ॥**

१. 'शरैरि', २. 'ह' मुद्रितकोशपाठः.

प्रकाशिकानुरोधेन अभ्युपपत्तुमिति पठनीयम् ।

(प्रकाशिका)

अथैवं कृतप्रस्तावस्य मधोर्वृत्तमाह—

अथेति। तैरिति तथाभूतैरित्यर्थः। परिदेविताक्षरैर्विलापवाक्यैरित्यर्थः। अक्षरग्रहणमर्थात् प्रागेव चित्तद्रुतिहेतुतां द्योतयितुम्। 'विषाक्ते दिग्धलिप्तका'विति सिंहः। अभ्यवपत्तिरनुग्रहः। स चात्राश्वासनम्। आतुरायां दूरावलोकनाक्षमत्वात् पुरोदर्शनम्॥ २५॥

(विवरणम्)

इत्थं कृतप्रस्तावस्य मधोः प्रवृत्तिं दर्शयति—

अथेति। अथ मधुः आतुरां रतिम् अभ्युपपत्तुम् आत्मानं पुरः अदर्शयत्। अथ एवम्भूतविलापानन्तरं मधुर्वसन्तः आतुरां भर्तृवियोगेन दुःखितां रतिं कामवधूम् अभ्युपपत्तुमनुग्रहीतुम्। 'अभ्युपपत्तिरनुग्रहः' इत्यमरः। अनुग्रहश्चार्थादाश्वासनं विवक्षितम्। आश्वासयितुमिति यावत्। आत्मानं स्वशरीरं पुरः अग्रे एव अदर्शयद् दर्शयामास। आतुराया रतेः दूरावलोकनसामर्थ्याभावादग्र एवाविर्भावः। अभ्युपपत्तौ हेतुं प्रदर्शयति—तैः परिदेविताक्षरैः हृदयेऽर्पितः इति। तैः तथाभूतैः, अनिर्देश्यैरित्यर्थः। परिदेविताक्षरैः विलापवाक्यैः। 'विलापः परिदेवनमि'त्यमरः। भावे निष्ठा। अक्षरग्रहणेनार्थावबोधात् पूर्वमेव हृदयद्रवहेतुत्वं द्योत्यते। हृदये हृदि। अर्पितः आहत इत्यर्थः। अर्दित इति वा पाठः। परिदेविताक्षराणामसह्यत्वमुत्प्रेक्षया दर्शयति—दिग्धफलैरिवेति। दिग्धैर्विषलिप्तैः। 'विषाक्ते दिग्धलिप्तकावि'ति सिंहः। फलैः शरमुखैः। 'फलं शरमुखेऽपि चे'ति भोजः। विषाक्तैः शरमुखैरिवात्यन्तदुस्सहैरित्यर्थः। हृदयार्पितं हि शल्यमत्यन्तपीडाकरं भवति, तत्रापि विषाक्तमिदं हृदयं दहत्येवेति भावः॥ २५॥

१. 'या अव' क. ग. पाठः. २. ३. ४. 'भ्यवप' घ. ङ पाठः.

तमवेक्ष्य रुरोद सा भृशं
स्तनसम्बाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते ॥ २६ ॥

(प्रकाशिका)

तमिति । भृशं पूर्वस्मात् । स्तनसम्बाधमिति 'परिक्लिश्यमाने च' (३.४.५५) इति णमुल् ॥ २६ ॥

(विवरणम्)

वसन्तदर्शनानन्तरं रतेर्दुःखाधिक्यमाह —

तमिति । सा तमवेक्ष्य भृशं रुरोद । सा रतिः तं वसन्तम् अवेक्ष्य दृष्ट्वा । भृशमत्यन्तं, पूर्वस्मादधिकमित्यर्थः । रुरोद रोदनं चकार । दुःखाधिक्यमेव प्रकटयति — स्तनसम्बाधमुरो जघान चेति । स्तनसम्बाधमिति 'परिक्लिश्यमाने च'(३.४.५५)इति णमुल् । स्तनौ बाधित्वेत्यर्थः । उरः वक्षःप्रदेशं जघान कराभ्यामाहतवती । स्तनयोर्बाधा यथा भवति तथा वक्षःस्थलमाजघानेत्यर्थः । उक्तमर्थमर्थान्तरन्यासेन समर्थयते — दुःखं स्वजनस्य अग्रतः विवृतद्वारमिव उपजायते हीति । दुःखं दुःखसामान्यम् । स्वजनस्य स्वस्यात्मीयस्य जनस्य, बन्धोरित्यर्थः । अग्रतः अग्रे । विवृतद्वारं विवृतं विघटितं द्वारं यस्य तत्तथा । उपजायते भवति । सर्वं हि दुःखं बन्धुजनस्याग्रे विवृतद्वारमिव भवतीत्यर्थः । अन्तर्भागे निरुद्धं हि वस्तु यथा द्वारे विघटिते सति निरन्तरं निर्गच्छति, तथा मनस्स्थितं दुःखमपि बन्धुजनस्याग्रे प्रलापाश्रुसन्तानादिरूपेण बहिः प्रसरत्येवेति भावः । हिशब्दः प्रसिद्धौ ॥ २६ ॥

इति चैनमुवाच दुःखिता
सुहृदं[2] पश्य वसन्त! किं स्थितम् ।

१. 'ध प' ङ. पाठः. २. 'दः' मुद्रितकोशपाठः.

तदिदं कणशो विकीर्यते
पवनैर्भस्म कपोतकर्बुरम् ॥ २७ ॥

(प्रकाशिका)

इतीति। दुःखिता, दुःखोन्मादादित्यर्थः। स्थितं स्थानम्। किं तिष्ठसीत्यर्थः। पश्येत्युक्तं, स नात्र दृश्यत इत्याह—तदिदमिति। तच्छब्दः सुहृदं परामृशति, प्रतिनिर्दिश्यमानलिङ्गं च भजते। कणशः अल्पार्थे शस्। पवनैरिति बहुवचनेन स इदानीमेव सर्वः संवृत्त इति द्योत्यते(१)। कर्बुरं शबलम्। एतद् दर्शनसौकर्यार्थम्। यावन्न निश्शेषं प्रकीर्यते, तावद् भस्मापि पश्येति भावः। अत्र दैन्यम् ॥ २७ ॥

(विवरणम्)

उज्जृम्भितदुःखाया रतेः प्रवृत्तिमाह—

इतीति। दुःखिता सा एनमित्युवाच च। दुःखिता सती सा रतिः एनं वसन्तम् इति वक्ष्यमाणप्रकारेण उवाच उक्तवती च। दुःखोन्मादवशादित्थमुवाच चेत्यर्थः। वचनप्रकारानेवाह—सुहृदमित्यादिना। वसन्त! त्वं सुहृदं पश्य। हे वसन्त! त्वं सुहृदं बन्धुभूतं पश्य। सुहृद्दर्शनं त्वरितमेव कर्तव्यम्। नायं कालक्षेपस्यावसर इत्याह—स्थितं किमिति। स्थितमवस्थानम्। भावे निष्ठा। किं किमर्थमवस्थानेन कालविलम्बनं करोषीत्यर्थः। कालक्षेपं मा कुर्वित्यभिप्रायः। स्थित इति पाठे किमर्थं तूष्णीं स्थितो भवसीत्यर्थः। ननु मे सखा न तु दृश्यते। अतः कथं पश्येत्युक्तमित्यत्राह—तदिदं भस्म पवनैः कणशः प्रकीर्यते इति। अत्र तदिति तच्छब्देन प्रतिनिर्दिश्यमानलिङ्गः सुहृत् परामृश्यते। 'शैत्यं हि यत् सा प्रकृतिर्जलस्ये'त्यादिवत्। इदं दृश्यमानं भस्म पवनैर्वायुभिः। अत्र बहुवचनेन भस्मनोऽप्यत्यन्तविनाशकालः प्राप्त इति द्योत्यते। कणशः अल्पार्थे शस्। 'लवलेशकणाणव' इति सिंहः। प्रकीर्यते इतस्ततः प्रक्षिप्यते। तव सुहृदयं भस्म-

१. 'ति, न' ङ. पाठः. २. 'दमेव सर्वशमे सं' घ. पाठः. ३. 'पि तावत् पश्येः' ङ. पाठः. ४. 'नात्र द' ङ. पाठः'

भावमुपगतो वायुभिः परमाणुतां नीत्वा परितो विकीर्यते । तदपि क्षणमात्रं पश्येत्यर्थः । इदानीं तु दर्शनं सुकरमेवेत्याह — कपोतकर्बुरमिति । कपोतवत् कर्बुरं शबलम् । 'चित्रकिर्मीरकल्माषशबलैताश्च कर्बुर' इत्यमरः । कपोतवन्नानावर्णमित्यर्थः । अनेन श्लोकेन दैन्यं प्रकाशितम् ॥ २७ ॥

**अयि सम्प्रति देहि दर्शनं**
**स्मर! पर्युत्सुक एष माधवः ।**
**दयितास्वनवस्थितं नृणां**
**न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥**

(प्रकाशिका)

**अयीति । सम्प्रति को विशेष इत्याह — पर्युत्सुक इति । पूर्वमपि त्वं पर्युत्सुकेत्याह — दयितास्विति । तस्मान्मय्यनपेक्षा सम्भवति, न त्वस्मिन् सुहृदीति वाक्यशेषः । अत्रापीर्ष्यौत्सुक्ये ॥ २८ ॥**

(विवरणम्)

अस्तु ते मत्प्रलापेऽनादरः, वसन्ताय तु दर्शनं देयमेवेत्यौत्सुक्यदैन्याभ्यां सह रमणं प्रत्याह —

अयीति । अयि स्मर! सम्प्रति दर्शनं देहि । अयि स्मर! हे मदन! सम्प्रति इदानीम् । दर्शनं देहि, त्वरितमागच्छेत्यर्थः । ननु सम्प्रति को विशेषः । अत आह — एष माधवः पर्युत्सुक इति । एषः दृश्यमानः माधवः वसन्तः । पर्युत्सुकः, त्वद्दर्शनसाभिलाष इत्यर्थः । भवतीति शेषः । यस्मादेष माधवस्त्वद्दर्शनलालसो वर्तते, तस्माद् दर्शनं देहीत्यर्थः । ननु पूर्वमेव त्वं पर्युत्सुकैव । माधवे को विशेष इत्यत्राह — नृणां दयितासु प्रेम अनवस्थितं, सुहृज्जने चलं न खल्विति । नृणां पुरुषाणां दयितासु कान्तासु प्रेम स्नेहः

१. 'स्य सु' क. पाठः.

अनवस्थितम् अस्थिरम् । सुहृज्जने बन्धुजने । प्रेमशब्दोऽप्यनुषज्यते । चलं चञ्चलम् न खलु, स्थिरमेवेत्यर्थः । यस्मात् पुम्भिः स्त्रीषु कृता मैत्री चञ्चला, बन्धुजनेषु कृतां मैत्री तु स्थिरैव, तस्मान्मय्युपेक्षा सम्भवेदपि, न त्वस्मिन् सुहृदीति भावः ॥ २८ ॥

**अमुना ननु पार्श्ववर्तिना**
**जगदाज्ञां ससुरासुरं तव ।**
**बिसतन्तुगुणस्य कारितं**
**धनुषः पेलवपुष्पपत्रिणः ॥ २९ ॥**

(प्रकाशिका)

सुहृत्त्वे[2]ऽपि विशेषमाह —

अमुनेति । ननुरवधारणे । पार्श्ववर्तिना सचिवेन सतेत्यर्थः। तव धनुष आज्ञां कारितमित्यर्थः। 'हृक्रोरन्यतरस्याम्' (१.४.५३) इति जगतः कर्मसंज्ञा । विशेषणाभ्यां धनुषो दौर्बल्यमुक्तम् ॥ २९ ॥

(विवरणम्)

नन्वन्येऽपि चन्द्रादयः सुहृदो मम सन्त्येव । अस्मिन् वसन्ते को विशेष इत्याशङ्क्याह —

अमुनेति । पार्श्ववर्तिना अमुना ननु ससुरासुरं जगत् तव धनुषः आज्ञां कारितम् । पार्श्ववर्तिना। पार्श्वे वर्तितुं शीलमस्येति तथा । सचिवपदवीमनुवर्तमानेनेत्यर्थः । अमुना वसन्तेन । ननुशब्दोऽवधारणे । ससुरासुरं सुरैरसुरैश्च सह वर्तमानम् । क्षुद्रत्वादितरेषामनुपादानम् । त्वदीयचापाज्ञानुष्ठाने सुरेष्वसुरेषु वा मनुजेषु तिर्यग्योनिषु वा न कश्चिद् विशेष इति भावः । जगद् जगद्वासिनो जनाः । 'हृक्रोरन्यतरस्याम्' (१.४.५३) इति जगतः कर्मसंज्ञा । तव धनुषः पुष्पमयत्वादतिमृदुनोऽपीति भावः । आज्ञां नियोगं कारितमनुष्ठापितम् । ससुरासुरः सकलोऽपि लोकः पुष्पमयत्वादतिपेलवस्यापि तव

१. 'ता तु' क. पाठः. २. 'त्वे वि' क. ख. ग. घ. पाठः.

धनुषो निदेशवर्ती जात इति यत्, तदस्यैव मधोः साचिव्यबलादित्यर्थः । न केवलं तव धनुषो दौर्बल्यम्, अपितु मौर्व्या अपीत्याह—बिसतन्तुगुणस्येति । बिसस्य मृणालस्य तन्तुरेव गुणो मौर्वी यस्य तस्यापीत्यर्थः । अलीनामिव बिसतन्तूनामपि गुणत्वप्रसिद्धेरेवमुक्तम् । शराणामपि दौर्बल्यमाह—पेलवपुष्पपत्रिण इति । पेलवानि पुष्पाण्येव पत्रिणः शरा यस्य तादृशस्यापि ते धनुषो निदेशवर्ती ससुरासुरो लोकः, न तु तेषु यः कश्चिदिति यत्, तस्यैतत्साचिव्यमात्रहेतुत्वादवश्यमस्मै दर्शनं दातव्यमेवेति भावः ॥ २९ ॥

गत एव न ते निवर्तते
स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मा-
मविषह्यव्यसनेप्रधूपिताम् ॥ ३० ॥

(प्रकाशिका)

अथादर्शननिर्वेदादाह—

गत इति । दशा वर्तिः । किं दशासादृश्यमित्याह—पश्येति । दशापक्षे असह्यविक्षेपेण[3] प्रधूपिताम् । अन्यत्र प्रधूपनमनौज्ज्वल्यम् । अत्रात्मनिर्वेदः ॥ ३० ॥

(विवरणम्)

इत्थमभिहितेऽप्यकृतनिवर्तने निजरमणे स्वात्मन्यवज्ञां प्रतिदर्शयन्ती वसन्तं प्रत्याह—

गत इति । ते सखा सः गत एव । ते तव सखा सः कामदेवः गत एव । आत्यन्तिकादर्शनं प्राप्त एवेत्यर्थः । कुत एतदवगतमित्यत्राह—न

१. 'नेन धूमिताम्' मुद्रितकोशपाठः. २. 'शया सा' क. पाठः. ३. 'प' ख. ग. घ. ङ. पाठः. ४. 'स्मनि मि' ग. पाठः.

निवर्तते इति । यस्मादेवंविधे बन्धुजने दर्शनोत्सुके सत्यपि न निवर्तते, तस्मादित्यर्थः । अत्रोपमामाह — अनिलाहतः दीपः इवेति । अनिलेन वायुना आहतः अभिहतः दीपः प्रदीप इव । यथानिलाहतो दीपः पुनर्न निवर्तते, तथायमपीत्यर्थः । आत्मानमप्युपमिनोति — अहमस्य दशा इवेति । अहमस्य कामदेवदीपस्य दशा वर्तिरिव । भवामीति शेषः । न ह्यनिलाहते दीपे वर्तिरपि तेन सह गच्छति । आत्मनो दशासाम्यमपि प्रकटयति — अविषह्यव्यसनप्रधूपितां मां पश्येति । अविषह्येणासह्येन व्यसनेन दुःखेन प्रधूपितां प्रकर्षेण धूपितामनुज्ज्वलाम् अन्तर्ज्वलच्छोकाग्निधूमयुक्तामिति वा । दशापक्षे तु अविषह्येणानिलकृतेन व्यसनेन विक्षेपेण प्रधूपितामित्यर्थः । तादृशीं मां पश्य अवलोकय ॥ ३० ॥

**विधिना कृतमर्धवैशसं**
**ननु मां कामवधे विमुञ्चता ।**
**अनपायिनि संश्रयद्रुमे**
**गजभग्ने पतनाय वल्लरी ॥ ३१ ॥**

(प्रकाशिका)

तेन सहैव किं न गतासीत्याह —

**विधिनेति** । 'शसु हिंसायामि'ति धातोः पचाद्यच्[1] । विशसो हिंसकः । तस्य कृत्यं वैशसम् । विमुञ्चतेति हेतौ शता । समग्रवैशसं लाभ एवेति भावः । आत्मावशेषोदुपकारिणि विधौ किमसूयेत्याह — अनपायिनीति । कदाचिदप्यविरहि(णी ? णि) । पतनाय । 'तुमर्थाच्च भाववचनात्'(२. ३. १५) इति चतुर्थी । खलो विधिः किमेतदपि न जानातीति भावः । अत्र विधिं प्रत्यसूया ॥ ३१ ॥

१. चि । वि' ख. ग. ङ.पाठः २. 'षणादु' ख. घ. ङ. पाठः.

(विवरणम्)

ननु किमर्थं तर्हि परलोकगतेन प्रियतमेन सह तदानीमेव न गतासीत्यत्राह

विधिनेति । कामवधे मां विमुञ्चता विधिना अर्धवैशसं कृतं ननु । कामवधे कामस्य कामदेवस्य वधे दहने क्रियमाणे सति । मां विमुञ्चता वधाद् विसृजता । हेतौ शता । विधिना दैवेन । अर्धवैशसमर्धहिंसा । 'शसु हिंसायामि'त्यस्माद्धातोः पचाद्यचि कृते विशस इति पदं सिध्यति । विशसो हिंसकः । 'नृशंसो विशसः क्रूर' इति भोजः । विशसस्य कर्म वैशसं हिंसा । ननुरवधारणे । कामवधे मम विमोचनाद्धेतोर्दैवेनार्धहिंसा कृतैवेत्यर्थः । पुरुषस्यार्धं हि पत्नी । न चार्धहतदेहेन किञ्चिदपि प्रयोजनमस्ति । तस्मात् समस्तहिंसैव वरीयसीति भावः । नन्वात्मरक्षणादुपकार एव विधिना कृतः । ततः कथमर्धवैशसं कृतमित्युक्तम् । तत्राह — अनपायिनि संश्रयद्रुमे गजभग्ने वल्लरी पतनायेति । अनपायिनि कदाचिदप्यविरहिणि संश्रयद्रुमे आश्रयभूते द्रुमे । उपघ्नतरावित्यर्थः । गजभग्ने गजेन भग्ने भङ्गं प्रापिते सति । वल्लरी लता । पतनाय । 'तुमर्थाच्च भाववचनात्' (२.३.१५)इति चतुर्थी । पतनं कर्तुमेव समर्था भवतीत्यर्थः । न ह्याश्रयद्रुमे भग्ने सति लतया किञ्चिदपि प्रयोजनमस्ति । तस्मात् तद्वन्मां कामवधे विमुञ्चता विधिना अर्धवैशसमेव कृतमिति भावः । अत्र विधिं प्रत्यसूया प्रकाशिता ॥ ३१ ॥

तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जना-
दनु मां प्रापय पत्युरन्तिकम् ॥ ३२ ॥

१. 'मदे' घ. ङ. पाठः. २. 'तायाः कि' ङ. पाठः. ३. 'भनु' मुद्रितकोशपाठः.

(प्रकाशिका)

इतः परं मरणव्यवसायगर्भा उक्तयः —

तदिति । तत् तस्माद्, यस्मादर्धवैशसं दुस्सहतरम् । अनन्तरमवसरप्राप्तम् । विधुरामित्यनुकम्प्यत्वे हेतुः । अतिसर्गो दानम् । अनु पश्चात् । प्रियवियोगविधुराणां सुहृद्वधूनां तत्सकाशप्रापणं हि सुहृदामुचितमिति भावः ॥ ३२ ॥

(विवरणम्)

अथानुमरणमेव निश्चित्य तदुपकरणसम्पादनाद्यर्थं माधवं प्रत्याह तदित्यादिभिः सप्तभिः श्लोकैः । तत्र सङ्क्षेपोक्तिरनेन श्लोकेन क्रियते —

तदिति । तद् भवता अनन्तरं बन्धुजनप्रयोजनमिदं क्रियताम् । तद् यस्मादर्धवैशसमसह्यतरं तस्मादित्यर्थः । भवता प्रियतमसहायत्वान्मम बन्धुभूतेन त्वया । अनन्तरमविलम्बितमेव । अनेनावसरप्राप्तिरुक्ता । बन्धुजनप्रयोजनं बन्धुभूतजनस्य मम प्रयोजनभूतम् इदं वक्ष्यमाणं क्रियतामनुष्ठीयताम् । इदंशब्दनिर्दिष्टमेवार्थं सङ्क्षिप्य दर्शयति — त्वं विधुरां मां ज्वलनातिसर्जनात् पत्युरन्तिकमनु प्रापयेति । विधुरां भर्तृवियोगदुःखिताम् । इदमनुकम्प्यत्वे हेतुः । ज्वलनातिसर्जनाद् ज्वलनेऽग्नौ यदतिसर्जनं दानं तस्माद्धेतोः । 'विश्राणनं वितरणं दानं स्यादतिसर्जनमि'ति भोजः । पत्युः भर्तुः अन्तिकं समीपम् अनु पश्चात् प्रापय नय । विधिवैपरीत्यात् सहगमनाभावेऽप्यग्निप्रवेशोपकरणं सम्पाद्य पश्चादपि भर्तुरन्तिकं मां प्रापय । प्रियवियोगविधुराणां सुहृद्वधूनां प्रियतमसकाशप्रापणमेव हि सुहृदामुचितमिति भावः ॥ ३२ ॥

शशिना सह याति कौमुदी
सह मेघेन तडित् प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥

(प्रकाशिका)

एतदेव ममाप्युचितमित्याह—

**शशिनेति। विचेतनैः करणशून्यैः। शशिप्रभृत्यचेतनवृत्तान्तेनाप्येतत् प्रत्येतुं शक्यमित्यर्थः। दक्षिणावर्तस्तु—पृथग्जनैरिति पाठमादृतवान्॥ ३३॥**

(विवरणम्)

इत्थं सुहृदुचितमर्थं प्रतिपाद्यात्मनोऽपि भर्तृसमीपप्राप्तिरेवोचितेत्येतद् दर्शयति—

शशिनेति। प्रमदाः पतिवर्त्मगाः इति विचेतनैरपि प्रतिपन्नं हि। प्रमदाः स्त्रियः। पतिवर्त्मगाः पत्युर्भर्तुर्वर्त्म मार्गं गच्छन्तीति तथा। इतिशब्दः प्रकारवाची। अयं प्रकारो विचेतनैः विगता चेतना ज्ञानं येभ्यस्तैरपि। 'प्रतिपज्ज्ञप्तिचेतना' इत्यमरः। सचेतनेषु का कथा इत्यपिशब्दार्थः। प्रतिपन्नमङ्गीकृतम्। विचेतनानामपि भर्तृमार्गप्राप्तिमेव दर्शयति—शशिनेत्यादिना। कौमुदी शशिना सह याति। कौमुदी चन्द्रिका। 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः। शशिना चन्द्रेण सह याति गच्छति। नहि चन्द्रे गते चन्द्रिका क्षणमात्रमपि[1] तत्र तिष्ठति, किन्तु चन्द्रगतं लोकान्तरमेव गच्छतीत्यर्थः। अनेन गते सत्यनुगमनमुक्तम्। मृते सत्यनुमरणं चाह—तडिन्मेघेन सह प्रलीयते इति। तडिद् विद्युत्। 'तडित् सौदामनी विद्युद्'इत्यमरः। मेघेन सहैव प्रलीयते प्रकर्षेण लीना भवति। मेघे विनष्टे तडिदपि विनश्यत्येवेत्यर्थः। इत्थमचेतनैश्चन्द्रिकादिभिरपि प्रतिपन्नं भर्तृलोकगमनं कथं सचेतनाहं न करिष्यामीत्यर्थः॥ ३३॥

**अमुनैव कषायितस्तनी**
**सुभगेन प्रियगात्रभस्मना।**
**नवपल्लवसंस्तरे यथा**
**रचयिष्यामि तनुं विभावसौ॥ ३४॥**

१. 'पि ति' क. पाठः.

(प्रकाशिका)

इदानीमेव चेदपरो लाभ इत्याह

**अमुनेति। एवशब्दो मण्डनान्तरापेक्षाव्यवच्छेदकः। कषायितो भावितः। 'कषायस्तुवर' इत्युपक्रम्य 'भावनायां च' इति केशवः। रचयिष्यामि निधास्यामि। अत्र नवपल्लवसंस्तरोपमानेन विभावसोः परमप्रीतिविषयत्वं ध्वन्यते ॥ ३४ ॥**

(विवरणम्)

तस्मादवश्यकर्तव्यः शरीरत्यागो यदीदानीमेव क्रियते, तर्हि न मे भर्तृलोकप्राप्तिरेव लाभः, अपितु लाभान्तरमप्यस्तीत्याह—

अमुनेति। अहममुना प्रियगात्रभस्मनैव कषायितस्तनी विभावसौ तनुं रचयिष्यामि। अमुना पुरोवर्तिना। वायुभिर्नीयमानतया दृश्यमानेनेत्यर्थः। अनेनास्य कालान्तरानवस्थानमिदानीमादानसौकर्यं च द्योत्यते। प्रियस्य गात्रं प्रियगात्रं, तस्य भस्म प्रियगात्रभस्म, तेन। एवशब्दो मण्डनान्तरान्वेषणं परिहरति। कषायितस्तनी। कषायितौ भावितौ, अनुलिप्तावित्यर्थः, स्तनौ यया तथाभूता सती। 'निर्यासे भावनायां च कषायस्तुवरे रसे' इति भोजः[1]। अत्र प्रियगात्रभस्मनैवानुलिप्तस्तनीत्यनेन प्रियालिङ्गनप्रतिविधिर्दर्शितः। प्रियमालिङ्ग्य हि चितायां शयितव्यम्। विभावसौ वह्नौ। 'सूर्यवह्नी विभावसू' इत्यमरः। तनुं शरीरं रचयिष्यामि निधास्यामीत्यर्थः। अत्रोपमामाह—नवपल्लवसंस्तरे यथा इति। नवपल्लवसंस्तरे नवैः पल्लवैः कृते संस्तरे शय्यायाम्। यथाशब्दोऽयमुपमाद्योतकः। अग्निपल्लवयोरारुण्यमुपमाहेतुः। अनेनोपमानेनात्रापि प्राचीनसम्भोगसौख्यं द्योत्यते। विभावसोः परमप्रीतिविषयत्वं च ध्वन्यते। अत्र पल्लवानां नवत्वविशेषणेनात्यन्तसौकुमार्यमुक्तम्। प्रियगात्रभस्मनो मण्डनान्तरेभ्यो व्यतिरेकं दर्शयति—सुभगेनेति। सुभगत्वं मनोहरत्वं, तच्च प्रियगात्रकार्यत्वात् ॥ ३४ ॥

१. 'नि' घ. ङ. पाठः.

भोजोऽन्यो वा भवेत्।

कुसुमास्तरणे सहायतां
बहुशः सौम्य! गतस्त्वमावयोः ।
कुरु सम्प्रति तावदाशु मे
विनिपाता[1]ञ्जलियाचितां[2] चिताम् ॥ ३८ ॥

(प्रकाशिका)

कथमेतन्नृशंसं कुर्यामित्याह —

**कुसुमेति** । तावच्छब्दः क्रमद्योतकः । क्रमश्चावसरः । इदमिदानीं प्राप्तावसरमित्यर्थः । विनिपाताञ्जलिरन्त्याञ्जलिरित्यर्थः । तेन याचनस्याप्रत्याख्येयत्वमुक्तम् । सम्पदि[3] सहायेन विपद्यपि तथा भाव्यमित्यर्थः ॥ ३८ ॥

( विवरणम् )

नन्वस्तु मृतभर्तृकाणां वधूनां भर्तृसमीपप्रस्थानोपकरणविधानमेव सर्वत्र बन्धुजनप्रयोजनं, तथाप्यहं कथमेतादृशं नृशंसं कर्म कुर्यामित्यत्राह —

कुसुमेति । सौम्य! त्वं कुसुमास्तरणे आवयोः बहुशः सहायतां गतः । हे सौम्य! प्रियदर्शन! । 'रुचिरः सुभगः सौम्य' इति भोजः । कुसुममये आस्तरणे शय्यायाम् आवयोः भर्तुर्मम च बहुशोऽनेकशः सहायतां सहायत्वं गतः प्राप्तोऽसि । सुरतोपकरणभूतानामुद्दीपनानां विधानादिति शेषः । अनेन वाक्येन वसन्तस्य सम्पदि सहायत्वमुक्तम् । अत एव विपद्यपि सहायेन भवितव्यमित्याह — त्वं सम्प्रति तावन्मे विनिपाताञ्जलियाचितां चितामाशु कुरु । सम्प्रति इदानीम्, आपत्समयेऽपि । तावच्छब्दः क्रमार्थः । क्रमश्चात्रावसरप्राप्तिः । अवसरप्राप्तमिदं कुर्या इत्यर्थः । मे मम । विनिपाताञ्जलियाचिताम् । विनिपातो मरणं तत्समये कृतोऽञ्जलिर्विनिपाताञ्जलिः । अन्त्या-

१. 'प्रणिपा' मुद्रितकोशपाठः. २. 'तर्थिताम्' मुद्रितकोशपाठः. ३. 'द्यपि स' क. पाठः.

ञ्जलिरित्यर्थः । तेन याचिताम् । अनेन याचनस्याप्रत्याख्येयत्वमुक्तम् । चितां, 'देहदाहाय काष्ठानां सञ्चयः साग्निकाश्चिता' । तां कुरु विधेहि । यस्त्वमावयोः सुरतावसरे तदुपकरणविधानेन सहायतामुपगतोऽभूः, तेन त्वया मरणावसरे तदुपकरणविधानेनापि सहायतया भवितव्यमेव । यतः सम्पन्मात्रसहायत्वं खलस्वभाव इति भावः ॥ ३५ ॥

**तदनु ज्वलनं मदर्पितं**
**त्वरयेर्दक्षिणवातवीजनैः ।**
**विदितं खलु ते यथा स्मरः**
**क्षणमप्युत्सहते न मद्[1] विना ॥ ३६ ॥**

**(प्रकाशिका)**

अन्यदपीत्याह —

**तदन्विति** । त्वरणे हेतुमाह — **विदितमिति** । **खलुरनुनये** । **उत्सहते व्याप्रियते**, शयनासनादिष्विति शेषः । **मदिति पञ्चमी** ॥ ३६ ॥

**(विवरणम्)**

अन्यच्च किञ्चित् कर्तव्यमस्तीत्याह —

तदन्विति । तदनु त्वं मदर्पितं ज्वलनं दक्षिणवातवीजनैः ज्वलयेः । तदनु चिताविधानानन्तरम् । मदर्पितं मय्यर्पितं न्यस्तम् । अर्पणेऽपि स्वस्यैव कर्तृत्वम् । 'स्वयमेवार्पयेदग्निमि'ति वचनात् । ज्वलनमग्निम् । दक्षिणवातवीजनैः दाक्षिणस्य मलयाचलोद्भूतस्य वातस्यानिलस्य वीजनैः सञ्चारणैः । ज्वलयेः ज्वलितं विधेहि । त्वरयेरिति पाठे ज्वलनं कृतत्वरं विधेहीत्यर्थः । नन्वग्निः शुष्केन्धनसंयोगे सति क्रमेण स्वयमेव ज्वलिष्यति । किमिति त्वरयेत्यत्राह— स्मरः मां विना यथा क्षणमपि नोत्सहते, तथा ते विदितं खल्विति । स्मरो

1. 'मां वि' मुद्रितकोशपाठः.

मदनः मां विना मया विना । 'पृथग्विनानानाभि—'(२. ३. ३२)इति योगविभागाद् द्वितीया । मद्विनेत्येव वा पाठः । 'पृथग्विने'त्यादिना पञ्चमी । मया विना यथा क्षणमात्रमपि नोत्सहते शयनासनादिषु न व्याप्रियते, तथा ते त्वया । विदितमिति वर्तमाने क्तः । 'क्तस्य च वर्तमाने'(२. ३. ६७) इति षष्ठी । खलुशब्दोऽनुनये । 'निषेधवाक्यालङ्कारजिज्ञासानुनये खल्वि'त्यमरः ॥ ३६ ॥

**इति चापि विधाय दीयतां**
**सलिलस्याञ्जलिरेक एव नौ ।**
**अविभज्य परत्र य[1]न्मया**
**सहितः पास्यति ते स बान्धवः ॥ ३७ ॥**

(प्रकाशिका)

यच्च तेऽवश्यकर्तव्यं जलाञ्जलिदानं, तदप्येतत् कृ[2]त्वैव कर्तव्यमित्याह —

इतीति । चा[3]पिः समुच्चये । इति चापि विधाय एवं च कृत्वा । अञ्जलिदाने विशेषमाह — एक एवेति । नावावयोः । अत्र हेतुमाह — अविभज्येति । अत्रानुमरणात् सहभावः । एकस्यैव दानादविभाग इत्यु[5]भयमप्यभिमतं कामस्य यस्मादित्यर्थः ॥ ३७ ॥

(विवरणम्)

तवावश्यकर्तव्यं जलाञ्जलिदानमपि मदुक्तमेतत् सर्वं कृत्वैव कर्तव्यमित्याह —

इति चेति । इति चापि विधाय सलिलस्य अञ्जलिः नौ एक एव दीयताम् । इतिशब्दः पूर्वोक्तप्रकारवाची । चापिशब्दाभ्यां पूर्वोक्तसकलकर्तव्यसमुच्चयः क्रियते । पूर्वोक्तक्रमेण सर्वमपि विधायेत्यर्थः । सलिलस्या-

१. 'तं मया' मुद्रितकोशपाठः. २. 'त्वा क' ख. पाठः. ३. 'अपिः' ख. पाठः. ४. 'तव कृ' ख. पाठः. ५. 'मप्युभ' क. ग. पाठः.

ञ्जलिः प्रेततर्पणजलाञ्जलिः । नौ आवाभ्याम् । अस्मिञ्जलाञ्जलिदाने विशेषमाह—एक एवेति। नान्येषामिव पृथग् दातव्यमित्यर्थः। दीयतामिति कर्मणि लोट्। आवयोरेकजलाञ्जलिदाने हेतुमाह—ते स बान्धवः परत्र मया सहितः अविभज्य पास्यति यत् । ते तव सः परलोकप्राप्तेरपरोक्षः बान्धवो बन्धुः। स्वार्थेऽण्प्रत्ययः । परत्र परलोके मया सहितः। अत्रानुमरणं सहभावे हेतुः । अविभज्य विभागमकृत्वा । जलाञ्जलेरेकत्वादविभागः । पास्यति पानं करिष्यति । यस्मात् तव बन्धोरविभज्यमानं सहैव पानं चाभिमतं, यस्माच्च तत्रानुमरणमेकजलाञ्जलिदानमेव चोपायः, तस्मादनुमरणोपायकरणमेकजलाञ्जलिदानं चावश्यं कर्तव्यमेवेति भावः ॥ ३७ ॥

**परलोकविधौ च माधव!**
**स्मरमुद्दिश्य विलोलपल्लवाः ।**
**निवपेः सहकारमञ्जरीः**
**प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥**

(प्रकाशिका)

अन्यच्चेत्याह—

**परलोकेति** । परलोकविधौ प्रेतकृत्य इत्यर्थः ॥ ३८ ॥

(विवरणम्)

प्रेतकार्ये विशेषान्तरमप्याह—

**परलोकेति** । माधव! परलोकविधौ स्मरमुद्दिश्य सहकारमञ्जरीः निवपेः च । माधव! हे वसन्त! । परलोकविधौ परलोके विधिः परलोकविधिः तस्मिन् । प्रेतकृत्य इत्यर्थः । स्मरमुद्दिश्य कामदेवोद्देशेन । सहकारमञ्जरीः सहकारस्य चूतस्य मञ्जरीः स्तबकान् । निवपेः । 'पितृदानं निवापः स्यादि'त्यमरः । निवापाञ्जलौ कुसुमस्थाने दद्या इत्यर्थः । न केवलं कुसुममात्रम्,

अपितु पल्लवांश्चेत्याह — विलोलपल्लवा इति । विलोलाश्चञ्चलाः पल्लवा यासु ताः । प्रेतकार्ये सहकारप्राधान्ये हेतुमाह — ते सखा प्रियचूतप्रसवो हीति । ते सखा कामदेवः । प्रिया इष्टाः चूतस्य सहकारस्य प्रसवाः पुष्पाणि यस्य स तथा । हिशब्दो यस्मादर्थे । पूर्वं यत् प्रियं, तदेव हि परत्र देयमिति भावः ॥ ३८ ॥

**इति देहविमुक्तये स्थिरां**
**रतिमाकाशभवा सरस्वती ।**
**शफरीं ह्रदशोषविह्वलां**
**प्रथमा वृष्टिरिवान्वकम्पत ॥ ३९ ॥**

(प्रकाशिका)

अथ मरणव्यवसायनिवृत्तेर्वक्ष्यमाणाया हेतुमवतारयति —

इतीति । स्थिरां व्यवसिताम् । प्रथमेति, द्वितीयादीनां प्राणप्रदत्वसाम्याभावात् । अन्वकम्पत अकृपायत ॥ ३९ ॥

(विवरणम्)

इत्थं विलप्य स्थिरमरणव्यवसायायां मदनप्रियतमायां तद्व्यवसायनिराकरणकारणभूतं किमप्यद्भुतमुद्भूतमित्याह —

इतीति । इति देहविमुक्तये स्थिरां रतिम् आकाशभवा सरस्वती अन्वकम्पत । इति उक्तेन प्रकारेण । देहविमुक्तये देहस्य शरीरस्य विमुक्तये परित्यागाय । स्थिरां कृतनिश्चयाम् । रतिं कामवधूम् । आकाशभवा आकाशाद्भव उद्भवो यस्यास्तादृशी । सरस्वती वाणी । 'गीर्वाग्वाणी सरस्वती'त्यमरः । अन्वकम्पत अनुकम्पां कृतवती । अनुगृहीतवतीत्यर्थः । अत्राकाशभवेत्यनेन दिव्यत्वमुक्तम् । तस्य च रतेः सत्यत्वप्रतीतिः फलम् । वृष्टिसाम्यं

१. 'तां' मुद्रितकोशपाठः. २. 'क्रयां प्र' मुद्रितकोशपाठः. ३. 'त्मप्र' क. ख. ग. पाठः

चानेन प्रतिपादितं, वृष्टेरप्याकाशभवत्वात् । अत्रोपमां दर्शयति—ह्रदशोषविह्वलां शफरीं प्रथमा वृष्टिरिवेति । ह्रदशोषविह्वलां ह्रदस्य जलाशयस्य शोषेण ग्रीष्मकृतेन शोषणेन विह्वलां परवशाम् । शफरीं मत्स्यविशेषस्त्रियम् । प्रथमा ग्रीष्मावसानसमुद्भवा । द्वितीयादीनां प्राणप्रदत्वसाम्याभावात् प्रथमशब्दोपादानम् । उपमेये तु माधववचनापेक्षया प्रथमपदम् । यथा प्रथमा वृष्टिराकाशदेशादतर्कितापाता सती ह्रदविनाशविधुरां शफरीमनुगृह्णाति, तथा भर्तृविनाशविधुरां रतिं सरस्वती चानुगृहीतवतीत्यर्थः ॥ ३९ ॥

**कुसुमायुधपत्नि! दुर्लभ-**
**स्तव भर्ता न चिराद् भविष्यति ।**
**शृणु येन स कर्मणा गतः**
**शलभत्वं हरलोचनार्चिषि ॥ ४० ॥**

(प्रकाशिका)

सरस्वतीप्रकारमाह—

**कुसुमेति** । दुर्लभो न भविष्यतीत्यन्वयः । कदा न भविष्यतीत्याह—चिरादिति । दवीयसि काल इत्यर्थः । नचिरादित्येकपदत्वे विवक्षिते विरुद्धार्थप्रतीतिः । कथमेतत् प्रत्येमीत्याह—शृण्विति ॥ ४० ॥

(विवरणम्)

तस्याः सरस्वत्याः प्रकारमेवाह—

कुसुमायुधेति । कुसुमायुधपत्नि! तव भर्ता चिराद् दुर्लभः न भविष्यति । कुसुमायुधपत्नि! कुसुममायुधं यस्य तस्य पत्नी कुसुमायुधपत्नी, तस्याः सम्बुद्धिः कुसुमायुधपत्नीति । तव अनुमरणोद्यतायास्ते । भर्ता कान्तः । चिरात् केषुचित् कालेष्वतीतेष्वित्यर्थः । दुर्लभः दुःखेन लभ्यो न भविष्यति । सुलभ एव भविष्यतीत्यर्थः । ननु भविष्यतीत्युक्तिमात्रेण को निश्चय इत्याशङ्क्य नाशहेतुमुत्पत्तिहेतुं च प्रतिपादयितुकामो नाशहेतुमादाववतारयति—शृणिव-

त्यादिना । सः येन कर्मणा हरलोचनार्चिषि शलभत्वं गतः तत् शृणु । स कामः । येन कर्मणा यादृशेन कर्मणा । हरलोचनार्चिषि । हरस्य लोचनं हरलोचनं, हरलोचने विद्यमानमर्चिः हरलोचनार्चिः । अर्चिस्तेजः । हरलोचनाग्नावित्यर्थः । शलभत्वं पतङ्गभावम् । गतः प्राप्तः । तत् कर्म शृणु । यस्य कर्मणः परिपाकवशान्मदनो भस्मसाद्भूतः. तत् कर्माकर्णयेत्यर्थः ॥ ४० ॥

**अभिलाषमुदीरितेन्द्रियः**
**स्वसुतायामकरोत् प्रजापतिः ।**
**अथ तेन निगृह्य विक्रिया-**
**मभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥**

(प्रकाशिका)

तत् कर्माह —

**अभिलाषमिति** । उदीरितेति णिचा कामस्य प्रयोजकत्वमुक्तम् । तस्य कर्मणः कथमीदृशफलप्रसावकत्वं जातमित्याह — अथेति । विक्रियां निगृह्येति, तदनिग्रहे शापानुपपत्तेः । एतदिति हरलोचनार्चिषि शलभत्वम् ॥ ४१ ॥

(विवरणम्)

तदेव कर्माह —

अभिलाषमिति । प्रजापतिः स्वसुतायाम् अभिलाषम् अकरोत् । प्रजापतिर्ब्रह्मा । स्वसुतायां स्वस्य सुतायां सरस्वत्याम् । अभिलाषमुपभोगेच्छाम् अकरोत् कृतवान् । ब्रह्मा सृष्टिसमये सरस्वतीं निर्माय तद्रूपलावण्यदर्शनमोहितस्तदुपभोगाकाङ्क्षां व्यधादित्यर्थः । नन्वत्र कामस्य कोऽपराध इत्यत्राह — उदीरितेन्द्रिय इति । उदीरितानि सङ्क्षोभितानीन्द्रियाणि यस्य

१. 'णः फलप्र' पा. पाठः.

स तथा । अत्रोदीरितेति णिचा कामस्य प्रयोजकत्वमव्यभिचारादर्थत एवायातीति शब्दतः प्रयोगाभावः । नहि कामेन विना कश्चिदपीन्द्रियसङ्क्षोभकृद् भवति । अयमेव कामस्यापराध इति भावः । ननु तादृशं कर्म कथमीदृशं फलमजनयदित्यत आह— अथ तेन विक्रियां निगृह्य अभिशप्त एतत् फलमन्वभूदिति । अथ इन्द्रियक्षोभानन्तरं तेन प्रजापतिना विक्रियाम् इन्द्रियविकारं निगृह्य परिहृत्य । इन्द्रियक्षोभसमये शापानुपपत्तेस्तन्निग्रहकथनम् । अभिशप्तः हरकोपाग्निस्त्वां दहत्विति शप्त इत्यर्थः । तथाभूतः सन् एतद् हरकोपानलदाहरूपमिदं फलम् अन्वभूदनुभूतवान् ॥ ४१ ॥

**परिणेष्यति पार्वतीं यदा**
**तपसा तत्प्रवणीकृतो हरः ।**
**उपलब्धसुखस्तदा स्मरं**
**वपुषा स्वेन समग्रयिष्यति ॥ ४२ ॥**

(प्रकाशिका)

अस्तु तावद्. एतत्प्रत्यापत्तेस्तु को हेतुरित्याह—

परिणेष्यतीति । तपसेति प्रवणीकरणस्य निरुपायत्वशङ्कां विधुनोति । उपलब्धसुखः ज्ञातानुकूल्यः । अनुकूल एवेदानीमस्माकमिति जानन्नित्यर्थः । इति चाहेत्युत्तरश्लोकार्थे वाक्यपरिसमाप्तिः ॥ ४२ ॥

( विवरणम् )

मदनस्य प्रत्यापत्तावपि हेतुमाह—

परिणेष्यतीति । हरः पार्वतीं तपसा तत्प्रवणीकृतः यदा परिणेष्यति तदा उपलब्धसुखः स्मरं स्वेन वपुषा समग्रयिष्यति । हरो महादेवः । तपसा पार्वतीकृतेन बहुप्रकारेण तपसा कर्तृभूतेन । तत्प्रवणीकृतः तस्याः

१ 'नियोजयि' मुद्रितकोशपाठः. २. 'सं' क. ग. पाठः. ३. 'त्य' क. ग. पाठः.

पार्वत्याः प्रवणीकृतः प्रह्वीकृतः। पार्वतीपरत्वं प्रापित इत्यर्थः। 'प्रवणस्तत्परे नम्र' इति शाश्वतः। नहि तपसा किञ्चिदप्यसाध्यम्। अनेनैवम्भूतं हरं प्रह्वीकर्तुं साधनसम्पत्तिरुक्ता। पार्वतीतपोवर्णनरूपस्योत्तरसर्गार्थस्य बिन्दूपक्षेपोऽपि कृतः। यदा परिणेष्यति उद्वोढां करिष्यति। 'तथा परिणयोद्वाहोपयमाः पाणिपीडनमि'त्यमरः। तदा उपलब्धसुखः उपलब्धं ज्ञातं सुखमानुकूल्यं येन तथाभूतः सन्। अस्माकमनुगुण एवायं मदन इत्यवगम्येत्यर्थः। स्मरं कामदेवम्। स्वेन वपुषा त्वया पूर्वमनुभूतेन शरीरेणैवेत्यर्थः। यथा दर्शनानन्तरं भवती भर्तारं प्रत्यभिज्ञास्यति, तथैवेत्यभिप्रायः। समग्रयिष्यति सम्पूर्णं करिष्यति। यदा परमेश्वरः पार्वतीकृतैस्तपोभिरुद्बुद्धाभिलापस्तां परिणेष्यति, तदा कामोऽयमस्माकमनुकूल एवेत्यवधार्य जगदीश्वरः प्राचीनेनैव शरीरेण मदनं योजयिष्यतीत्यर्थः। 'इति चाहे'त्युत्तरश्लोकस्य पूर्वार्ध एवास्य वाक्यस्य परिसमाप्तिः ॥ ४२ ॥

इति चाह स धर्मचारिणि!
स्मरशापान्तभवाम् सरस्वतीम्।
अशनेरमृतस्य चोभयो-
र्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥

(प्रकाशिका)

इतीति। इति चाह इत्याह, न केवलं शप्तवान्। स इति प्रजापतिः। धर्मचारिणि! पतिव्रते!। त्वत्प्रभावे किं न संभाव्यमिति भावः। स्मरशापान्तभवां स्मरशापप्रदानावसानसंभूताम्। अनेन वशिनामनुग्रहस्वभावत्वादप्रायत्निकत्वमनुग्रहवाचोऽस्यां द्योत्यते। एवञ्च विशेषणदानस्यौ-

१. 'याचितः स्म' मुद्रितकोशपाठः. २. 'वधिदां स' मुद्रितकोशपाठः. ३. 'स्य' ख. पाठः.
४ 'णं दा' घ. पाठः. ५. 'स्यौ' घ. पाठः.

पेक्षितत्वादव्यभिचारिणोऽपि कर्मण[1] उपादानम् । प्रजापतिः शप्त्वा पश्चात् परिणेष्यतीत्यादिवाक्यरूपां सरस्वतीं चाहेत्यर्थः । तथाकुपितस्य प्रसाद-मर्थान्तरन्यासेनोपपादयति — अशनेरिति । अशन्यमृतशब्दौ कोपप्रसाद-योरपि लक्षकौ । वशिनां कोपप्रभवत्वं चोक्तं शाकुन्तले —

"शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद् वमन्ति ॥"
(अङ्क. २. श्लो. ७)

इति । अत्राम्बुधरवृत्तान्तस्य वशिवृत्तान्तदृष्टान्तत्वेनोपादानात् तत्समक-क्ष्यतेति दीपकमिदम् । तेन चार्थान्तरन्यासस्य[2] सङ्करः । दक्षिणावर्त-स्तु — स्मरशापान्तभवा[3] सरस्वतीति पाठमादृत्य व्याख्यातवान् । तन्नो[4]-स्माकं हृदयमावर्जयति ॥ ४३ ॥

(विवरणम्)

वाक्यपरिसमाप्तिमेव दर्शयति—

इति चेति । धर्मचारिणि! सः इति सरस्वतीम् आह च । धर्मचा-रिणि! हे पतिव्रते!। त्वत्पातिव्रत्यमाहात्म्यात् सर्वमपि सम्भाव्यमेवेति भावः। सः प्रजापतिः । इति परिणेष्यतीत्यादिपूर्वोक्तप्रकाराम् । सरस्वतीं वाणीम् आह उक्तवान् । अस्त्यादिपदवत् तिङ्प्रतिरूपकमव्ययमिदम् । चशब्दः पूर्वोक्तशापरूपसरस्वतीसमुच्चयार्थः । "उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत् सा प्रकृतिर्जलस्ये"ति न्यायेन वशिनामनुग्रहस्वभावत्वमेव दर्शयति — स्मरशापान्तभवामिति । स्मरविषयस्य शापस्यान्ते भवतीति स्मरशापान्तभवा, तादृशीं सरस्वतीं, न तु शापमोक्षं देहीति स्मरप्रार्थनानन्तरभवाम् । अनेन वशिनां प्रसादस्य स्वाभाविकत्वं दर्शितम् । शापप्रदानानन्तरं कृपालोः परमेष्ठिनो

१. 'र्मि' ख. पाठः. २. 'भा' ख. पाठः ३. 'पदा स' ख. ग. घ. ङ. पाठः. ४. 'न्न चास्मा' ङ. पाठः.

मुखात् परिणेष्यतीत्यादिरूपा सरस्वती च स्वयमेव निर्गतेत्यर्थः । नन्वेवं कुपितस्य प्रजापतेस्तदनन्तरमेव तादृशप्रसादोदयः कथमुपपद्यत इतीमामाशङ्कामर्थान्तरन्यासेन परिहरति — अशनेः अमृतस्य चोभयोः वशिनः अम्बुधराश्च योनयः इति । अशनेः वैद्युताग्नेः अमृतस्य जलस्य च उभयोरपि वशिनो जितेन्द्रियाः अम्बुधरा मेघाश्च योनयः उद्भवस्थानानि । अत्र वशिपक्षे तावदशन्यमृतशब्दौ दुःखानन्दकारणत्वात् कोपप्रसादयोर्लक्षकौ । वशिनां कोपप्रभवत्वं चोक्तं शाकुन्तले—

"शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोभिभवाद् वमन्ति ॥"

इति । अत्र वशिवृत्तान्तदृष्टान्तत्वेनाप्रकृतोऽम्बुधरवृत्तान्त उपात्त इति दीपकमलङ्कारः ।

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥"

इति तस्य लक्षणम् । तेन चार्थान्तरन्यासस्य सङ्करः ॥ ४३ ॥

**तदिदं परिरक्ष शोभने !**
**भवितव्यप्रियसङ्गमं वपुः ।**
**अपि वीतजला तपात्यये**
**पुनरोघेन हि युज्यते नदी ॥ ४४ ॥**

(प्रकाशिका)

अथ कर्तव्यमवतारयति—

**तदिति** । तत् तस्माद्, यस्माद् भावी तस्य देहलाभः । इदमिति समग्रगुणास्पदत्वं द्योतयति । शोभन इत्यामन्त्रणं 'मदनेन विनाकृता' (श्लो.

१. 'रविपीत' मुद्रितकोशपाठः.

२१)इत्युक्तं वचनीयमप्येवंशीलवत्यां त्वयि निरवकाशमिति द्योतयति। भवितव्यप्रियसङ्गमम् उक्तादेव हेतोरवश्यंभाविप्रियसङ्गमम्। अवश्यंभाविनं प्रियसङ्गमोत्सवं मा हासीरिति भावः। प्रियसङ्गमस्य भावित्वमुपपादयति— अपीति। वीतजलापीत्यन्वयः। तपात्यय इत्यनेन प्रकृतेऽपि कालस्य घटयितृत्वं द्योत्यते। एतच्च न प्रतिवस्तु, प्रथमं बिम्बभूतस्य वस्तुनोऽनुपन्यासात्। नापि सादृश्येनाप्रस्तुतप्रशंसा, हिशब्देनोपपादकस्योक्तत्वात्। तस्मात् कैश्चिदभ्युपगतः सादृश्येनार्थान्तरन्यासोऽयम् ॥ ४४ ॥

(विवरणम्)

इत्थं मदनस्य प्रत्यापत्तिमुपपाद्य कर्तव्यमेवाह—

तदिति। शोभने! तत् त्वम् इदं वपुः परिरक्ष। शोभने! हे समग्रगुणसम्पन्ने!। अनेनामन्त्रणेन 'मदनेन विनाकृता रतिः' इति श्लोकेन त्वया पूर्वोक्तं वचनीयमप्येतादृशगुणविशिष्टायां त्वयि निरवकाशमेवेति द्योत्यते। तत्, यस्मात् त्वत्प्रियतमस्य देहलाभोऽवश्यम्भावी, तस्मादित्यर्थः। इदं समग्रगुणास्पदत्वेन दृश्यमानम्। वपुः शरीरम्। परिरक्ष परितः समन्ताद्रक्ष। शीतोपचारादिभिः सुरक्षितमेव कुरु। सहसा देहत्यागेन प्रियसङ्गमोत्सवं मा परित्यजेत्यर्थः। परिरक्षणीयत्वे हेतुमाह— भवितव्यप्रियसङ्गममिति। भवितव्यः अवश्यम्भावी प्रियसङ्गमः प्रियेण भर्त्रा सङ्गमो यस्य तादृशम्। प्रियसङ्गमस्यावश्यम्भावित्वमेवोपपादयति — वीतजलापि नदी तपात्यये पुनः ओघेन युज्यते हि। वीतजला वीतानि विशेषेणतानि गतानि जलानि यस्याः सा तथाभूतापि नदी। तपात्यये ग्रीष्मकालावसाने। 'उष्ण ऊष्मागमस्तप' इत्यमरः। अनेन प्रियवियोगस्येव प्रियसङ्गमस्यापि कालस्यैव हेतुत्वं द्योत्यते। पुनः पुनरपीत्यर्थः। ओघेन प्रवाहेण, न तु जलमात्रेणेत्यर्थः। अनेन पूर्वकृतानामनुभवानामपि पूर्ववदेव प्रत्यापत्तिः सूचिता।

१. 'त्वां च त्व' क. ग. पाठः.

युज्यते संयुक्ता भवति । हिशब्दः उपपादकत्वद्योतकः प्रसिद्धिवाची । सादृश्यनिमित्तोऽर्थान्तरन्यासोऽत्रालङ्कारः । स तु कैश्चिदेवाचार्यैरभ्युपगतः, न तु सर्वैः । ननु प्रतिवस्तूपमास्तु । मैवम् । प्रथमं बिम्बभूतस्य वस्त्वन्तरस्यानुपादानात् । नापि सादृश्येनाप्रस्तुतप्रशंसा, उपपादकस्य हिशब्दस्योपादानात् । तस्मात् सादृश्येनार्थान्तरन्यास एवायम् ॥ ४४ ॥

**इत्थं रतेः किमपि भूतमदृश्यरूपं**
**मन्दीचकार मरणव्यवसायबुद्धिम् ।**
**तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-**
**माश्वासयत् समभिवृद्धरसैर्वचोभिः ॥ ४५ ॥**

(प्रकाशिका)

उपसंहरति —

इत्थमिति । किमपि भूतमदृश्यरूपमित्यनेनाकाशभाषिते कः प्रत्यय इत्यसंभावनां निराकरोति । अत एव वक्ष्यति — तत्प्रत्ययाच्चेति । मन्दीचकार, न तु निश्शेषमपानुदत् । अपनुन्ना तु सा बुद्धिरन्यथेत्याह — तत्प्रत्ययादिति । चस्त्वर्थे । समभिवृद्धरसैः सौहार्दस्यन्दिभिः ॥४५॥

( विवरणम् )

आकाशवाणीमुपसंहरति —

इत्थमिति । अदृश्यरूपं किमपि भूतं रतेः मरणव्यवसायबुद्धिम् इत्थं मन्दीचकार । अदृश्यरूपमदृश्यं द्रष्टुमशक्यं रूपं शरीरं यस्य तत्तथा । किमपि अनिर्देश्यम् । अनेनाकाशभाषितस्यापि विश्वसनीयता प्रतिपादिता । अत एव तत्प्रत्ययाच्चेत्युत्तरार्धे वक्ष्यति । भूतं दैवविशेषः । इदमपि विश्वसनीयत्वे हेतुः । रतेः कामदेवभार्यायाः । मरणव्यवसायबुद्धिं मरणे देह-

१. 'द्र' घ. ङ. पाठः. २. 'मुच्चरितार्थपदैर्व' मुद्रितकोशपाठः. ३. 'अनु' क. ग. पाठः. ४. 'मभा' घ. ङ. पाठः.

त्यागे व्यवसायो निश्चयो यस्यास्तादृशीं बुद्धिम्। मरणविषयां निश्चयबुद्धिं वा। मन्दीचकार अल्पीचकार, न तु निश्शेषमपाचकार। निश्शेषापहरणं तु माधववचनादासीदित्याह — कुसुमायुधबन्धुश्च तत्प्रत्ययाद् वचोभिरेनामाश्वासयदिति। कुसुमायुधबन्धुः कुसुमायुधस्य कामदेवस्य बन्धुभूतो वसन्तः। चकारस्तुशब्दार्थे। कुसुमायुधबन्धुस्त्वित्यर्थः। तत्प्रत्ययात् तस्मिन् भूतवचसि प्रत्ययाद् विश्वासात्। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वि'त्यमरः। वचोभिर्वाग्भिः। बहुवचनेन वचसो बहुप्रकारत्वमुक्तम्। कृपालोः परमेश्वरस्यानुचराणां केषाञ्चिद् वचनमेवेदम्। मा वृथा शरीरं विनाशय। अवश्यं प्रियसङ्गमो मरणेन विना भविष्यत्येवेत्यादिरूपैरिति भावः। वसन्तवचसामाश्वासकारित्वमाह — समभिवृद्धरसैरिति। सम्यगभिवृद्धो रसोऽनुरागो येषु तैः। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति सिंहः। सान्द्रसौहार्दस्यन्दिभिरित्यर्थः। सौहार्दे हेतुः कुसुमायुधबन्धुत्वम्। अत्र कुसुमायुधशब्देन कुसुमसम्पादके वसन्ते बान्धवहेतुरपि सूचितः। सुहृद्वचो हि विपदि विश्वास्यमिति भावः॥ ४५॥

**अथ मदनवधूरुपप्लवान्तं**
**व्यसनकृशा प्रतिपालयाम्बभूव।**
**शशिन इव दिवातनस्य रेखा**
**किरणपरिक्षयधूसरा दिनान्तम्॥ ४६॥**

(प्रकाशिका)

प्रकरणमुपसंहरति —

**अथेति। अथशब्दोऽवस्थान्तरद्योतकः। अवस्थान्तरं च करुणस्य समत्याशत्वाद् विप्रलम्भत्वम्। अत एव च प्रतिपालनम्। उपप्लवान्तं शापावसानकालमित्यर्थः। रेखात्वादेवोपमाने कार्श्यं, कार्श्यसाह-**

र्याद्बोपमेये धूसरत्वं प्रतीयते । अत्र सर्गे स्थायी करुणः । तत्र भूयसां भावानां वारिधौ कल्लोलानामिवोन्मज्जनं निमज्जनं च दर्शितम् ॥ ४६ ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

चतुर्थः सर्गः ।

(विवरणम्)

रतिप्रलापप्रकरणमुपसंहरति —

अथेति । अथ मदनवधूः व्यसनकृशा उपप्लवान्तं प्रतिपालयाम्बभूव । अथशब्दोऽयमवस्थान्तरारम्भं द्योतयति । करुणस्य प्रत्यापत्त्याशया विप्रलम्भत्वप्राप्तिश्चात्रावस्थान्तरम् । आकाशवाणीमाधववचसोरानन्तर्यवाची वायमथशब्दः । मदनवधूः मदनस्य वधूः रतिः । व्यसनकृशा व्यसनैः दुःखशतैः कृशा कृशशरीरा सती । उपप्लवस्योपद्रवस्य । अन्तमवसानकालम् । शापावसानसमयमित्यर्थः । प्रतिपालयाम्बभूव प्रतीक्षाञ्चक्रे । अत्रोपमामाह—दिवातनस्य शशिनः रेखा किरणपरिक्षयधूसरा दिनान्तमिवेति । दिवातनस्य अहनि वर्तमानस्य । शशिनश्चन्द्रस्य । रेखा कलेत्यर्थः । किरणपरिक्षयधूसरा किरणानां रश्मीनां परिक्षयेण नाशेन हेतुना धूसरा धूसरवर्णा सती दिनान्तमिव । यथा चन्द्रस्य प्रतिपत्कला विवर्णा कृशा च सती स्वतेजोवृद्धिकरं दिनान्तं प्रतिपालयति, तथेयमपि भर्तुः शापावसानसमयमित्यर्थः । प्रदोषमिति वा पाठः । अत्र रेखाशब्दप्रयोगेण उपमाने कार्श्यं प्रतीयते, कार्श्यसाहचर्यादुपमेये धूसरत्वं च । अत्र रतेस्तादृशचन्द्रकलोपमानेन प्रियसङ्गमानन्तरभाविनी क्रमेण वृद्धिश्च ध्वन्यते ॥ ४६ ॥

सर्गेऽस्मिन् करुणो रसः स्थिरतरो भावास्तु वारान्निधौ
कल्लोला इव तत्र तत्र बहवः सम्मज्जनोन्मज्जने ।

कुर्वाणा विलसन्ति हन्त नितरां दीना मदीया पुन-
र्बुद्धिस्तस्य तथापि देशिककृपानावैव पारं गता ॥

आश्लेषाशतकादिपद्यरचनादक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये ।
व्याख्यानेऽत्र कुमारसम्भवपदार्थालोचनप्रक्रिया-
निष्णाते स्म चतुर्थ एति विरतिं सर्गो निसर्गोज्ज्वलः ॥

इति श्रीकृष्णशिष्यनारायणस्य कृतौ

कुमारसम्भवविवरणे

चतुर्थः सर्गः ।

# अथ पञ्चमः सर्गः ।

तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती
प्रियेषु सौभाग्यफला हि चारुता ॥ १ ॥

(प्रकाशिका)

इत्थं प्रासङ्गिकं परिसमाप्याधिकारिकं वृत्तं स्वावसरेऽवतारयति

तथेति । तथाशब्दो रतिवृत्तान्तविच्छिन्नस्य कामदाहप्रकारस्य परामर्शकः । समक्षमिति मनोरथस्यात्यन्तभग्नत्वं द्योतयति । रूपं सौन्दर्यम् । हृदयेन निनिन्देति, प्रागपि रूपाभिमानस्योदात्तनायिकायां गूढत्वात् । 'स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रत' इति वचनात् । प्रियेष्विति विषयसप्तमी । सौभाग्यं स्पृहणीयता ॥ १ ॥

(विवरणम्)

इत्थं कामदहनप्रसङ्गागतं रतिप्रलापवृत्तमुपसंहृत्याधिकारिकं वृत्तमेव स्वावसरेऽवतारयितुं पञ्चमः सर्गोऽयमारभ्यते । तत्र कामदहनानन्तरं पित्रा गृहं प्रापिता देवी किमकरोदित्याकाङ्क्षायामाह

तथेति । मनोभवं तथा समक्षं दहता पिनाकिना भग्नमनोरथा सती पार्वती हृदयेन रूपं निनिन्द । तथाशब्दोऽयं रतिप्रलापवृत्तान्तकथनविच्छिन्नं कामदहनप्रकारं कथानुसन्धानार्थं परामृशति । समक्षमिति दहनक्रियाविशेषणम् । आत्मनः प्रत्यक्षं यथा भवति तथा दहतेत्यर्थः । अनेन मनोरथभङ्गस्यात्यन्तिकत्वं सूचितम् । दहता भस्मावशेषतामेव प्रापयता । अनेन दैववशात् पुनरपि जीविष्यतीत्याशाया अप्यभाव उक्तः । भग्नो भङ्गं प्रापितः मनोरथो हरजायात्व-

१. 'त्रं यो' क. पाठः.

प्राप्त्यादिलक्षणः चित्तवृत्तिविशेषो यस्याः तथाभूता । सती भवन्ती पार्वती रूपं सौन्दर्यं हृदयेन निनिन्द मनसा निन्दितवती । अयमभिप्रायः—पूर्वं तावत् 'प्रेम्णा शरीरार्धहरां हरस्य'(स. १. श्लो. ५०) इति नारदवचनानन्तरं देव्याः पुरारिविषयो यो मनोरथोऽङ्कुरितः, पुनश्च परिचर्यायां तत्स्वरूपदर्शनेन यश्च संवर्धितः, तदनन्तरम् 'उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि'(स. ३. श्लो. ६७) इत्यत्र यो वा प्रत्यासन्नफलतया कल्पितः, स सर्वोऽपि कामदहनदर्शनानन्तरं भग्नः, पुनश्च किमनया काननचन्द्रिकाकल्पया मे रूपसम्पदेति निजमेव रूपं मनसा निन्दितवतीति । मनसा निनिन्देत्यस्यायमर्थः—'स्थिरो निगूढाहङ्कारो धीरोदात्त' इत्युदात्तनायकलक्षणमुदात्तनायिकायामपि योजनीयम् । अतो देव्या उदात्तनायिकात्वाद् रूपाभिमानस्य स्वतो निगूढतरत्वान्निन्दनमपि मनसैव, न तु वचसेति । अनया रूपनिन्दया देवस्यारूपहार्यत्वं प्रतिपादितम् । अत एव वक्ष्यति—'अरूपहार्यं मदनस्य निग्रहात्'(स.५.श्लो.५३) इति । निन्दायामुपपत्तिकथनेन निन्दाप्रकारमेवाह—चारुता प्रियेषु सौभाग्यफला हि इति । प्रियेष्विति विषयसप्तमी । सौभाग्यं स्पृहणीयत्वं फलं यस्याः सा तथा । चारुतायाः प्रियविषयसौभाग्यमेकमेव हि फलं, तदभावे किं रूपसम्पदेति भावः । 'शैलात्मजापि पितुरुच्छिरसोऽभिलाषं व्यर्थं समीक्ष्य ललितं वपुरात्मनश्च' (स. ३. श्लो. ७५) इति तृतीयसर्गान्ते प्रकृतो भावोऽनेनोत्थापितः । प्रथमसर्गान्तप्रकृतस्य प्रयोज्योपार्वतनविधेरुपसंहारोऽप्यत्र दर्शितः ॥ १ ॥

इयेष सा कर्तुमवन्ध्यकामतां
समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥

१. 'यमे' घ. पाठः. २. 'रूपतां' मुद्रितकोशपाठः. ३. 'वा' मुद्रितकोशपाठः.

(प्रकाशिका)

इत्थं पूर्वप्रस्तुतं प्रयोज्योपावर्तनविधेर्वैफल्यमनुसन्धाय तत्प्रसङ्गेनालौकिकयोर्नायकयोरलौकिकमन्यदेव प्रयोज्यस्योपावर्तनमवतारयति —

**इयेषेति** । समाधिं भग्नस्य मनोरथस्य पुनस्समाधानम् । आस्थाय अवलम्ब्य । तपोभिरिति, तेषामतिदुरापेऽपि साधनत्वात् । यदाह मनुः—

"यद् दुष्करं यद् दुरापं यद् दुर्गं यच्च दुस्तरम् ।
तत् सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥"

इति । तथाविधं शरीरार्धप्रदम्[1] । तादृशोऽनन्यनारीकः[2] । उक्तञ्च "प्रेम्णा शरीरार्धहरां हरस्य" (स०. १. श्लो. ५०) इति, "अनन्यभाजं पतिमाप्नुहि" (स०. ३. श्लो. ६३) इति च । अनेनोत्साहात्मनो वीरस्य वर्णयिष्यमाणस्योपक्षेपः ॥ २ ॥

( विवरणम् )

अथ लोकोत्तीर्णयोर्नायकयोस्तथाविधमेव प्रयोज्योपावर्तनविधिमवतारयति —

इयेषेति । सा समाधिम् आस्थाय तपोभिः आत्मनः अवन्ध्यकामतां कर्तुम् इयेष । या भग्नमनोरथा सा पार्वती समाधिं भग्नमनोरथप्रतिसन्धानम् आस्थाय अवलम्ब्य । भग्नमनोरथानां प्रवृत्त्यनुपपत्तेरित्थमुक्तम् । तपोभिरिति बहुवचनेन वक्ष्यमाणानां बहुविधानां तपसामुपादानम् । मनोरथप्राप्तिपर्यन्तैरित्यर्थः । अत्यन्तदुरापेऽर्थे तपसामेव साधनत्वमुक्तं मनुना —

"यद् दुष्करं यद् दुरापं यद् दुर्गं यच्च दुस्तरम् ।
तत् सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥"

इति । अत्रात्मशब्दस्यार्थप्रकरणाभ्यां सिद्धत्वेऽप्यात्मनो नित्यत्वात् तपोभिः शरीरं परित्यज्य जन्मान्तरेष्वपि स्वमनीषितं साधयिष्याम्येवेति

१. 'र्धदम्' ख. ग. घ. पाठः. २. 'पत्कः' क. पाठः.

स्थिरनिश्चयत्वं प्रतिपादयितुमुपादानम् । यथोक्तं भागवते 'व्रतकृशान् शतजन्मभिः स्यात्' (स्क. १०. अ. ५२. श्लो. ४३) इति । अवन्ध्यः सफलः कामोऽभिलाषो यस्याः तस्या भावस्तत्ता, ताम् । इयेष इच्छां कृतवती । 'इषु इच्छायामि'ति धातुः । लौकिकस्य प्रयोज्योपावर्तनविधेस्तादृशफलजनकत्वाभावादयं प्रयोज्योपावर्तनविधिरेव तस्या युक्ततर इत्याह— अन्यथा तद् द्वयं कथमवाप्यते इति । अन्यथा लौकिकोपावर्तनमात्रेण । तद् वक्ष्यमाणं द्वयं कथमवाप्यते लभ्यते, न कथञ्चिदित्यर्थः । किं तद् द्वयमित्यत्राह—तथाविधं प्रेम तादृशः पतिश्चेति । तथाविधं 'प्रेम्णा शरीरार्धहराम्' इति नारदवचनात् स्वशरीरार्धप्रदम् । प्रेम स्नेहः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इति सिंहः । तादृशः 'अनन्यभाजं पतिमाप्नुहि' इति भगवद्वचनाद् अनन्यनारीरतिः । नारदभगवद्वचनयोः कदाचिदप्यन्यथाभावानुपपत्तेः लौकिकस्योपावर्तनविधेस्तत्साधनत्वाभावाच्च देव्यास्तपश्चरणाभिलाष एव युक्ततर इति भावः । अनेन श्लोकेनोत्साहात्मकस्य वीरस्य वक्ष्यमाणस्योपक्षेपः कृतः ॥ २ ॥

**निशम्य चैनां तपसे कृतोद्यमां**
**सुतां गिरीशं प्रति सक्तमानसाम् ।**
**उवाच मेना परिरभ्य वक्षसा**
**निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥**

(प्रकाशिका)

अथ त्रिभिः श्लोकैरुदात्तगुणं कार्यसाधनं च व्यवसायस्थैर्यमाह—

**निशम्येति** । निशम्य, सखीभ्य इति शेषः । तपसे कृतोद्यमामिति विषादः । गिरीशं प्रति सक्तमानसामिति अनुरूपाभिनिवेशिनी दिष्ट्या मे वत्सेति हर्षः । तदुभयानुभावश्च गाढालिङ्गनम् । तर्हि विषादानुरूपो निषेधो हर्षानुरूपा वानुज्ञा वचनस्य विषय इत्याह—निवारयन्तीति ।

१. 'शा श', २. 'स्याम्' घ. पाठः. ३. 'शप्र' मुद्रितकोशपाठः.

**किं सर्वथा निवारणमित्याह — महत इति। कष्टात् तपस इत्यर्थः। दाक्षिणावर्तस्तु — व्रतस्य मेनाया अनीप्सितत्वाद् 'वारणार्थानामीप्सितः'(१.४.२७)इत्यपादानत्वं न स्यात्। निवारयन्ती अपगमयन्तीति व्याचष्ट ॥३॥**

(विवरणम्)

ननु नेच्छामात्रं फलपर्यन्तस्य तपसो हेतुः, अपि तु स्थिरव्यवसायत्वमपीत्युदात्तगुणभूतं कार्यसाधनक्षमं च देव्याः स्थिरव्यवसायत्वं वर्णयितुमुपक्रमते —

निशम्येति। मेना एनां सुतां तपसे कृतोद्यमां गिरिशं प्रति सक्तमानसां च निशम्य वक्षसा परिरभ्य महतः मुनिव्रताद् निवारयन्ती उवाच। तपसे तपश्चरितुम्। कृतः उद्यमो यया ताम्। अत्र हेतुमाह — गिरिशं प्रति सक्तमानसामिति। सक्तं मानसं यस्याः ताम्। गिरीशासक्तचित्तामित्यर्थः। पूर्वं सुतायाः तपश्चरणोद्यमः श्रुतः। पुनश्च तद्धेतुजिज्ञासायां गिरीशासक्तचित्तत्वं श्रुतमिति क्रमोऽप्यत्र विवक्षित एव। निशम्य सखीमुखादिति शेषः। वक्षसा परिरभ्य उरसा गाढमालिङ्ग्य। इदं च गाढालिङ्गनं शरीरक्लेशकरतपश्चरणोद्यमश्रवणजनितस्य शोकस्य, गिरीशासक्तचित्तत्वश्रवणजनितस्य अनुरूपाभिनिवेशिनी दिष्ट्या मे वत्सेति मोदस्य चानुभावः। विषादहर्षयोरनुगुणनिषेधमाह — महत इत्यादिना। अत्यन्तदुश्चरान्मुनीनां व्रतात् तपसः प्रतिषेधं कुर्वती सती उवाच। सुताया गम्यमानया चरणक्रियया मुनिव्रतमीप्सितमिति मुनिव्रतशब्दाद् 'वारणार्थानामीप्सितः' इति पञ्चमी। अत्र कैश्चिन्मुनिव्रतस्य मेनाया अनीप्सितत्वादपादानत्वानुपपत्तिराशङ्किता। तन्मन्दम्। भाष्यादौ कर्तुरित्यनुवृत्तेरप्रदर्शितत्वात् ॥ ३ ॥

**मनीषिताः सन्ति गृहेषु देवता-**
**स्तपः क्व वत्से! क्व च तावकं वपुः।**

१. 'श' घ. पाठः. २. 'म्येत्यादिना। मे' घ. पाठः. ३. 'ताः सन्ति गृ' मुद्रितकोशपाठः

पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥

(प्रकाशिका)

मनीषितायेति। अर्चेति 'आ धृषाद् वे'ति विकल्पितणिचो रूपम्। देवता इन्द्राण्याद्याः। तर्हि तप एव ननु श्रेयस्करमित्याह — तप इति। चशब्दसहायाभ्यां क्वशब्दाभ्यामैकाधिकरण्यमाक्षिप्यते। तपश्चेदं वपुश्च साध्यत्वेन साधनत्वेन च कर्तृभूतायां त्वयि नान्वयमुपेत इत्यर्थः। आक्षेपमुपपादयति— पदमिति ॥ ४ ॥

(विवरणम्)

क्लेशेन विनापि मनीषितसिद्धिप्रदं कर्मान्तरमुपदर्शयति —

मनीषितायेति। वत्से! त्वं मनीषिताय गृहेषु देवताः अर्च। वत्से! बाले!। अनया सम्बुद्ध्या मृदुशरीरत्वादत्यन्तदुश्चरे तपस्यनधिकार उक्तः। मनीषिताय इष्टमर्थं लब्धुम्। गृहेषु देवताः प्रतिमारूपेण वर्तमानाः सौभाग्यप्रदा इन्द्राण्याद्याः। अर्च पूजय। 'अर्च पूजायामि'त्यस्य धातोः 'आ धृषाद् वे'ति णिचो विकल्पितत्वादर्चेति रूपम्। ननु तर्हि श्रेयस्करं तप एव किमर्थमुपेक्ष्यत इत्यत्राह — तपः क्व तावकं वपुश्च क्व इति। कठिनशरीरैर्मुनिभिरेव कर्तुं शक्यं तपः क्व कुत्र वर्तते। तावकं त्वदीयम् अत्यन्तकोमलं वपुश्च क्व अत्यन्तकठिनशरीरसाध्यस्य तपसः प्रकृत्या कोमलस्य तव शरीरस्य च परस्परान्वयो दुर्घट एवेति भावः। परस्परान्वयाभावमेवोपपादयति — पेलवं शिरीषपुष्पं भ्रमरस्य पदं सहेत पतत्रिणः पुनः न इति। पेलवं प्रकृत्या मृदु। भ्रमरस्य भ्रमणस्वभावस्य भृङ्गस्य। इदमपि सहने हेतुः। 'भ्रमु अनवस्थाने' इति धातुः। 'अर्तिकमिभ्रमिचमि—' (उ०.३.१३२) इत्यादिना अरच्। चिरावस्थाने तदपि दुःसहमेवेति भावः। पदं पादविन्यासम्। सहेत इति सम्भावनायां लिङ्। पतत्रिणः पक्षिणः। पदमिति अत्रापि योज्यं,

१. 'न्द्राद्याः' घ. पाठः.

सहेतेति च । यथा भ्रमरावस्थानक्षमं शिरीषपुष्पं पिकाद्यवस्थानं न सहते, तथा कोमलतरं तव शरीरं कठिनशरीरसाध्यं तपश्चरितुमक्षममेवेति भावः । अत्र पूर्वार्धे विषमालङ्कारः। 'क्वचिद् यदतिवैषम्यान्न श्लेषो घटनामियाद्' इति। उत्तरार्धे तु सादृश्यनिमित्तोऽर्थान्तरन्यासः। तयोश्च संसृष्टिः ॥ ४ ॥

इति स्थिरे[1]च्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात्।
क ईप्सितार्थ[2]स्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥

(प्रकाशिका)

इतीति । इत्यनुशासती हेतौ शता। अनुशासनेन हेतुनेत्यर्थः । तथापि किन्न शशाकेत्याह — स्थिरेच्छामिति । अस्य हेतोः साध्येन व्याप्तिमाह — क इति । प्रतीपयेत् प्रतिलो[3]मं कुर्यात् । अत्रापि दीपकार्थान्तरन्यासयोः सङ्करः ॥ ५ ॥

( विवरणम् )

इत्थं प्रवृत्तस्य जननीवचनस्य स्थिरव्यवसायायां देव्यां वैफल्यमाह —

इतीति । मेना सुताम् इति अनुशासती उद्यमाद् नियन्तुं न शशाक। सुताम् आत्मनः पुत्रीम्। इदमनुशासने हेतुः । इति पूर्वोक्तप्रकारेण । अनुशासतीति हेतौ शता । अनुशासनेन हेतुनापीत्यर्थः । उद्यमाद् मुनिव्रतोद्योगाद् नियन्तुं निवर्तयितुं न शक्ताभूत् । अत्र हेतुमाह — स्थिरेच्छामिति । स्थिरव्यवसायामित्यर्थः । अस्य हेतोः साध्ये[4]न व्याप्तिं दर्शयति — ईप्सितार्थस्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेदिति । ईप्सिते अभीष्टे

१. 'भुवेच्छा' मुद्रितकोशपाठः. २. 'स्पुर्क स्थि' ख. पाठः. ३. 'लोतः कु' ख. पाठः. ४. 'ध्ये व्या' ख. पाठः.

अर्थे वस्तुनि स्थिरः अचञ्चलः निश्चयो यस्य तादृशं मनः, निम्नप्रदेशं प्रत्यभिमुखं कृतप्रवाहं 'पयः जलं च कः प्रतीपयेत् प्रतिनिवर्तयेत्, न कोऽपीत्यर्थः । अत्र दीपककार्थान्तरन्यासयोः सङ्करः ॥ ५ ॥

कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥ ६ ॥

(प्रकाशिका)

उत्साहस्य द्वितीयामवस्थां वर्णयति —

कदाचिदिति । कदाचिद् अवसरे लब्ध इत्यर्थः । आसन्नेत्युभयत्र विस्रम्भ उक्तः । उभयत्र विस्रब्धं हि मित्रमर्थकारि । मनोरथज्ञं मनोरथश्चेद् दुर्वार इति जानानम् । मनस्विनी स्थिरचित्ता । अत एवाह — फलोदयान्ताय । फलोदय एवावसानमस्य तपस इति निश्चित्येत्यर्थः । तपस्समाधये तपस्यैकाग्र्याय । तच्च न गृहवासे सिध्येदिति भावः ॥ ६ ॥

(विवरणम्)

एवम् अङ्कुरितस्योत्साहस्य क्रमेण वृद्धिं वर्णयितुं द्वितीयामवस्थामाह —

कदाचिदिति । सा कदाचित् पितरं फलोदयान्ताय तपःसमाधये आत्मनः अरण्यनिवासम् आसन्नसखीमुखेन अयाचत । कदाचित् प्रश्नावसरे लब्धे । फलोदये फलप्राप्तावेव अन्तोऽवसानं यस्य तादृशाय । तपसि यः समाधिः चित्तैकाग्र्यं तस्मै । यद्यपि कादाचित्कं मनःसमाधानं गृहावस्थानेऽपि सम्भवेत्, तथापि फलोदयपर्यन्तं तपसि मनःसमाधानमरण्यनिवास एव सुलभमिति भावः । अरण्ये कानने निवासम् । आसन्नायाः समीपवर्तिन्याः सख्या मुखेन । या पितृनियोगादनवरतम् आत्मनः समीपे वर्तते,

१. 'त' घ. पाठः.

ात्रासन्नसखीत्युच्यते। तेन तस्याः उभयत्र विस्रम्भ उक्तः। उभयत्र वेस्रब्धो हि बन्धुरर्थसाधको भवति। अयाचत याचितवती। पितुरभिलाष-साधकत्वे हेतुमाह — मनोरथज्ञमिति। मनोरथं जानातीति तथा। मनोरथ-स्वरूपस्य सर्वलोकदुर्वारत्वं जानानमित्यर्थः। देव्याः फलोदयान्ते तपसि सामर्थ्यमाह — मनस्विनीति। स्थिरचित्तेत्यर्थः।

"महाकार्ये कृतोद्योगो विघ्नैराहतमानसः।
प्रारब्धं न त्यजति यः स मनस्वीति कथ्यते॥"

इति वचनात्॥ ६॥

**अथानुरूपाभिनिवेशतोषिणा**
**कृताभ्यनुज्ञा गुरुणा गरीयसा।**
**प्रजासु पश्चात् प्रथितं तदाख्यया**
**जगाम गौरीशिखरं शिखण्डिमत्॥ ७॥**

(प्रकाशिका)

तृतीयामाह-

**अथेति।** अथशब्दो वनवासोपक्रमद्योतकः। गरीयसा धीरेण। एतच्च तथातोषे हेतुः, तोषश्चानुज्ञायां, सा च गमने, कन्यानां पितृ-परतन्त्रत्वात्। प्रजासु जनेषु। तदाख्यया गौरीशिखरमित्याख्यया। शिखण्डिमदिति दुष्टसत्त्वाभाव उक्तः। एवमुत्तरोत्तरमुत्साहस्य प्रकर्षा-वस्था द्रष्टव्या॥ ७॥

(विवरणम्)

पितृनियोगपुरस्सरं तपोनुरूपदेशप्राप्तिमाह —

**अथेति।** अथ सा गुरुणा कृताभ्यनुज्ञा गौरीशिखरं जगाम। अथ या-चनानन्तरम्। वनवासोपक्रमद्योतको वायमथशब्दः। गुरुणा पित्रा। कृता

विहिता अभ्यनुज्ञा नियोगो यस्याः सा तथा। इदं तु गमने हेतुः, कन्यकानां पितृपरतन्त्रत्वात्। 'पिता रक्षति कौमार' इति वचनात्। गौरीशिखरं हिमवच्छृङ्गविशेषं जगाम। अनुज्ञायां हेतुमाह— अनुरूपाभिनिवेशतोषिणेति। अनुरूपे आत्मानुरूपे वरे विषये योऽभिनिवेशः अभिलाषोत्कर्षः तेन तोषितुं सन्तोषितुं शीलमस्येति तथा। तथातोषे हेतुमाह— गरीयसेति। धीरेणेत्यर्थः। महान्तो ह्यनुरूपाभिनिवेशेन तुष्यन्ति, नाप्यरण्यनिवासाद् बिभ्यति। गौरीशिखरशब्दस्यान्वर्थतां दर्शयति — पश्चात् तदाख्यया प्रजासु प्रथितमिति। पश्चाद् गौरीनिवासानन्तरं तदाख्यया गौरीशिखरमित्याख्यया नाम्ना प्रजासु जनेषु प्रथितं प्रसिद्धम्। गौरीचिरनिवासेनैव हेतुना जनैः गौर्याः शिखरमिति व्युत्पत्त्या गौरीशिखरमिति गीयमानमित्यर्थः। गौरीशिखरस्य विशेषतो रमणीयत्वमाह— शिखण्डिमदिति। शिखण्डिनो बर्हिणः। भूम्नि मतुप्। बहुबर्हियुक्तमित्यर्थः। अनेन केकालापमयूरनृत्तादिषु विकारहेतुषु सत्स्वपि देव्या धीरत्वात् तपोलोपशङ्काया अभावः सूचितः। 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः।' (स. १. श्लो. ५९) इतिवत्। तपःसौकर्यार्थं दुष्टसत्त्वानामभावोऽप्यनेनैव ध्वन्यते। नहि शार्दूलाद्यधिष्ठिते देशे शिखण्डिनस्तद्भयान्निवसन्ति ॥ ७॥

विमुच्य सा हारमहार्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

(प्रकाशिका)

अथ तपस उपक्रमं षड्भिः श्लोकैर्वर्णयति—

१. 'न्यानां' घ. पाठः.

**विमुच्येति । अहार्यनिश्चयेति तथादुःस्पर्शवल्कलबन्धनकालभाविविशेषणम् । यष्टिशब्देन यष्ट्याकारो हारप्रदेश उच्यते । विलुप्तं हृतम् । बभ्रुत्वेन दुःस्पर्शत्वहेतुभूतमप्रशान्तकषायत्वं नवत्वं द्योत्यते। पयोधरोत्सेधे तदाभोगपिधानाय विस्तारितत्वाद् विशीर्णा संहतिः समूहो यस्य । दक्षिणावर्तस्तु—संहतिः श्लक्ष्णत्वमित्याह । श्रूयते च तपस्विकन्यानामपि शाकुन्तलादौ स्तनावरणवल्कलम् । बालारुणबभ्रुत्वं हृतस्तनचन्दनत्वेन हारस्यापि समानम् ॥ ८ ॥**

(विवरणम्)

अथ बहुभिः श्लोकैः तपस उपक्रमो वर्ण्यते । तत्रादौ तपश्चरणाङ्गभूतं वल्कलबन्धनमाह—

विमुच्येति । सा हारं विमुच्य वल्कलं बबन्ध । हारं परित्यज्य स्तनावरणार्थं वल्कलं वक्षसि बद्धवती । इदं तु परिधानवल्कलस्याप्युपलक्षणम् । मनोहरहारपरित्यागे दुःस्पर्शवल्कलबन्धने च हेतुमाह—अहार्यनिश्चयेति । अहार्यः अनिवार्यः निश्चयोऽध्यवसायो यस्याः सा तथा । तथाविधहारपरित्यागस्यान्यदुष्करत्वं द्योतयितुं हारस्य मनोहारित्वमाह—विलोलयष्टिप्रविलुप्तचन्दनमिति । यष्टिशब्देन अत्र यष्ट्याकारो हारप्रदेश उच्यते । विलोलया चञ्चलया यष्ट्या प्रविलुप्तं हृतं चन्दनं येन तत् तथा । कुचतटहरिचन्दनाङ्कितमित्यर्थः । कुचाभोगे वल्कलस्यानौचित्यं द्योतयितुं वल्कलस्य दुस्स्पर्शत्वमाह—बालारुणबभ्रु इति । बालारुणो बालार्कः तद्वद् बभ्रु पिङ्गलवर्णम् । 'बभ्रु स्यात् पिङ्गले त्रिषु' इत्यमरः । अनेन वल्कलस्य नवत्वं द्योत्यते । तेन चाप्रशान्तकषायत्वादत्यन्तदुःस्पर्शत्वम् । इदं च विशेषणं हारस्यापि समानं, तस्यापि स्तनाङ्गरागारुणितत्वात् । तादृशमपि वल्कलं तादृशे स्तनाभोगे गाढं निबद्धमित्याह—पयोधरोत्सेधविशीर्णसंहतीति । पयोधरयोः

१. 'न्धका' घ. पाठः. २. 'र्शवत्त्वे हे' घ. पाठः.

स्तनयोरुत्सेधेन वर्धनेन विशीर्णा विश्लेषं प्राप्ता संहतिरवयवसमूहो यस्य तत् तथा । पयोधरयोरतिमहत्त्वेन तदाभोगपिधानार्थं वल्कलस्यात्यन्तविस्तारितत्वात् तदवयवानां परस्परविश्लेषोऽपि तदा जात इति भावः । अथवा यौवनारम्भेण प्रतिक्षणं विजृम्भमाणे पयोधरे सति तत्सङ्घर्षवशात् परस्परविश्लिष्टावयवसमूहमिति । उक्तं च शाकुन्तले पयोधरयोस्तथावर्धनं 'पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवाळह' इति । अनेन तादृशयौवनेऽत्यन्तमसम्भावितं तपस्येकाग्रचित्तत्वं प्रतिपाद्यते, तेन च प्रस्तुतस्योत्साहस्योत्कर्षः । अत एवोक्तम् — अहार्यनिश्चयेति । अत्र परिवृत्तिरलङ्कारः । 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः' इति ॥ ८ ॥

**यथा प्रसिद्धैर्मधुरं शिरोरुहै-**
**र्जटाभिरप्येवमभूत् तदाननम् ।**
**न षट्पदश्रेणिभिरेव पङ्कजं**
**सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥**

(प्रकाशिका)

यथेति । प्रसिद्धैश्चूर्णादिभिर्भूषितैः । 'प्रसिद्धौ ख्यातभूषिताविति' सिंहः । यथा मधुरमित्यन्वयः । तत्र प्रतिवस्तुना 'किमिव हि मधुराणां मण्डनं नाकृतीनामि'ति न्याय उद्भावितः । अनयोः परिवृत्तिरलङ्कारः ॥ ९ ॥

(विवरणम्)

तपोऽनुरूपं जटाधारणमपि भङ्ग्यन्तरेणाह —

यथेति । तदाननं प्रसिद्धैः शिरोरुहैः यथा मधुरम् अभूद्, जटाभिरपि एवम् । तस्या आननं मुखं प्रसिद्धैः भूषितैः । 'प्रसिद्धौ ख्यातभूषितावि'त्य-

मरः। चूर्णकुसुमाद्यलङ्कृतैरित्यर्थः। शिरोरुहैः केशैः मधुरं मनोहरम्। 'स्वादुप्रियौ तु मधुरावि'त्यमरः। एवंशब्दस्तथाशब्दार्थे। यथा तपःसमयात् पूर्वं तदाननं भूषितैः केशैः मधुरमभूत्, पुनर्जटाभिरपि तथा मधुरमभूदित्यर्थः। 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति न्यायेन। अस्मिन्नर्थे प्रतिवस्तूपमां दर्शयति—पङ्कजं षट्पदश्रेणिभिरेव न, सशैवलासङ्गमपि प्रकाशते इति। षट्पदानां श्रेणिभिः समूहैरेव न केवलं प्रकाशते, अपितु सशैवलासङ्गमपि। शैवलैरासङ्गः सम्पर्कः शैवलासङ्गः, तत्सहितं सशैवलासङ्गं, तथाभूतं सदपि प्रकाशते शोभते। 'काशृ दीप्तौ' इति धातुः। अत्रापि पूर्वार्धे परिवृत्तिर्द्रष्टव्या॥ ९॥

प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम्।
अकारि तत्पूर्वनिबद्धया तया
सरागमस्या रशनागुणास्पदम्॥ १०॥

(प्रकाशिका)

प्रतिक्षणमिति। प्रतिक्षणं रोमाञ्चकरणं मौञ्ज्यास्त्रिगुणत्वेन दुस्सहतरत्वात्। व्रतायेत्यावश्यकत्वमुक्तम्। तत्पूर्वनिबद्धत्वं रागहेतुः। रशनागुणास्पदशब्देन रशनापरिवृत्तिर्द्योत्यते॥ १०॥

(विवरणम्)

व्रतायावश्यकर्तव्यं मौञ्जीबन्धनमप्याह—

प्रतिक्षणमिति। सा त्रिगुणां यां मौञ्जीं व्रताय बभार तत्पूर्वनिबद्धया तया अस्याः रशनागुणास्पदं सरागम् अकारि। त्रयो गुणा आवृत्तयो यस्या-

१. 'ति सिंहः।' घ. पाठः

स्ताम् । यां मौञ्जीं मुञ्जलतया कृतां मेखलां व्रताय बभार । तत्पूर्वमिति बन्धनक्रियाविशेषणम् । तदेव बन्धनं पूर्वं यथा भवति तथा नितरां बद्धया । इदम्पूर्वनिबद्धयेत्यर्थः । इदं सरागत्वविधाने हेतुः । तया मौञ्ज्या अस्याः पार्वत्याः रशनागुणास्पदं काञ्चीगुणस्थानम् । सरागमकारि राग आरुण्यं, तद्युक्तं कृतम् । प्रतिक्षणं कृतरोमविक्रियां, त्रिगुणत्वेनात्यन्तदुःसह-त्वात् क्षणे क्षणे विहितरोमाञ्चामित्यर्थः । अत्र रशनागुणास्पदशब्देन रशनां परित्यज्य तत्स्थाने मौञ्जीबन्धनं द्योत्यत इति परिवृत्तिर्ध्वन्यते । अत्र सरा-गादिशब्दशक्त्यार्थान्तरमपि व्यज्यते । यथा कश्चित् कामी कयाचिन्नायिकया पूर्वं चिरसङ्गतः सन् अपूर्वया त्र्यधिकगुणयान्यया सङ्गतः सुतरां रक्तो भवति, तत्संयोगे प्रतिक्षणमुद्धतरोमाञ्चोऽपि भवति, तथास्याः कटिप्रदेशो रशनया चिरसङ्गतः सन् त्रिगुणया तत्पूर्वनिबद्धया विहितरोमाञ्चया मौञ्ज्या नितरां सरागो विहित इति ॥ १० ॥

निसृष्टरागादधराग्निवर्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥ ११ ॥

(प्रकाशिका)

निसृष्टेति । निसृष्टस्त्यक्तः रागो लाक्षादिः । कन्दुकस्य पतनस-मये स्तनयोरुपरि स्थापितत्वादङ्गरागारुणितत्वम् । अत्र पर्यायः परि-वृत्तितुल्यफलः ॥ ११ ॥

(विवरणम्)

कुशादानमक्षमालाधारणं चाह —

निसृष्टेति । तया करः निसृष्टरागाद् अधरात् स्तनाङ्गरागारुणितात्

१. 'ज्ञमे' घ. पाठः. २. 'गवि' घ. पाठः. ३. 'सु फलम्' क. ख. ग. पाठः.

कन्दुकाच्च निवर्तितः कुशाङ्कुरादानपरिक्षताङ्गुलिः अक्षसूत्रप्रणयी कृतः । निसृष्टस्त्यक्तो रागो लाक्षादिर्यस्मात् । इदं करनिवर्तने हेतुः । स्तनतटघटितैरङ्गरागैः कुङ्कुमाद्यनुलेपनैररुणिताद् अरुणीकृतात् कन्दुकाच्च निवर्तितो वारितः । कन्दुकस्य पतनसमये स्तनयोरुपरि स्थापितत्वात् तस्य तदङ्गरागारुणितत्वम् । एतच्च कन्दुकसेवास्वभावादवसेयम् । कुशानां दर्भाणाम् अङ्कुराः कुशाङ्कुराः । 'अङ्कुरोऽभिनवोद्भिदी'त्यमरः । तेषां परिस्तरणाद्यर्थमादानेन परिक्षताः परितः समन्तात् क्षता अङ्गुलयो यस्य स तथा । कुशानां क्रूरस्पर्शत्वमङ्गुलिपरिक्षतौ हेतुः । अङ्कुरशब्दोपादानादत्यन्तक्रूरस्पर्शत्वं सूचितम् । अक्षसूत्रमक्षमाला । प्रणयः स्नेहः परिचयो वा । 'प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च' इति वैजयन्ती । अक्षसूत्रे प्रणयोऽस्यास्तीत्यक्षसूत्रप्रणयी । पार्वती तपस्समये निजकरमधररञ्जनकन्दुकाघातरूपात् कार्यद्वयान्निवार्य कुशाङ्कुरादानाक्षमालापरिवर्तनरूपकार्यद्वयपरमकरोदित्यर्थः । अत्रैकस्यैव करस्याधरादौ दर्भाङ्कुरादौ च क्रमेण वर्तनात् पर्यायोऽलङ्कारः । 'एकमनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्यायः' इति । फलतस्तु परिवृत्तिरेव, पर्यायस्यात्र वैचित्र्यविशेषाभावात् ॥ ११ ॥

**महार्हशय्यापरिवर्तनच्युतैः**
**स्वकेशपुष्पैरपि या स्म दूयते ।**
**अशेत सा बाहुलतोपधायिनी**
**निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥**

(प्रकाशिका)

**महार्हेति** । महार्हशब्देन हंसतूलगर्भत्वमुक्तम् । स्वकेशपु-

१. 'दुःस्प' क. पाठः. २. 'शाद्य' ख. ग. घ. पाठः.

ष्पैः अर्थादङ्गानि मृद्नद्भिः । बाहुलतामुपधानं कुर्वती । निषेदुषी दिवस उपविष्टा । स्थण्डिले भूमौ । केवले अनास्तृते । अत्र याज्ञवल्क्यः

"स्वप्याद् भूमौ शुची रात्रौ दिवसं मपदैर्नयेत् ।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥" (अ.३.श्लो.५१)

इति ॥ १२ ॥

(विवरणम्)

अथ

"स्वप्याद् भूमौ शुची रात्रौ दिवसं नियमैर्नयेत् ।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥"

इति याज्ञवल्क्यवचनसिद्धत्वाद् व्रतिनामवश्यकर्तव्यं भूमिशयनमाह

महार्हेति । या महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैः अपि दूयते स्म, सा केवले स्थण्डिल एव निषेदुषी अशेत । महार्हायाम् अनर्घदुकूलनिर्मितायामतिमृदुलतूलगर्भायां च शय्यायां यत् परिवर्तनं परितो वर्तनं, कादाचित्कं विवलनमित्यर्थः, तेन च्युतैः पतितैः । स्वकेशपुष्पैः स्वस्य केशे यानि पुष्पाणि प्रसाधिकाजनैः सौरभ्यातिशयोद्भावनार्थं निक्षिप्तानि, तैः । शय्यायां पतित्वा शरीरं स्पृशद्भिरित्यर्थात् सिध्यति । किं पुनः पृथिवीगतैः पाषाणप्रमुखैः कठिनद्रव्यैरित्यपिशब्दार्थः । दूयते स्म सुकुमारशरीरत्वात् परितापं प्रापत् । सा केवले अनास्तृते । उत्तरच्छदमात्रेणापि रहित इत्यर्थः । स्थण्डिले भूमौ । न कदाचिच्छय्यायामपीत्येवकारार्थः । निषेदुषी दिवसेष्विति शेषः । दिवसेषु स्थण्डिल एवावस्थिता सती निशायां तत्रैवाशेतेत्यर्थः । भूतलशयने तदुचितमुपधानमप्याह—बाहुलतोपधायिनीति । प्रशस्तो बाहुर्बाहुलता, तामुपदधातीति 'व्रते' (३. २. ८०) इति णिनिः । 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युक् । अत्र शय्यापरिवृत्तिः ॥ १२ ॥

१. 'नग्नासि' घ. पाठः. २. 'पि विर' घ. पाठः. ३. 'मप्युपधानमाह' घ. पाठः.

पुनर्ग्रहीतुं नियमस्थया तया
द्वयीषु निक्षेप इवार्पितं द्वयम्[1] ।
लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टिर्हरिणाङ्गनासु च[2] ॥ १३ ॥

(प्रकाशिका)

पुनरिति । पुनर्ग्रहीतुम् अर्थात् प्रियसङ्गमसमये । नियमस्थयेति विलासत्यागे[3] हेतुः । द्वयीषु इति पाठः । निक्षेपशब्दोऽत्र द्रव्यपरः । द्वयं निक्षेपत्वेनार्पितमिवेत्यर्थः । अत्र तुल्ययोगिता ॥ १३ ॥

(विवरणम्)

विलासादीनां विराममाह —

पुनरिति । नियमस्थया तया पुनः ग्रहीतुं द्वयीषु द्वयं निक्षेपः अर्पितमिव । नियमाः शौचादयः । 'नियमाः शौचसन्तोषतपोयज्ञहुतादयः' इति भोजः । तेषु तिष्ठन्त्या । इदं विलासादेरन्यत्र निक्षेपे हेतुः । पुनः अर्थात् प्रियसङ्गमसमये । ग्रहीतुं स्वीकर्तुम् । द्वयीषु वक्ष्यमाणासु वस्तुद्वयीषु । द्वयं वक्ष्यमाणं वस्तुद्वयम् । अभीष्टकाले समादातुं सत्यवादिनि प्रमादरहिते विश्वसनीये जने धनस्य न्यासो निक्षेप इत्युच्यते । निक्षिप्यतेऽसाविति व्युत्पत्त्या तद्धनं च निक्षेपशब्दार्थः । अत्र तु निक्षेपशब्दो द्रव्यपरः, निक्षेपक्रियायाः अर्पणक्रियान्वयानुपपत्तेः । अर्पितमिव निक्षेपरूपेण न्यस्तमिवेत्युत्प्रेक्षा । किं तद् द्वयं, कासु वा द्वयीष्वित्याशङ्कायामाह — विलासचेष्टितं तन्वीषु लतासु विलोलदृष्टिः हरिणाङ्गनासु चेति । विलासेन यच्चेष्टितं व्यापारः, तत् तन्वीषु कृशासु लतासु मालत्यादिषु अर्पितम् । विलोला चञ्चला दृष्टिः हरिणाङ्गनासु मृगीषु च अर्पिता । तपस्समये निश्चलशरीरायां नासाग्रदत्तलोचनायां च देव्यां विलासविलोलविलोचनयोरदर्शनं लतासु मृगीषु च तद्दर्शनं चात्रोत्प्रेक्षाहेतुः ॥ १३ ॥

१. 'द्वयेऽपि नि', २. 'ष्टं ह' मुद्रितकोशपाठः. ३. 'गहे' क. ख. ग. घ. पाठः, ४. 'यानु' घ. पाठः. ५. 'काङ्क्षाया' घ. पाठः.

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥

(प्रकाशिका)

अथ द्वाभ्यां मुनिवृत्तिं वर्णयति —

अतन्द्रितेति । तन्द्रा आलस्यम्, अनलसेत्यर्थः । वृक्षकान् अल्पार्थे कः । स्वयमेवेति 'स्वयं दासास्तपस्विन' इति न्यायाद्, नान्यैः । गुहोऽपीति, विश्वस्यापि पितरौ शिवौ येनैव पुत्रिणौ, सोऽपीत्यर्थः । अत्र हेतुः प्रथमाप्तजन्मत्वम् । प्रथममेव वात्सल्यस्य रूढमूलत्वादित्यर्थः । अत्र विरोधोऽलङ्कारः ॥ १४ ॥

(विवरणम्)

इत्थमुपक्रान्ततपसो देव्याः समाधेरुपरमे तत्कालोचितां मुनिवृत्तिं वर्णयति —

अतन्द्रितेति । सा अतन्द्रिता स्वयमेव वृक्षकान् व्यवर्धयत् । अतन्द्रिता अनलसेत्यर्थः । स्वयमेव, न तु परिजनैः । 'स्वयं दासास्तपस्विन' इति न्यायादिति भावः । वृक्षकान्, वृक्षशब्दादल्पार्थे कः । बालवृक्षानित्यर्थः । व्यवर्धयद् विशेषेण अवर्धयत् । स्वयमेव बीजावापपुरःसरमुत्तमवृक्षानुत्पाद्य घटोदकेन सिञ्चती ताननतितरामवर्धयदित्यर्थः । बालवर्धनोपायभूतं जलाहरणं भङ्गयन्तरेणाह — घटस्तनप्रस्रविनीति । घट एव स्तनः घटस्तनः, तस्य प्रस्रवः क्षरत्क्षीरं, तद्वती । अत्र स्तनप्रस्रवशब्दौ वक्ष्यमाणपुत्रवात्सल्यस्फुरणार्थौ । एवम्भूतेषु वृक्षेषु देव्या वात्सल्यातिशयं भङ्गयन्तरेणाह — गुहः अपि येषां पुत्रवात्सल्यं न अपाकरिष्यतीति । गुहोऽपि, त्रैलोक्यपितरा-

१. 'स्रवणैर्व्यंव' मुद्रितकोशपाठः. २. 'प्रमाप्त' ख. पाठः.

वपि पार्वतीपरमेश्वरौ येनैव पुत्रवत्त्वाभिमानमुद्वहतः, स गुहप्रसवोऽपीत्यर्थः । येषां वृक्षाणाम् । सम्बन्धषष्ठी चेयम् । पुत्रवात्सल्यं पुत्रा ममैत इति देव्या वात्सल्यम् । पुत्रेषूचितं वात्सल्यमित्यर्थः । न अपाकरिष्यति स्वोद्भवानन्तरं न निराकरिष्यति । तत्र हेतुमाह — प्रथमासजन्मनामिति । गुहोद्भवात् पूर्वमेवासं प्रासं जन्म यैस्तेषाम् । देव्यास्तद्विषयस्य वात्सल्यस्य नितरां रूढत्वादित्यर्थः । नहि रूढमूलो महद्भिरपि चाल्यत इति भावः । अत्र वात्सल्यापाकरणाभावो गुहं प्रति विरुद्ध इति विरोधोऽलङ्कारः ॥ १४ ॥

अरण्यबीजाञ्जलिदानलालिता-
स्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्
पुरः सखीनाममिमीत लोचने ॥ १५ ॥

(प्रकाशिका)

अरण्येति । (आरण्यं? अरण्यबीजं) नीवारादि । कुतूहलात् कियदन्तरमिति ज्ञातुमौत्सुक्यात् । लोचने अर्थादात्मीये ॥ १५ ॥

(विवरणम्)

सर्वभूतदयापरायां वनमात्रनिवासिन्यां देव्यां मृगाणामपि विश्वासातिशयमाह —

(आ?अ)रण्येति । हरिणाः तस्यां तथा च विशश्वसुः । हरिणाः मृगाः । तथा वक्ष्यमाणप्रकारेण । चशब्दोऽवधारणे, तथैव । विशश्वसुः विश्वासं जग्मुः । तथाशब्दोक्तां विश्वासस्य परमकाष्ठामेव प्रदर्शयति — यथा कुतूहलात् सखीनां पुरः तदीयैः नयनैः लोचने अमिमीतेति । यथा यादृशे विश्वासे सतीर्थः । पार्वतीत्यर्थात् सिध्यति । कुतूहलाद् मद्विलोचनहरिणविलोचनयोः कियदन्तरमिति ज्ञातुं बालस्वभावमात्रजनितादौत्सुक्यात् । सखीनां

'आरण्येति' इति क. ग. घ. ङ. पुस्तकेषु पाठो दृश्यते । तथा सति महाकविनात्रैकस्मिन् पद्ये वृत्तभङ्गोऽकस्मात् कृतः स्यात्, वंशस्थेन्द्रवंशास्थयोः । बीजस्यारण्यसंबन्धस्य समासत एव लाभात् तद्धितवैयर्थ्यं च । आरण्यस्य नीवारादेर्बीजमिति विवक्षायां तु तदेव वृत्तवैरूप्यम्

पुरः, न तु रहसि । अनेन विश्वासाधिक्यमुक्तम् । लोचने आत्मीये इति शेषः । अमिमीत मानं कुर्यात्, तथा विशश्वसुरिति पूर्वेणान्वयः । विश्वासाधिक्ये हेतुमाह—(आ?अ)रण्यबीजाञ्जलिदानलालिता इति । अरण्यभवानां बीजानां नीवारादीनाम् अञ्जलयः (आ?अ)रण्यबीजाञ्जलयः । अञ्जलयः करसम्पुटानि । अञ्जलिपरिमितानामारण्यबीजानां दानेन लालिता इत्यर्थः । अत्राञ्जलिशब्दस्योपादानमौदार्यं प्रतिपादयितुम् । यावता विश्वासेनात्मीयं नयनं मृगनयनस्योपरि निधाय मध्ये मध्ये कियदन्तरमनयोरिति सखीजनं पृष्ट्वा मानं कर्तुं शक्यते, नीवारादिदानलालितानां मृगाणां देव्यां तावान् विश्वासो बभूवेति विश्वासाधिक्यमेवात्र प्रतिपाद्यं, न तु मानमपि । यदि देव्याः कदाचिदेवम्भूतमानापेक्षा भवेत्, तर्हि तदपि कर्तुं शक्यमेवेति भावः । मृगपोषणमपि मुनीनां स्वभावः । यथोक्तं रघुवंशे —'तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ।' (सर्ग. ५ श्लो. ७) इति ॥ १५ ॥

कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्
न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥

(प्रकाशिका)

मुनिवृत्तेः प्रभावमाह—

**कृतेति** । त्वग् वल्कलम् । उत्तरासङ्गः उत्तरीयम् । अधीतिनीमिति[1] अनयाधीतमित्यर्थे 'इष्टादिभ्यश्च' (५.२.८८) इतीनिः । कृताध्ययनामित्यर्थः । अत्र विशेषणानि दिदृक्षाभिप्रायाणीति परिकरः ।

१. 'नीम् अ' क. ग. ङ. पाठः.

तु बालैर्वृद्धा उपस्थेया इत्याह — न धर्मवृद्धेष्विति । तद्धि मुख्यं वृद्धत्वमिति भावः ॥ १६ ॥

(विवरणम्)

इत्थमनुष्ठिताया मुनिवृत्तेः प्रभावातिशयमाह —

कृताभिषेकामिति । मुनयः तां दिदृक्षवः अभ्युपागमन् । मुनयः कृतबहुकालतपसो महर्षयः । तां पार्वतीं दिदृक्षवः द्रष्टुमिच्छवः । इदं च तत्त्वजिज्ञासुत्वादीनामप्युपलक्षणम् । अभ्युपागमन् अभिमुखीकृत्य तत्समीपं प्राप्ताः । तत्त्वजिज्ञासया तत्समीपमुपगम्यावसरं प्रतीक्षमाणास्तदभिमुखं स्थिता इत्यर्थः । अनेन गुणानुरागात् सदैव तत्रावस्थानमपि दर्शितम् । दिदृक्षाभिप्रायाणि विशेषणान्याह — कृताभिषेकामित्यादिना । कृतः अभिषेकः त्रिषवणस्नानं यया ताम् । अनेन शरीरशुद्धिरुक्ता । सर्ववैदिककर्मणां स्नानमूलत्वात् स्नानस्य प्रथममुपादानम् ।

"अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन ।
स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् ॥"

इति स्मृतेः । स्नानानन्तरं सायम्प्रातरवश्यकर्तव्यस्य होमस्याप्यनुष्ठानमाह हुतजातवेदसमिति । हुतो जातवेदा अग्निर्यया ताम् । अयं तु तपश्चरणाङ्गभूतो नैमित्तिको होमः, न तु नित्यः, तस्य विवाहानन्तरमेव विहितत्वात् । अनेनान्तःकरणशुद्धिरुक्ता । वनस्थोचितकर्मानुष्ठानमाह — त्वगुत्तरासङ्गवतीमिति । त्वग् वल्कलम् । उत्तरासङ्ग उत्तरीयम् । वल्कलोत्तरीयवतीमित्यर्थः । इदं तु परिधानवल्कलस्याप्युपलक्षणम् । अनेन सङ्गनिवृत्तिद्वारेणान्तःकरणशुद्धिरेव प्रतिपाद्यते । रागद्वेषौ हि मानसमात्रिलयतः । 'मुमुक्षवोऽप्यधीयीरन् दुरितक्षयकाम्यया' इत्यादिवचनसिद्धं दुरितक्षयप्रयो-

१. 'नं द' ख. घ. पाठः.

जनमध्ययनमाह — अधीतिनीमिति । कृताध्ययनामित्यर्थः । अनयाधीतमिति 'इष्टादिभ्यश्च' (५. २. ८८) इतीनिप्रत्ययः । अनेन दुरितक्षयद्वारेणात्मशुद्धिरुक्ता । एतैश्च विशेषणैर्देव्या दर्शनमात्रस्यापि पापक्षयहेतुत्वमुक्तमिति विशेषणानां दिदृक्षाभिप्रायत्वात् परिकरोऽलङ्कारः । ननु बालैर्वृद्धा एव सेव्याः, अत्र तु विपरीतमेव दृश्यत इत्यत्राह — धर्मवृद्धेषु वयः न समीक्ष्यत इति । धर्मवृद्धेषु शीलवृद्धेषु । वेदोक्तार्थानुष्ठानतत्परेष्वित्यर्थः । चतुर्विधं हि वृद्धत्वम् । तत्र वैराग्येणैकं वृद्धत्वम् । यथोक्तं स्कान्दपुराणे — 'वैराग्येणापि वृद्धस्ते सूनुः पर्वतकन्यके !' इति । ज्ञानशीलवयोभिस्त्रीणि । यथोक्तं रामायणे — 'ज्ञानवृद्धैर्वयोवृद्धैः शीलवृद्धैश्च सज्जनैः । कथयन्नास्त वै नित्यम्' इति । येषु त्रिविधं वृद्धत्वम् एकैकं वा, तेषु वयो न समीक्ष्यते न निरूप्यते । वयोवृद्धत्वस्याप्राधान्यादिति भावः । देव्यां तु शीलवृद्धत्वमेव सर्वैरपि विशेषणैः प्राधान्येनोपात्तम् । त्वगुत्तरासङ्गवतीमित्यनेन वैराग्यवृद्धत्वम्, अधीतिनीमित्यनेन ज्ञानवृद्धत्वमप्यर्थादुपात्तमिति मन्तव्यम् ॥ १६ ॥

**विरोधिसत्त्वोज्झितपूर्वमत्सरं**
**द्रुमैरभीष्टप्रसवार्चितातिथि ।**
**नवोटजाभ्यन्तरसम्भृतानलं**
**तपोवनं तत्र बभूव पावनम् ॥ १७ ॥**

(प्रकाशिका)

विरोधीति । पूर्वशब्देनानादित्वमुच्यते । अभीष्टैः, यद्यदिच्छति तेन तेनेत्यर्थः । प्रसवैः फलपुष्पैः । तत्र गौरीशिखरे । पावनं दर्शनादपीत्यर्थः । एवं गुणानुरागादागच्छत्स्वावसथं मुनिषु न केवलं देव्या आश्रममात्रम्, अपित्वेवंगुणविशिष्टं तपोवनमेव तत्रासीदित्यर्थः ॥ १७ ॥

१. 'षु धर्मशी' ख. पाठः. २. 'श्च' मुद्रितकोशपाठः. ३. 'पतत्सु मु' ख. घ. पाठः

(विवरणम्)

ताद्दशदेवीनिवासभूतस्य तपोवनस्यापि प्रभावातिशयमाह —

विरोधीति । तत्र पावनं तपोवनं बभूव । तत्र गौरीशिखरे । पावनं दर्शनमात्रेणापि शुद्धिकरमित्यर्थः । तपोवनं न देव्या आश्रममात्रम्, अपितु एवम्भूतगुणविशिष्टत्वात् तपोवनमेव बभूवेति भावः । तपोवनोचितानि विशेषणान्याह — विरोधिसत्त्वोज्झितपूर्वमत्सरमित्यादिना । विरोधिभिः जात्या वैरिभिः सत्त्वैः गजसिंहादिजन्तुभिः उज्झितः त्यक्तः पूर्वमत्सरः अनादिवैरं यस्मिंस्तत्तथा । 'स्पृशति कलभः सैंहीं दंष्ट्रां मृणालधिया मुहुरि'त्यादितपोवनवृत्तान्तो[1]ऽत्र द्रष्टव्यः[2] । गुणानुरागादागच्छतां मुनीनामातिथ्यवेलायां यद्यदभीष्टं तत्तत् सर्वं तपोवनपादपेष्वासीदित्याह — द्रुमैरभीष्टप्रसवार्चितातिथीति । द्रुमैः देवीतपोवनोद्भवैर्वृक्षैः । अत्रार्चने देव्या एव कर्तृत्वेऽपि वृक्षाणां कर्तृत्वेनोपादानं तत्तदवसरे तत्तद्द्रव्योत्पादनेन वृक्षाणामेव प्राधान्यद्योतनार्थम् । अभीष्टैरिष्टतरैः कटुतिक्तमधुरादिषु द्रव्यविशेषेषु याद्दशान्यतिथीनामत्यन्तमिष्टानि, घर्मादिकालविशेषेषु याद्दशान्याकाङ्क्षितानि च, ताद्दशैः प्रसवैः फलपुष्पैः । 'प्रसवः पुष्पफलयोरि'ति भोजः । तैरार्चिताः पूजिता अतिथयः आगन्तुका यस्मिंस्तत् तथा । सायम्प्रातरवश्यकर्तव्यस्य होमस्य साधनभूतोऽग्निरपि तपश्चरणातिथिसत्कारादिकार्यान्तरव्याकुलयापि देव्या सावधानतया सम्भृतोऽभूदित्याह — नवोटजाभ्यन्तरसम्भृतानलमिति । नवस्याभिनवस्य उटजस्य पर्णशालायाः । 'पर्णशालोटजोऽस्त्रियामि'ति सिंहः[3] । अभ्यन्तरे अन्तराले । 'अभ्यन्तरं त्वन्तरालम्' इति सिंहः । अन्तर्भाग इत्यर्थः । सम्भृतः सम्यग्रक्षितः अनलः अग्निर्यस्मिंस्तत्तथा[4] । वर्षादिभयनिवृत्त्यर्थं नवत्वमुपात्तम् । सम्भृतानलत्वमपि तपोवनानां साधारणो धर्मः । पावनत्वोपपादने हेतुश्च 'गावो विप्रास्तथाग्निश्च यस्मिन् देशे प्रतिष्ठिताः । तं देशं पावनं विद्याद्' इति वचनात् ॥ १७ ॥

१ 'दिव' घ. पाठः. २.'व्यम्' घ. पाठः. ३.'त्यमरः।' घ. पाठः. ४. था। अत्र व' घ. पाठः.

यदा फलं पूर्वतपःसमाधिना
न तावता लभ्यममंस्त वाञ्छितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं
तपो महत् सा चरितुं प्रचक्रमे ॥ १८ ॥

(प्रकाशिका)

अथोत्साहस्य परां काष्ठां वर्णयितुमुपक्रमते —

यदेति । तावता तन्मात्रेण, तपोमात्रेणेत्यर्थः । आनुषङ्गिकस्य फलान्तरस्य प्रभावादेर्लाभाद् वाञ्छितमिति विशेषणम् । स्वशरीरानपेक्षणे[3] हेतुः सर्वसमेति । सर्वत्र प्रियाप्रियेषु समा निर्विशेषचित्ता ॥ १८ ॥

(विवरणम्)

अथेत्थमुपवर्णितस्योत्साहात्मकस्य वीरस्य परां काष्ठां वर्णयितुमुपक्रमते —

यदेति । यदा सा तावता समाधिना काङ्क्षितं फलं लभ्यं न अमंस्त, तदा स्वशरीरमार्दवम् अनपेक्ष्य महत् तपः चरितुं प्रचक्रमे । तावता तावन्मात्रेण । पूर्वोक्तपरिमाणेनेत्यर्थः । समाधिना तपसा काङ्क्षितं वाञ्छितं हरवशीकरणरूपं फलम् । आनुषङ्गिकाणां प्रभावादीनां फलान्तराणां तावन्मात्रेणैव तपसा लब्धत्वात् काङ्क्षितमिति विशेषणं प्रयुक्तम् । लभ्यं लब्धुं शक्यं न अमंस्त न कल्पितवती । तदा असाध्यत्वावगमसमनन्तरम् । स्वस्य शरीरस्य यन्मार्दवं शिरीषकुसुमादप्यधिकं सौकुमार्यं, तदपि अनपेक्ष्य अविचार्य महत् कठिनशरीरैरप्यत्यन्तदुश्चरं तपः चरितुं कर्तुं प्रचक्रमे आरेभे । शरीरमार्दवानपेक्षणे हेतुमाह — सर्वसमेति । सर्वत्र शीतोष्णप्रियाप्रियादिषु द्वन्द्वेषु समा तुल्यबुद्धिः । यदि काङ्क्षितं फलं दुर्लभं

१. 'पूर्वतपःसमाधि' मुद्रितकोशपाठः. २. 'काङ्क्षितं' मुद्रितकोशपाठः. ३. 'पेक्षणहे' क. ग. पाठः. ४. 'र्य' क. ख. ग. पाठः.

भवेत्, तर्हि किं ममानेन देहेनेति निश्चित्य क्रूरे तपसि सावधानचित्ता सा बभूवेत्यर्थः ॥ १८ ॥

क्लमं ययौ कन्दुकसेवयापि या
तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मधर्मि य-
न्मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥

(प्रकाशिका)

तथाविधया तया न केवलं तपः प्रक्रान्तम्, अपित्ववगाढं चेति सविस्मयमाह --

क्लममिति । अत्रेदमुत्तमित्याह — ध्रुवमिति । यद् वपुः काञ्चनपद्मधर्मि, तत् प्रकृत्या मृद्वपि ध्रुवं ससारमेवेत्यन्वयः । काञ्चनपद्मधर्मित्वस्य हेतोः ससारत्वेन साध्येन व्याप्तिर्दर्शिता । अर्थान्तरन्यासप्रकारश्चायम् ॥ १९ ॥

(विवरणम्)

न केवलं देवी दुश्चरे तपसि निश्चलं मनश्चकार, अपितु तपस्समुद्रावगाहनमेव कृतवतीति सविस्मयमाह

क्लममिति । या कन्दुकसेवया अपि क्लमं ययौ तया मुनीनां चरितं व्यगाह्यत । कन्दुकसेवया कौतुकमात्रारब्धया कन्दुकस्य सेवया कन्दुकाघातेनापि क्लमं ययौ शरीरसादमगात्, तया मुनीनां कठिनशरीराणां महर्षीणां चरितम् अत्यन्तदुश्चरतपश्चरणरूपो व्यापारः व्यगाह्यत अवजगाहे । यदत्र देव्या मृदुशरीरयापि स्थिरव्यवसायतया दुश्चरे तपसि प्रवृत्तं, तेनेद-

१. 'लीलया', २. 'निर्मितं मृदु' मुद्रितकोशपाठः. ३. 'पुः प्रकृत्या का' क. ख. पाठः. 'नथ' क. पाठः.

मिदानीं व्यवस्थितमित्याह — यद्वपुः काञ्चनपद्मधर्मि तत् प्रकृत्या मृदु अपि ध्रुवं ससारमेवेति । काञ्चनपद्मधर्मोऽस्यास्तीति काञ्चनपद्मधर्मि । काञ्चनमयं पद्मं काञ्चनपद्मम् । तच्च स्वर्गापगादिसमुद्भवम् । तस्य धर्मश्च मनोहरत्वम् । मनोहरं वपुः प्रकृत्या स्वभावतो मृदुत्वेन प्रतीयमानमपि नूनं ससारं शक्तिमदेव । अत्र काञ्चनपद्मधर्मित्वस्य हेतोः ससारत्वेन साध्येन व्याप्तिः प्रदर्शितेत्यर्थान्तरन्यासप्रकारभेद एवायम् ॥ १९ ॥

**शुचौ चतुर्णां ज्वलतां शुचिस्मिता**
**हविर्भुजां मध्यगता सुमध्यमा ।**
**विजित्य नेत्रप्रतिघातिनीं प्रभा-**
**मनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥**

(प्रकाशिका)

अथ तपःप्रकारानाह —

**शुचाविति** । शुचिर्ग्रीष्मः । विजित्य न्यग्भाव्य । प्रभाम् अर्थात् सवितुः । अनन्यदृष्टिर्निश्चलदृष्टिः । सवितात्र पञ्चमोऽग्निरिति पञ्चतपस्त्व-मुक्तम् ॥ २० ॥

(विवरणम्)

अथ तपःप्रकारा एव कथ्यन्ते । । तत्रादौ ग्रीष्मकृतं तपःप्रकारं दर्शयति —

शुचाविति । सा शुचौ ज्वलतां चतुर्णां हविर्भुजां मध्यगता नेत्रप्रतिघातिनीं प्रभां विजित्य अनन्यदृष्टिः सवितारम् ऐक्षत । शुचौ, शुचिशब्देनात्रावयवावयविनोः सम्बन्धनियमाद् ग्रीष्मो लभ्यते । शुचिमासे लब्धप्रतिष्ठस्य ग्रीष्मस्य तापाधिक्यप्रतीतिश्च फलम् । ज्वलतामिति वर्तमानप्रयोगेण निरन्तरज्वलनमुक्तम् । तेन तापाधिक्यं ध्वन्यते । चतुर्णां पुरतः पृष्ठे पार्श्वयोश्च स्थापितानाम् । हविर्भुजामग्नीनां मध्यगता मध्यभागं

गता सती। नेत्रप्रतिघातिनीम् अवेक्षकाणां नेत्राणि प्रतिहन्तुं शीलमस्या इति तथा। तादृशीं प्रभां रश्मिम्, अर्थात् सवितुरिति सिध्यति। विजित्य सततताभ्यासेन न्यग्भाव्य। अनन्यदृष्टिः निश्चलदृष्टिरित्यर्थः। उदयादारभ्यास्तमयपर्यन्तमन्यत् किमप्यनवलोकयन्ती सती। सवितारं सूर्यम् ऐक्षत विलोकितवती। अनेन पञ्चतपस्त्वमुक्तम्। 'ग्रीष्मे पञ्चाग्निमध्यस्थ' इति तल्लक्षणम्। तत्र चत्वारोऽग्नयः। पञ्चमस्त्वग्निः सूर्य एव। यथोक्तं माघेन—

"तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते।
पञ्चमः पञ्चतपसस्तपनो जातवेदसाम्॥" (स०. २. श्लो. ५१)

इति। स्थिरव्यवसायत्वात् तदवस्थायास्तस्याः पीडाभावमाह—शुचिस्मितेति। शुचि निर्मलं स्मितं मन्दहसितं यस्याः सा तथा। स्वाभाविकं शुचिस्मितत्वं तदानीमपि तथैवावस्थितमित्यर्थः। पीडायाः सम्भावनां दर्शयति—सुमध्यमेति। कृशावलग्नेत्यर्थः। सा कथमेतादृशीं पीडां सहेत, अहो स्थिरव्यवसायत्वमस्या इति भावः। अनेन कारणसामग्र्ये सत्यपि कार्यानुत्पत्तिर्ध्वन्यते॥ २०॥

**तथाभितप्तं सवितुर्गभस्तिभि-**
**र्मुखं तदीयं कमलश्रियं दधौ।**
**अपाङ्गयोः केवलमस्य दीर्घयोः**
**शनैः शनैः श्यामिकया कृतं पदम्॥ २१॥**

(प्रकाशिका)

तत्र विषादाद्यभावमाह—

तथेति। तथा तेन निश्चले(ल[1])निरीक्षणप्रकारेण। कमलश्रियं दधौ

1. 'लनि' ख. ग. पाठः., 'लदृष्टिनि' घ. पाठः.

उज्ज्वलमेवाभवत् । अपाङ्गेति ससारत्वादाननेऽवकाशमलभमाना श्यामिका मृदुतरमपाङ्गमेवाश्रितवतीत्यर्थः। तच्च शोभावहमेवेति भावः॥ २१ ॥

(विवरणम्)

तादृशे तपसि वर्तमानाया देव्या न केवलं पीडाभावो जातः, अपितु प्रसादहेतुकमौज्ज्वल्यमेवाभूदित्याह

तथेति। सवितुः गभस्तिभिः तथा अभितप्तं तदीयं मुखं कमलश्रियं दधौ। सवितुः सूर्यस्य गभस्तिभिः रश्मिभिः तथा पूर्वोक्तप्रकारेण अभितप्तं नितरां तप्तं तदीयं मुखं देव्या वदनं कमलस्य पद्मस्य श्रियं शोभाम्। 'श्रीरिन्दिरायां शोभायाम्' इ(ति ? त्य) जयः। दधौ दधार। यथा कमलं सूर्यरश्मिसंयोगे नितरां शोभते, तथास्या वदनमपीति भावः। न केवलं मनोहरत्वात् तद्वदनस्य कमलसाम्यम्, अपितु सूर्यरश्मिसंयोगे नितरामौज्ज्वल्याच्चेत्यर्थः। वदने निरवकाशा श्यामिका पुनस्तदीयमपाङ्गमेवाससादेत्याह — श्यामिकया केवलम् अस्य अपाङ्गयोः शनैश्शनैः पदं कृतम् इति। श्यामिकया कालिम्ना। केवलशब्देन ससारे वदने निरवकाशत्वमुक्तम्। अस्य वदनस्य अपाङ्गयोः कटाक्षयोः। तयोरतिमृदुत्वादिति भावः। अपाङ्गयोर्मुखसम्बन्धित्ववचनेन यथा कश्चित् प्रबले निजशत्रौ अवकाशमलभमानस्तदीयं कञ्चन पीडयितुमारभते, तथा श्यामिकापि वदनेऽवकाशमलभमाना तदीयत्वादपाङ्गयोर्निजशक्तिं प्रकटयामासेति प्रत्यनीकालङ्कारो व्यज्यते। 'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकमि'ति सूत्रम्। तयोरपि न झटिति पदं कृतमित्याह — शनैश्शनैरिति। द्विर्वचनेनातिमान्द्यमुक्तम्। तेन च मृदुतरयोरनयोरपि ससारत्वं ध्वन्यते। पदम् अवस्थानं कृतम्। अपाङ्गयोस्तु सापि श्यामिका शोभावहैव। श्यामिकायास्तदपाङ्गयोर्विशेषेण शो-

१. 'द्वदने' ख. घ. पाठः.

भावहत्वमाह — दीर्घयोरिति । अनेन 'गुणिनां गुणहानिराहिता या रिपुणा सैव गुणान्तरं प्रसूते' इति न्यायो व्यज्यते ॥ २१ ॥

**अयाचितोपस्थितमम्बु केवलं**
**रसात्मकस्योडुपतेश्च रश्मयः ।**
**बभूव तस्याः खलु पारणाविधि-**
**र्न वृक्षवृत्तिव्यतिरिक्तसाधनम् ॥ २२ ॥**

(प्रकाशिका)

तत्र शरीरयात्रामाह

**अयाचितेति** । अयाचितोपस्थितमम्बु मेघजलम् । रसोऽमृतम् । पारणाविधिः 'पार समाप्ति'त्यस्मात् 'ण्यासश्रन्थो युच्' (३.३.१०७) स्त्रियाम् । व्रतसमाप्तिविधिरित्यर्थः । तथा चोपोषितभोजनं लक्ष्यते । वृक्षाणां वृत्तिर्जीविका तादृशी वृत्तिः । तपोविशेषोऽत्र वृक्षवृत्तिशब्देनोच्यते ॥२२॥

(विवरणम्)

तदवस्थाया देव्याः शरीरयात्राप्रकारमाह —

अयाचितेति । तस्याः खलु केवलम् अयाचितोपस्थितम् अम्बु रसात्मकस्य उडुपतेः रश्मयः च पारणाविधिः बभूव । खलुशब्दो वाक्यालङ्कारे । केवलशब्दः साधनान्तरव्यवच्छेदार्थः । अयाचितमेवोपस्थितं प्राप्तम् अयाचितोपस्थितं, तादृशमम्बु मेघजलम् । रसात्मकस्य अमृतस्वरूपस्य । अनेन तद्रश्मीनां पारणाविधिसाधकत्वमुक्तम् । उडुपतेश्चन्द्रस्य रश्मयः किरणाः । चशब्दस्तदुभयसमुच्चयार्थः । पारणाविधिः 'पार समाप्ति'त्यस्माद् धातोः 'ण्यासश्रन्थो युच्' इति युचि कृते स्त्रियां पारणारूपसिद्धिः । सैव विधिः व्रतसमाप्तिरित्यर्थः । तेन चोपोषितभोजनं लक्ष्यते । घर्मकालपर्य-

१. 'किल पा', २. 'नः' मुद्रितकोशपाठः. ३. 'प्तिविधिरि' क. ख. ग. पाठः.

न्तमुपोषिताया देव्यास्तदवसानसुलभानि मेघजलानि, दिवसावसानपर्यन्त मुपोषितायास्तु निशायां निशाकररश्मयश्च पारणाविधिर्बभूवेत्यर्थः । किं बहु नेत्याह — वृक्षवृत्तिव्यतिरिक्तसाधनं न इति । वृक्षाणां वृत्तिर्जीविका, ततो व्यतिरिक्तम् अधिकं यत् साधनं फलमूलादि, तन्न पारणाविधिर्बभूवेत्यर्थः अनेनातिदुश्चरो वृक्षवृत्तिरूपस्तपोविशेषो दर्शितः । अनेन श्लोकेन सर्वर्तुषु देव्याः शरीरयात्राविधिरुक्त इति नात्र मेघजलवर्णने काचिदनुपपत्तिः ॥२२॥

निकामतप्ता द्विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन सा ।
तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३ ॥

प्रकाशिका

निकामेति । नभश्चरो वह्निरादित्यः । नवैर्वर्षारम्भभाविभिः । तस्मात् प्रागुक्तं मेघाम्बु वार्षिकमनुसन्धेयम् । ऊष्माणं बाष्पम् । 'ग्रीष्मोष्णबाष्पा ऊष्माणः' इति सिंहः । ऊर्ध्वगमूर्ध्वदेशलक्ष्यमित्यर्थः ॥ २३ ॥

( विवरणम् )

इत्थमुपवर्णितं ग्रीष्मकालकृतं तपो वर्षारम्भवृत्तान्तकथनेनोपसंहरति—

निकामेति । नभश्चरेण इन्धनसम्भृतेन च द्विविधेन वह्निना निकामतप्ता तपात्यये नवैः वारिभिः उक्षिता सा भुवा सह ऊर्ध्वगम् ऊष्माणम् अमुञ्चत् । नभसि आकाशे चरतीति नभश्चरो वह्निरादित्यः । पञ्चतपसि पञ्चमाग्नित्वेन प्रसिद्धत्वादादित्यस्य वह्नित्वनिर्देशः । तापाधिक्यप्रतीतिश्च

मुद्रितकोशपाठः

इदं मुद्रितामरकोशे न दृश्यते । सिंहव्याख्यायां तु दृश्यते ।

फलम् । इन्धनैः सम्भृतो वर्धितो वह्निरिन्धनसंभृतः । इत्थं द्विविधेन वह्निना भृशं तप्ता सती पुनश्च तपात्यये ग्रीष्मावसाने नवैर्वर्षारम्भसम्भूतैः वारिभिः जलैः उक्षिता सिक्ता च सती सा भुवा सर्वंसहया सह । ऊर्ध्वगम् उर्ध्वं गच्छतीत्यूर्ध्वगः, तम् । ऊर्ध्वदेशे धूमाकारेण लक्ष्यमित्यर्थः । ऊष्माणं बाष्पम् । 'ग्रीष्मोष्णबाष्पा ऊष्माण' इत्यमरः । अमुञ्चद् मुक्तवती । ग्रीष्मकाले तप्ता वर्षारम्भे जलैरुक्षिता च सती पृथिवी यथा बाष्पं मुञ्चति, तथेयमपीत्यर्थः । तत्र निकामतप्तत्वं हेतुः । तेन च शरीरे ममत्वबुद्धिविरहो द्योत्यते, तेन च तपस्येकाग्रत्वम् । अत्र सहोक्तिरलङ्कारः । 'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति ॥ २३ ॥

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः**
**पयोधरोत्सङ्गनिपातचूर्णिताः ।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे**
**चिरेण नाभिं प्रथमोदबिन्दवः ॥ २४ ॥**

(प्रकाशिका)

इयत्पर्यन्तं ग्रैष्मं तप उक्त्वा वार्षिकं तदाह —

**स्थिता इति ।** अत्र पक्ष्मसु स्थिता इति तेषां घनत्वात्, ताडिताधरा इति पल्लवसाम्यात्, पयोधरोत्सङ्गनिपातचूर्णिता इति तत्काठिन्याद्, वलीषु स्खलिता इति तद्वैषम्यादित्यनुसन्धेयम् । व्यवधानबाहुल्याच्च चिरेण प्राप्तिः । नाभेः प्राप्तत्वं निम्नत्वात् । प्रथमानामेवैवंभावात् प्रथमशब्दः ॥ २४ ॥

(विवरणम्)

इत्थं ग्रीष्मकालकृतं तप उपवर्ण्य वार्षिकं तपो वर्णयितुमुपक्रमते—

**स्थिता इति ।** प्रथमोदबिन्दवः चिरेण तस्याः नाभिं प्रपेदिरे । प्रथमाः

१. 'ग्रैष्मिकं त' इ. पाठः. २. 'क्रमात्' इ. पाठः. ३. 'त्सेधानि' इ. पाठः. ४, 'चिरं' ख. पाठः.

वर्षारम्भसमयभाविनः । उदबिन्दवः 'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवध गाहेषु च' (६. ३. ६०) इत्युदकशब्दस्योदादेशः । उदकबिन्दव इत्यर्थः चिरेण महता कालेन । तस्याः नाभिं प्रपेदिरे प्राप्ताः । अत्र नाभे प्राप्यभूमित्वानिर्देशात् तस्याः नितान्तगम्भीरत्वं द्योत्यते, तेन च नाभेः सौ ष्ठवम् । एवमेव सर्वावयवानामपि सौष्ठवप्रतिपादनमुखेन जलबिन्दूनां नाभे श्चिरकालप्राप्तौ हेतुमाह चतुर्भिर्विशेषणैः । तत्र शिरसि पतितानां जलबिन्दून नयनप्राप्त्यनन्तरं तत्र क्षणावस्थानमाह— पक्ष्मसु क्षणं स्थिता इति । अक्षि रोमसु क्षणकालमवस्थिताः । अनेन पक्ष्मणां निबिडत्वमुक्तम् । तच्च सौष्ठवद्यो तकम् । पुनश्च क्रमेणाधरप्राप्तिमाह — ताडिताधरा इति[1] । पयोधरयोः कुचयोः उत्सङ्गे उपरिभागे यो निपातः पतनं, तेन चूर्णिताः चूर्णतां प्राप्ताः । पयोधरो- त्सेधनिपातेति पाठे पयोधरोत्सेधः पयोधराभोगः । अत्युच्चस्थानादतिकठि- नस्तनतटनिपातेन परमाणुतां प्राप्ता इत्यर्थः । पुनश्च सम्भूय अधोगमनारम्भे वलीषु स्खलिताः । वलीषु वलित्रये स्खलिताः स्खलनं प्राप्ताः । अनेन वलीनां सोपानवद् विषमत्वमुक्तम् । अनेन क्रमप्राप्तिवर्णनेन अक्ष्यादितत्तदवयवस्थितानां बिन्दूनां क्लेशकरत्वाद् अवश्यंभाविनः करपरिमार्जनस्याभावो द्योत्यते, तु चित्तैकाग्र्यम् । आतपादिशोषिते शरीरे प्रथमबिन्दूनामेव तथाप्राप्त्यु- तेः प्रथमशब्दप्रयोगः ॥ २४ ॥

**शिलाशयां तामनिकेतवासिनीं**
**निरन्तरास्वन्तरवातवृष्टिषु ।**
**व्यलोकयन्नुन्मिषितैस्तडिन्मयै-**
**र्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥ २५ ॥**

(प्रकाशिका)

**शिलाशयामिति** । निरन्तरासु निबिडधारासु । अन्तरे वाता

१. 'भी' क. पाठः.

'ताडितो व्यथित अधर ओष्ठो यैस्तथोक्ताः । अनेनाधरस्य पल्लवसाम्यमुक्तम् । पुन- श्चाधोगमनमाह— पयोधरोत्सङ्गनिपातचूर्णिता इति ।' एवञ्जातीयकं किमपि व्याख्यानमत्रापे- क्षितं भाति ।

यासां ता अन्तरवाता वृष्टयः । उन्मिषितैरक्षिपक्ष्मोद्घाटनैः । साक्ष्ये साक्षित्वे । समक्षदर्शी साक्षी । साक्ष्यं च 'आदित्यचन्द्रावनलो[1]ऽनिलश्च' इत्यागमसिद्धम् । व्यलोकयन्निवेत्यन्वयः । एवंविधे महातपसि यत् क्षपाणां साक्ष्यं, तत् तडिदुन्मेषैः स्फुटमिवासीदित्यर्थः ॥ २५ ॥

(विवरणम्)

अथ वार्षिकं तपःप्रकारमेवाह —

शिलाशयामिति । महातपस्साक्ष्ये स्थिताः क्षपाः अन्तरवातवृष्टिषु निरन्तरासु शिलाशयाम् अनिकेतवासिनीं तां तडिन्मयैः उन्मिषितैः व्यलोकयन्निव । महत् तपो महातपः । 'आन्महतः–' (६.३.४६) इत्यादिनात्वम् । तत्र साक्ष्यं साक्षित्वम् । 'समक्षदर्शी साक्षी स्यादि'ति भोजः । तस्मिन् स्थिताः क्षपाः रात्रयः । रात्र्यादीनां कर्मसाक्षित्वमुक्तं महाभारते —

"आदित्यचन्द्रावनलोऽनिलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥"

इति । अन्तरवातवृष्टिषु अन्तरे सकलजलधारापतनानामन्तराले वाता यासां तादृशीषु वृष्टिषु । अनवरतप्रवृत्तमारुतास्वित्यर्थः । अनेन अत्यन्तासह्यत्वमुक्तम् । निरन्तरासु अन्तररहितासु । धाराणां निबिडत्वादनुपलक्ष्यपरस्परविभागास्वित्यर्थः । सन्ततप्रवृत्तास्विति वा । शिलायां शेते इति शिलाशया, ताम् । अनिकेतवासिनीं निकेते गृहे वस्तुं शीलमस्या इति निकेतवासिनी, तथाभूता न भवतीति अनिकेतवासिनी, ताम् । पर्णशालामात्रेणापि रहिते शिलाप्रदेश एव स्थित्वा देव्याः प्रावृषि तपश्चरणम् । निशासु यादृच्छिकं शयनमपि तत्रैवेत्यर्थः । अनेन विलोकनसौकर्यं ध्वन्यते । तथाभूतां तां तडिन्मयैः विद्युद्रूपैः उन्मिषितैः अक्षिपक्ष्मोद्घाटनैः व्यलोकयन् अव-

1. 'लानिलौ न' क. ग. पाठः.

लोकयामासुरिव । एवंभूते महातपसि यदागमप्रसिद्धं साक्षित्वं क्षपाणां, तत् तत्कालसुलभैस्तडिदुन्मेषमयैरवलोकनव्यापारैः स्फुटतामगमादिवेत्यर्थः ॥२५॥

निनाय चात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥

(प्रकाशिका)

अथ शैशिरं तप आह —

निनायेति । सहस्यरात्रीश्चेत्यन्वयः । हिममुत्किरतीति हिमोत्किरः । 'इगुपध—' (३. १. १३५) इत्यादिना कः । सहस्यमासेन शिशिरर्तुरुपलक्ष्यते । उदवास उदकवासः । उदकस्य 'पेषंवासवाहनधिषु च' (६. ३. ५८) इत्युदादेशः । अत्र मनुः— 'आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः'(अ.६.श्लो.२३) इति । चक्रवाकविषयया कृपया स्वायासापरिगणनं द्योत्यते । कृपा च तपसोऽङ्गम् ॥ २६ ॥

(विवरणम्)

अथ शरदः शीतोष्णसमकालत्वाद् हेमन्तस्य शैत्याधिक्याभावाच्च तत्कालकृतस्य तपसो विस्मयकरत्वाभावात् तदुपेक्ष्य शिशिरकालकृतं तपःप्रकारमाह —

निनायेति । सा उदवासतत्परा सहस्यरात्रीः च निनाय । उदवासे उदकवासे । 'पेषंवासवाहनधिषु च' इत्युदकशब्दस्योदादेशः । तत्परा तात्पर्यवती सती सहस्यरात्रीः । सहस्यो हेमन्तान्त्यमासः । तेन शिशिरर्तुरुपलक्ष्यते । हेमन्ते जलाधिवासविधानाभावात् । यथाह मनुः— "आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः" इति । शिशिरकाल-

१. 'सा' मुद्रितकोशपाठः. २. 'र उप' ङ. पाठः.

रात्रीरित्यर्थः । रात्रौ शैत्याधिक्याद् अत्यन्तदुस्सहत्वप्रतिपादनाय रात्रिपदोपादानम् । चकारः पूर्वोक्तसकलकालसमुच्चयार्थः । निनाय अत्यवाहयत् । ननु कोऽत्र विस्मय इत्यत्राह—अत्यन्तहिमोत्किरानिला इति । अत्यन्तं हिमम् उत्किरन्ति विक्षिपन्तीति अत्यन्तहिमोत्किराः । 'इगुपधज्ञाप्रीकिरः कः' इति कः । तादृशा अनिला वायवो यासु तास्तथा । अथ देव्याः तपसोऽङ्गभूतं कृपालुत्वं वर्णयति—पुरः वियुक्ते चक्रवाकयोः मिथुने कृपावतीति । पुरः जले वर्तमानाया आत्मनः पुरोभाग एव । अनेन कृपोद्बोधहेतुभूते दर्शने सौकर्यमुक्तम् । वियुक्ते परस्परवियोगं प्राप्ते चक्रवाकयोः मिथुने द्वन्द्वे । 'स्त्रीपुंसौ मिथुनं द्वन्द्वमि'त्यमरः । लोकप्रसिद्धश्च रात्रौ चक्रवाकयोर्वियोगः । कृपावती दयावती । अत्र चक्रवाकविषयायाः कृपायाः प्रतिपादनेन निजायासापरिगणनं द्योत्यते । दयापरत्वं च तपस्विनां प्रसिद्धम् । दयाया उद्बोधकं हेतुमाह—परस्पराक्रन्दिनीति । परस्परं चक्रवाकी चक्रवाकं चक्रवाकस्तु चक्रवाकीम् इत्यन्योन्यम् आक्रन्दितुम् आभीक्ष्ण्येन क्रन्दितुं शीलमस्येति तथा ॥ २६ ॥

**मुखेन सा पद्मसुगन्धिना निशि**
**प्रवेपमानाधरपत्रशोभिना ।**
**तुषारवृष्टिक्षतपद्मसम्पदां**
**सरोजसन्तानमिवाकरोदपाम् ॥ २७ ॥**

(प्रकाशिका)

**मुखेनेति** । अधरस्य पत्ररूपणान्मुखस्य पद्मरूपणमार्थमित्येकदेशविवर्तीदं रूपकम् । सरोजसन्तानं सरोजाविच्छेदम् । अत्र शिशिर-

१. 'रं वि' घ. पाठः. २. 'कत्रियो' ख. ग घ. पाठः. ३. 'न्धा' मुद्रितकोशपाठः. ४. 'दम् । स' ङ. पाठः.

कृतं पत्राकृतेरधरस्य प्रवेपनम् । मुखस्य सुगन्धित्वं प्रसिद्धम् । कान्तिमत्त्वं च सरोजसन्तानकरणोत्प्रेक्षाहेतुः[2] ॥ २७ ॥

(विवरणम्)

इत्थमुग्रे तपसि वर्तमानाया अपि देव्या वदनं उज्ज्वलमेवाभूदितीममर्थं भङ्ग्यन्तरेणाह—

मुखेनेति । सा निशि पद्मसुगन्धिना मुखेन तुषारवृष्टिक्षतपद्मसम्पदाम् अपां सरोजसन्तानम् अकरोद् इव । सा उदवासतत्परत्वाद् उदके मुखमात्रदृश्या पार्वती । निशि शिशिररात्रौ । अनेन सरोजसन्तानकरणयोग्यता दर्शिता । पद्मसुगन्धिना पद्मवत् सुगन्धिना । शोभनो गन्धो यस्य तत् सुगन्धि । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः'(५.४१३५)इतीत् । मुखस्य सुगन्धित्वं प्रसिद्धं 'पद्मिनी पद्मगन्धा स्यादि'त्यादिषु । उक्तञ्च रामायणे—'निश्वास इव सीताया वाति वायुर्मनोरमः ।' इति । तुषारवृष्ट्या हिमजलवर्षेण क्षता नष्टा पद्मसम्पत् पङ्कजसमृद्धिः यासां तादृशीनाम् । अपां जलानाम् । सरोजसन्तानं सरोजानां सन्तानम् अविच्छेदम् अकरोत् कृतवतीव । तुषारवर्षादितरेषु सरोजेषु विनष्टेषु देव्या वदनसरोजमेव तदा शिशिररात्रौ जले दृष्टमासीत् । तेन च देवी कृपावशादपां सरोजसन्ततिविच्छेदाभावार्थमेकं सरोजं निजमुखेनैव कृतवतीवेति जनानामुत्प्रेक्षा जातेति भावः । मुखस्य सरोजसाम्यमेव स्फुटयति — प्रवेपमानाधरपत्रशोभिनेति । प्रवेपमानेन शीतवशात् प्रकर्षेण वेपमानेन अधरेणैव पत्रेण दलेन शोभितुं शीलमस्येति तथा । सरोजपत्रं हि वातवशात् कम्प्रं भवति । अत एव 'अत्यन्तहिमोत्किरानिला' इत्युक्तम् । अत्र कम्प्रदलत्वं कम्रस्वरूपत्वं सुगन्धित्वं च सरोजसन्तानोत्प्रेक्षानिमित्तम् । अधरस्य पत्ररूपणान्मुखस्य पद्मरूपणमर्थादायातमित्येकदेशविवर्ति रूपकमिदम् ॥ २७ ॥

१. 'नोत्प्रेक्षाकरणहेतुः ॥' ख. ग. पाठः. २. 'कारणम् ॥' क. पाठः. ३. 'न्धा' क. पाठः.

**स्वयंविशीर्णद्रुमपर्णवृत्तिता**
**परा हि काष्ठा तपसस्तया पुनः ।**
**तदप्यपाकीर्णमतः प्रियंवदां**
**वदन्त्यपर्णेति च तां पुराविदः ॥ २८ ॥**

(प्रकाशिका)

तपोन्तरमाह —

**स्वयमिति** । काष्ठा उत्कर्षः । अत्र मनुः—"कालपक्वैः स्वयंशीर्णैर्वैखानसमते स्थितः" (अ.६.श्लो.२१) इति । तदपि तादृशं पर्णमपि अपाकीर्णं त्यक्तम् । प्रियंवदा इति पाठः । अपर्णा अपास्तपर्णा । चशब्दः पार्वत्याद्यपेक्षः ॥ २८ ॥

(विवरणम्)

अथात्यन्तदुश्चरं तपोन्तरमाह—

**स्वयमिति** । स्वयंविशीर्णद्रुमपर्णवृत्तिना हि तपसः परा काष्ठा । तया पुनः तद् अपि अपाकीर्णम् । अतः पुराविदः ताम् अपर्णा इति च वदन्ति । कालपाकवशात् स्वयमेव विशीर्णैः पतितैः द्रुमाणां वृक्षाणां पर्णैः पत्रैः वृत्तिर्जीविका यत्र तपसि, तस्य भावस्तत्ता । सा हि तपसः परा काष्ठा । हिशब्दः प्रसिद्धौ । प्रसिद्धिश्च 'कालपक्वैः स्वयंशीर्णैः वैखानसमते स्थितः' इत्यादिषु मन्वादिवचनेषु च द्रष्टव्या । परा उत्कृष्टा, उत्कर्षान्तररहितेत्यर्थः । काष्ठा उत्कर्षः । 'काष्ठोत्कर्षे स्थितौ दिशि'त्यमरः । तया पुनः । पुनश्शब्दो विशेषमाह । तत् स्वयंविशीर्णद्रुमपर्णमपि अपाकीर्णं त्यक्तम् । अतः पर्णत्यागादेव हेतोः । पुराविदः पूर्ववृत्तान्तवेदिनः । पर्णमस्या नास्तीत्यनया व्युत्पत्त्या तामपर्णेति च वदन्तीत्यर्थः । आभिजात्यादिश्लाघिबन्धुजनोदीरितपार्वत्यादिनामसमुच्चयार्थश्चशब्दः । अपर्णेति वादिनां पुराविदां पार्वतीत्यादिवादिभ्यो

१. 'दां' मुद्रितकोशपाठः. २. 'ति । देव्या ता' इ. पाठः.

बन्धुजनेभ्यो विशेषमाह—प्रियंवदा इति । प्रियम् इष्टं वदन्तीति तथा । आत्मनैव कृतस्यात्यन्तदुश्चरस्य तपसः स्तुतेस्तेषां विशेषतः प्रियंवदत्वमिति भावः । प्रियंवदामिति वा पाठः । 'प्रियवशे वदः खच्' (३. २. ३८) 'अरुर्द्विषदजन्तस्य मुम्' (६. ३. ६७) ॥ २८ ॥

**मृणालिकापेलवमेवमादिभि-**
**र्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।**
**तपः शरीरैः कठिनैरुपार्जितं**
**तपस्विनां दूरमधश्चकार सा ॥ २९ ॥**

(प्रकाशिका)

अथ तपोनिष्पत्तिमाह—

**मृणालिकेति** । एवमादिभिरेवंप्रकारैः । कठिनैः शरीरैरुपार्जितं तप इत्यन्वयः ॥ २९ ॥

( विवरणम् )

अथैवं क्रियमाणस्य तपसः सिद्धिमाह—

**मृणालिकेति** । मृणालिकापेलवं तद् अङ्गम् एवमादिभिः व्रतैः अहर्निशं ग्लपयन्ती सा तपस्विनां कठिनैः शरीरैः उपार्जितं तपः दूरम् अधश्चकार । मृणालिका बालमृणाली । अल्पार्थे कः । तद्वत् पेलवं मृदु । अनेन हिमजल-सम्पर्काद्यसहनत्वमुक्तम् । तद् लोकोत्तरम् । अनेन प्रथमसर्गप्रपञ्चितं सकलमपि सौकुमार्यमनुस्मारितम् । अङ्गं शरीरम् । एवमादिभिः पूर्वोक्तप्रकारैः व्रतैर्नियमैः । अहश्च निशा च अहर्निशम् । समित्कुशमितिवदेकवद्भावो नपुंसकत्वं च । अत्यन्तसंयोगे द्वितीया । सर्वदेत्यर्थः । ग्लपयन्ती शोषयन्ती । तपस्विनां महर्षीणाम् । कठिनैः जन्मतःप्रभृति परिचयवशादातपादिसं-सर्गसहैः शरीरैः । उपार्जितं सञ्चितम् । तपः दूरमधश्चकार ईषत्साधर्म्येणापि

१. 'तः स्वम' मुद्रितकोशपाठः.

रहितं यथा भवति तथात्यन्तमधःकृतवती । अनेन तपस्सिद्धिकथनेन तपोवर्णनमुपसंहृतमित्यवसेयम् ॥ २९ ॥

अथाजिनाषाढधरः प्रगल्भवाग्
ज्वलन्निव ब्रह्ममयेन वर्चसा ।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबन्धः प्रथमाश्रमो यथा ॥ ३० ॥

(प्रकाशिका)

अथैवंविधतपःसमुद्बोधितदयाशक्तिसन्धुक्षितनैसर्गिकानुरागस्य तदुभयपरायत्तस्य सतो भवस्य परमेष्ठ्यालिकस्य छद्मना स्वयमभियोगवृत्तान्तप्रकारं प्रपञ्चयति—

अथेति । आषाढो व्रतिनां दण्डः । अनेन ब्रह्मचर्यं सूच्यते । प्रगल्भवाक् कः कोऽत्र भोः! क्व वर्तते सा तथातपोनिष्ठा पर्वतराजपुत्रीत्यादि प्रगल्भं भाषमाण इत्यर्थः । दक्षिणावर्तस्तु — संस्कृतवागिति व्याख्यायात्र श्रुतिं च प्रमाणमाह । ब्रह्म वेदः । ब्रह्ममयेन अध्ययनप्रकर्षजनितेनेत्यर्थः । कश्चिदिति लेशतोऽपि प्रत्यभिज्ञासम्भावनां निराकरोति । जटिलो जटावान् । ब्रह्मचारिणोऽपि जटाधारणमस्ति । अत्र मनुः—"मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः" (अ.२.श्लो. २१९) इति । शरीरं बध्नातीति शरीरबन्धः । 'कर्मण्यण्' (३.२.१) । मूर्तिमानित्यर्थः । प्रथमाश्रमो ब्रह्मचर्यम् । अस्योपक्रमस्य व्याजोपहितत्वं स्वयमेवाग्रे प्रकटीकरिष्यति । व्याजश्च देव्या भावपरीक्षार्थम् ॥ ३० ॥

(विवरणम्)

अथैवं कृतबहुविधतपःप्रकर्षसन्धुक्षितप्राक्तननैसर्गिकानुरागस्य.

"आयासितानामशरीरवाणैर्नितम्बिनीनां परिदेवितानि ।
आत्मार्थमाकर्णयतां हि यूनां समागमो नाम सुखान्तरायः ॥"

१. 'तेजसा', २. 'द्धः' मुद्रितकोशपाठः. ३. 'यास' ङ. पाठः. ४. 'द' ङ. पाठः. 'चाप्रमाणयन् । ब्र' ङ. पाठः. ६. 'धरः' ग. पाठः.

इति न्यायेन 'न कामवृत्तिर्वचनीयमीक्षते' इत्यादिवचनानि श्रोतुकामस्य भगवतः परमेश्वरस्य व्याजेनाभियोगप्रकारं वर्णयितुमुपक्रमते —

अथेति। अथ कश्चित् तपोवनं विवेश। अथ तपस्सिध्यनन्तरम्। अनेन फलप्राप्तेरासन्नत्वमुक्तम्। कश्चित् कदाचिदप्यदृष्टचरत्वात् प्रत्यभिज्ञागन्धेनापि रहित इत्यर्थः। अनेन अपरिचितत्वकथनेन देवीवृत्तान्ताना-मज्ञातत्वात् करिष्यमाणानां प्रश्नानां सावकाशत्वमुक्तम्। तपोवनं, देव्या इत्यर्थात् सिध्यति। तपसे वनं तपोवनम्। विवेश प्रविष्टोऽभूत्। अदृष्टचरत्वेन नामगोत्राद्यस्मरणेऽपि वेषविशेषाद् ब्रह्मचारित्वमात्रं प्रस्फुटमभूदित्याह — अजिनाषाढधर इति। धरतीति धरः। 'धृञ् धारणे' इत्यस्माद् धातोः पचाद्यच्। अजिनाषाढयोर्धर इति विग्रहः। अजिनं कृष्णाजिनम्। आषाढः पलाशदण्डः। 'पालाशो दण्ड आषाढ' इत्यमरः। अनेन ब्राह्मणत्वमपि विज्ञातं, ब्राह्मणानामेव पलाशदण्डविधानात्। अभ्यागमनवेलायामात्मनिवेदनप्रकार-माह — प्रगल्भवागिति। प्रगल्भा प्रागल्भ्ययुक्ता वाग् वाणी यस्य स तथा। कः कोऽत्र भोः! क वर्तते सा तपसि निष्णाता शैलाधिराजतनयेत्यादि प्रगल्भं भाषमाण इत्यर्थः। प्रगल्भशब्देनात्र वचसो लोकोत्तरत्वमुक्तम्। रूपस्यापि लोकोत्तरत्वमाह—ब्रह्ममयेन वर्चसा ज्वलन्निवेति। ब्रह्ममयेन, ब्रह्म वेदः। तेन अध्ययनं लक्ष्यते। अध्ययनमयेन वेदाध्ययनप्रकर्षजनितेनेत्यर्थः। वर्चसा तेजसा ज्वलन्निव दीप्यमान इव। परितः प्रसर्पन्त्या शरीरसुषमया जाज्वल्यमान इवेति भावः। शोभाधिक्यमुत्प्रेक्षाहेतुः। भगवतो ब्रह्मचारित्वावलम्बनेऽपि प्राक्तनं जटाधरत्वं तथैवावस्थितमित्याह — जटिल इति। जटावानित्यर्थः। ब्रह्मचारिणामपि जटाधरत्वमुक्तं मनुना — "मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाधरः" इति। तद्गुणानां पृथक् पृथग् वर्णनस्य दुष्करत्वात् समासतो वर्णयति — प्रथमाश्रमः शरीरबन्धः यथा इति। प्रथमाश्रमो ब्रह्मचर्याश्रमः। "ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः" (मनु. अ. ६. श्लो. ८७) इत्यादिषु स्मृतिषु ब्रह्मचर्याश्रमस्यैव प्राथम्याद् अवलम्ब-

नक्रमे प्राथम्याच्च । शरीरं बध्नातीति शरीरबन्धः । 'कर्मण्यण्' । यथाशब्दोऽयमुत्प्रेक्षाद्योतकः । ब्रह्मचर्याश्रमः स्वयमेव मूर्तिमानिव लक्ष्यमाण इत्यर्थः । लोकोत्तरप्रभावत्वमुत्प्रेक्षाहेतुः । अत्र भगवतो देवीहृदयगतस्य निगूढस्याप्यभिप्रायस्य श्रोतुकामत्वाद् ब्रह्मचारित्वावलम्बनम् । युवजनदर्शने हि लज्जया सर्वं न भाषते । अवज्ञया वचनाभावं परिहर्तुं तेजस्वित्वावलम्बनमित्यवसेयम् ॥ ३० ॥

**तमातिथेयी बहुमानपूर्वया**
**सपर्यया प्रत्युदियाय पार्वती ।**
**भवन्ति साम्येऽभिनिविष्टचेतसां**
**वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ ३१ ॥**

(प्रकाशिका)

तद्विषये देव्याः प्रतिपत्तिमाह —

**तमिति । आतिथेयी अतिथिषु साध्वी । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (४.४.१०४) इति ढञ् । बहुमानः श्रद्धा । अतिगौरवाः 'स्वती पूजायामि'ति समासः ॥ ३१ ॥**

( **विवरणम्** )

अथ देव्यास्तद्विषयां प्रतिपत्तिमाह —

तमिति । पार्वती बहुमानपूर्वया सपर्यया तं प्रत्युदियाय । अत्र पार्वतीत्यनेन महाकुलोद्भूतत्वादस्यास्तथाविधातिथिसत्कारप्रावीण्यं ध्वन्यते । बहुमानः श्रद्धा पूर्वं यस्याः तादृश्या । सपर्यया पूजया । 'पूजार्हणा सपर्या च' इति भोजः । तं ब्रह्मचारिणम् । प्रत्युदियाय प्रत्युज्जगाम । सपर्यया प्रत्युद्गमनानन्तरमेव पूजाविधानम् । युक्तं चैतदस्या इत्याह — आतिथेयीति । अतिथिषु साध्वी । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । 'टिड्ढाणञ्' (४.१.१५)

१. 'पि नि' मुद्रितकोशपाठः. २. 'तम् । आगमनान' घ. पाठः. ३. 'ञ । ञ' घ. पाठः.

इत्यादिना ङीप्। उक्तमर्थमर्थान्तरन्यासेन समर्थयते—साम्ये अभिनिविष्टचेतसां वपुर्विशेषेषु अतिगौरवाः क्रिया भवन्तीति। साम्ये समत्वे अभिनिविष्टं स्थिरं चेतो येषां तेषाम्। रागद्वेषराहित्यात् समबुद्धीनामित्यर्थः। अनेन विशेषावगमे हेतुरुक्तः।

"रागाञ्जनमिदमक्ष्णोर्व्यञ्जयति प्रायशो गुणान् विषये।
द्वेषाञ्जनं तु दोषाननुभयसक्तिर्व्यनक्ति भूतार्थम्॥"

इत्युक्तत्वात्। वपुर्विशेषेषु शरीरविशेषेषु। तेजोविशेषयुक्तेषु शरीरेष्वित्यर्थः। अतिगौरवाः अत्यन्तगौरवोपेताः। 'स्वती पूजायाम्' इति समासः। क्रियाः पूजाविधयः। भवन्ति उपपद्यन्त इत्यर्थः।

"यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्॥"

इति भगवद्वचनाद् महाजनानां महाजनेषु भगवद्बुद्ध्या पूजाविधावत्यन्तगौरवोपेताः क्रियाः सम्भवन्त्येवेत्यर्थः॥ ३१॥

**विधिप्रयुक्तां प्रतिगृह्य सत्क्रियां**
**परिश्रमं नाम विनीय च क्षणम्।**
**उमां स पश्यन् ऋजुनैव चक्षुषा**
**प्रचक्रमे वक्तुमनुज्झितक्रमः॥ ३२॥**

(प्रकाशिका)

विधीति। विधितः शास्त्रतः। नामापरमार्थे। अनेनास्य सर्वस्यैव वर्णिवृत्तान्तस्य व्याजोपगूहितत्वं सूचितम्। ऋजुना विलासशून्यत्वाद-

१. 'परिगृ' मुद्रितकोशपाठः. २. 'न स' क. ख. ग. घ. पाठः. ३. 'स्थैष्यति काले च' ङ. पाठः. ४. 'र्णनीयवृ' क. ग. पाठः. ५. 'पहि' ख. घ. पाठः.

वक्रेण । एतदाकारगुप्तिरवहित्थं भावः । क्रमोऽर्थाद् वचनविषयः । स च प्रकटीभविष्यति ॥ ३२ ॥

(विवरणम्)

अथ देवीसत्कृतस्य ब्रह्मचारिणो वृत्तमाह—

विधीति । सः विधिप्रयुक्तां सत्क्रियां प्रतिगृह्य क्षणं परिश्रमं विनीय च नाम ऋजुना एव चक्षुषा उमां पश्यन् वक्तुं प्रचक्रमे । सः ब्रह्मचारी विधितः शास्त्रतः प्रयुक्तां विहितां सत्क्रियां पूजां प्रतिगृह्य परिगृह्य क्षणं कञ्चित्कालं परिश्रमम् अध्वपरिश्रमं विनीय अपनीय । चकारः पूर्वोक्तसत्क्रियापरिग्रहसमुच्चये । नामशब्दः किलशब्दवदपरमार्थार्थवाची । अविद्यमानाध्वपरिश्रमापनयं कञ्चित्कालम् अभिनीयेत्यर्थः । ऋजुना विलासशून्यत्वादवक्रेण । एवशब्दो विलासस्यात्यन्ताभावमाह । चक्षुषा नेत्राभ्याम् । जातावेकवचनम् । उमां पार्वतीं पश्यन् । विलासशून्येन चक्षुषा दर्शनमनिग्रहोद्धरागगोपनार्थम् । रागस्वभावानभिज्ञानां बालानां स्वभावोऽनेन प्रकटीकृतः । उक्तं च श्रीकृष्णविलासे —

"परमास्त पुरेव मुग्धभावं प्रथयन्नेव स सन्निधौ जनानाम् ।
विजनेषु विलासिनीषु तस्य व्यसृजन्नार्जवमीक्षणोक्तिहासाः ॥"

इति । तथाभूतः सन् वक्तुं प्रचक्रमे आरब्धवान् । नापि रागाविष्क्रियादात्मनः समीहितमेवार्थमादौ पृष्टवानित्याह — अनुज्झितक्रम इति । अनुज्झितः अपरित्यक्तः क्रमो वचनक्रमो येन स तथा । कुशलप्रश्नमारभ्य तापसरणकारणप्रश्नपर्यन्तो वक्ष्यमाणो वचनविन्यासक्रमोऽत्र क्रमशब्देन विवक्षितः ॥ ३२ ॥

१ 'त्थं क' ख. पाठः. २. 'वः ॥ स च क' क. ग. पाठः. ३. 'णेत्यर्थः ।' घ. पाठः. ४. 'वादौ' क. ख. ग. पाठः.

अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते।
अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३ ॥

(प्रकाशिका)

तत्र तावत् कुशलं पृच्छति—

अपीति। समित्कुशमिति 'सर्वो द्वन्द्वो विभाषैकवद् भवती'त्येकवद्भावः। क्षमाणि योग्यानि। स्वशक्त्या तपसि प्रवर्तनस्यापि प्रष्टव्यतां तपसि तस्य समिदादिवदङ्गत्वेनोपपादयति—शरीरमिति॥ ३३ ॥

(विवरणम्)

तत्र तावन्मुनिजनेपूचितं कुशलं पृच्छति त्रिभिः श्लोकैः। तत्रादौ तपस्साधनसम्पत्तिं पृच्छति—

अपीति। क्रियार्थं समित्कुशं सुलभम् अपि। होमादिक्रियैवार्थः प्रयोजनं यस्य तत्। समिधः कुशाश्च समित्कुशम्। कुशाः दर्भाः। 'सर्वो द्वन्द्वो विभाषैकवद् भवती'त्येकवद्भावः। 'स नपुंसकम्'(२. ४. १७) इति नपुंसकत्वम्। सुखेन लभ्यत इति सुलभम्। 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (३. ३. १२६) इति खल्। अपिशब्दः प्रश्ने। 'अपिः समुच्चये प्रश्ने' इति भोजः। तव तपोवन इति शेषः। तव तपोवने होमाद्यङ्गभूतानि समित्कुशादीनि सुलभानि कच्चिदित्यर्थः। समिदादीनि तपसः सन्निपत्योपकारकाण्यङ्गानि। अथारादुपकारकाणामङ्गानामपि सम्पत्तिं पृच्छति—जलानि ते स्नानविधिक्षमाणि अपि। जलानि तव आश्रमे वर्तमानानीति शेषः। ते अत्यन्तनिर्मलशरीरायाः तव। स्नानमेव विधिः स्नानविधिः, तस्मिन् क्षमाणि योग्यानि कच्चित्। तव आश्रमे वर्तमानानि जलानि बहूनि निर्मलानि च कच्चिदित्यर्थः। 'शक्ते योग्येऽपि च क्षमः' इति वररुचिः। अथ

१. 'ति। क्ष' ङ. पाठः. २. 'नि सुलभानि त' क. ख. ग. पाठः.

सर्वस्यापि कर्मणः प्रधानभूतस्य शरीररूपस्याङ्गस्य अक्लेशकरे तपसि प्रवृत्तिं पृच्छति — स्वशक्त्या तपसि प्रवर्तसे अपि इति । आत्मशक्त्यनुसारेण तपसि प्रवर्तसे कच्चित् । तपसि शरीरस्यापि समिदादिवदङ्गत्वप्रतिपादनमुखेन स्वशक्त्या तपसि प्रवृत्तेरपि प्रष्टव्यतामुपपादयति — शरीरं खलु आद्यं धर्मसाधनमिति । खलुशब्दः प्रसिद्धौ । आद्यमित्यनेन समिदादिव्यतिरेकं दर्शयति । धर्मस्य साधनं धर्मसाधनम् । यथा समिदादीनामङ्गत्वं श्रुतिस्मृतिप्रसिद्धं, तथा शरीरस्य प्रधानाङ्गत्वमपि लोके भित्तिचित्रन्यायेन प्रसिद्धमेवेति भावः । शीर्यत इति हि शरीरमुच्यते । तस्मात् रक्षणाभावे तन्नश्य एव शीर्येत । न च तदभावे तपश्चरितुं शक्यमिति तपसि तच्छक्त्यनुसरणमपि प्रष्टव्यमेवेत्यभिप्रायः ॥ ३३ ॥

अपि त्वदावर्जितवारिसम्भृतं
प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥ ३४ ॥

(प्रकाशिका)

अपीति । अनुबन्धि अविच्छिन्नम् । दन्तान् वस्ते छादयतीति दन्तवासः । तुलाशब्दयोगेऽपि तृतीया रघुवंशप्रकाशिकायां समर्थिता "नभसा निभृतेन्दुना तुलामुदिताकेंण समारुरोह तद्" (स० ८.श्लो.१५) इत्यत्र । उत्तरार्धं चाहुः । एवमुत्तरत्रापि ॥ ३४ ॥

(विवरणम्)

अथ देवीसंवर्धितानामाश्रमलतानामपि कुशलं पृच्छति —

अपीति । आसां वीरुधां प्रवालम् अनुबन्धि अपि । आसाम् आश्रमपर्यन्ते दृश्यमानानां वीरुधां लतानाम् । 'लता प्रतानिनी वीरुद्' इत्यमरः ।

१. 'स्य च प्र' घ. पाठः. २. 'न त' घ. पाठः. ३. 'ग तु' ङ. पाठः. ४. 'ल मित्य' ङ. पाठः.

प्रवालं किसलयम् अनुबन्धि अविच्छिन्नं कच्चित् । 'सम्बन्धे सन्ततासक्तावनुबन्धः प्रकीर्तितः' इति भोजः । एतासु लतासु दृश्यमानमिदं किसलयमविच्छेदेन सर्वदा जायते कच्चिदित्यर्थः । प्रवालानामनुबन्धित्वे हेतुमाह — त्वदावर्जितवारिसम्भृतम् इति । लतासु अत्यन्तस्निग्धया त्वया आवर्जितैः आहृतैः वारिभिः सम्भृतं सम्पादितम् । अथ लताप्रवालानां रमणीयत्वप्रतिपादनव्याजेन देवीचित्तावर्जनार्थं यथार्थत्वादतिमनोहरं प्रियवचनं प्रस्तौति — यत् ते दन्तवाससा तुलाम् आरोहति इति । यत् प्रवालं ते तव दन्तवाससा ओष्ठेन । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । दन्तान् वस्ते आच्छादयतीति कर्मण्यण् । तुलां सादृश्यम् आरोहति प्राप्नोति । ननु 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' (२. ३. ७२) इति सूत्रेण तुलाशब्दयोगे तृतीयाप्रतिषेधात् कथं दन्तवाससा तुलामित्युच्यते । अत्र भोजः — सदृशपदार्थवाची सादृश्यमात्रवाची चेति द्वौ तुलाशब्दौ । तयोः सदृशपदार्थवाचकतुलाशब्दयोग एव तृतीयाप्रतिषेधः । अत एव कृष्णस्य तुला नास्तीत्युदाहृतम् । कृष्णेन सदृशः कोऽपि नास्तीत्यर्थः । सादृश्यमात्रवाचकतुलाशब्दयोगे तु तृतीयापीष्यत एव । अतोऽत्रत्यस्य तुलाशब्दस्य सादृश्यमात्रवाचकत्वाद् नोक्तदोषानुषङ्गः । अत्रोपमानभूतस्य प्रवालस्य उपमेयभूतेनाधरेण सादृश्यप्रतिपादनाद् अधरस्य रागाधिक्यं सूचितम् । न चैतद्रागाधिक्यमलक्तकयोगजमित्याह — चिरोज्झितालक्तकपाटलेनेति । चिरोज्झितं चिरकालत्यक्तं तपःप्रारम्भसमय एव परित्यक्तम् अलक्तकं लाक्षारसो येन तथाभूतेन सतापि पाटलेन रक्तवर्णेन । अलक्तकलेशस्याप्यभावं द्योतयितुं चिरशब्दः प्रयुक्तः । त्वत्परिवर्धिता लताः त्वदधरसदृशानि पल्लवानि किं निरन्तरेण प्रसुवत इति भावः ॥ ३४ ॥

अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापराधिषु ।
य उत्पलाक्षेपचलैर्विलोचनै-
स्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५ ॥

(प्रकाशिका)

अपीति । करस्थदर्भपणयापराधिष्वपीत्यर्थः । क्रियार्थं करस्थानां दर्भाणां प्रार्थनमनिष्टं भवेदिति भावः । उत्पलेति वाताक्षिप्यमाणोत्पलवच्चलैरित्यर्थः। अक्षिसादृश्यमक्ष्यनुकारम् । अक्षिणी अनुकुर्वत इवेत्यर्थः ॥ ३५ ॥

(विवरणम्)

अथ तपस्विजनानाम् अवश्यकर्तव्यम् अत्यन्तासाध्यं च कोपजयं पृच्छति--

अपीति । ते मनः हरिणेषु प्रसन्नम् अपि । ते तव मनः चित्तं हरिणेषु मृगेषु । विषयसप्तमी चेयम् । हरिणविषये प्रसन्नं कच्चिदित्यर्थः । स्वतो मनोहरेषु निरपराधेषु देव्याः प्रसादाभावे हेतुमाशङ्कते --- करस्थदर्भप्रणयापराधिषु इति । करस्थानां होमादिकार्यनिर्वर्तनार्थं देवीकरस्थितानां दर्भाणां प्रणयात् प्रार्थनाद्धेतोः अपराधिषु अपराधवत्सु । न ह्यवश्यकर्तव्यकर्मनिर्वर्तनार्थम् आत्मना प्रयत्नानीतानां दर्भाणां प्रार्थनया जातः कोपः शक्यपरिहारो भवति । तथापि किं ते मनो हरिणेषु प्रसन्नं भवति । अयमेव हि महामुनीनां स्वभावः, यत् सापराधेऽपि जने दयावत्त्वमिति भावः । अथ मृगाणां मनोहरत्वप्रतिपादनव्याजेन पूर्ववद् देवीचित्तावर्जनार्थं याथार्थ्यमनोहरं प्रियवचनमाह—ये उत्पलाक्षेपचलैः विलोचनैः तव अक्षिसादृश्यं प्रयुञ्जते इव इति । ये मृगाः । आक्षेपशब्दोऽत्र द्व्यर्थः । आक्षिप्य-

१. 'हारिषु', २. 'क्षिप्रच' मुद्रितकोशपाठः. ३ 'व्यनि' घ. पाठः. ४. 'नायां जा' घ. पाठः. ५. 'ब्दो द्व' घ. पाठः.

माणम् उत्पलम् उत्पलाक्षेपः, तद्वच्चलैः चञ्चलैः विलोचनैः अक्षिसादृश्यम् अक्ष्यनुकरणं प्रयुञ्जत इव । प्रयुञ्जाना इव दृश्यन्त इत्यर्थः । यथा हीनगुणाः केचन महाजनैः सादृश्यमात्रमपि लब्धुं प्रयत्नेन तान् व्यापारवेषादिभिरनुकुर्वन्ति, तथेति भावः ॥ ३५ ॥

**यदुच्यते पार्वति! पापवृत्तये**
**न रूपमित्यव्यभिचारि तद् वचः ।**
**तथाहि ते शीलमुदारदर्शने!**
**तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥**

(प्रकाशिका)

एवं सर्वत्र मुनिजनोचितं कुशलं पृष्ट्वा परमधूर्तस्तदनुप्रवेशार्थमर्थ्यानि प्रियवचनानि प्रयुङ्क्ते—

यदिति। पार्वतीत्याभिजनं सम्बोधनम्। पापवृत्तये पापाचरणाय। रूपं नाम शीलानुसारीति यदुच्यते, तत् सत्यमित्यर्थः। त्वय्येव तावदेतत् पश्येत्याह—तथाहीति। शीलं सद्वृत्तम्। 'शीलं स्वभावे सद्वृत्ते' इति सिंहः। अत्र श्रुत्योपपादकत्वं प्रकृतगतमर्थादप्रकृते पर्यवस्यतीत्यर्थान्तरन्यासप्रकार एवायम् ॥ ३६ ॥

(विवरणम्)

इत्थं तपस्विजनोचितं कुशलं पृष्ट्वा पुनरपि तदनुप्रवेशार्थमर्थ्यानि प्रियवचनानि तत्कृततपःप्रशंसामुखेन प्रयुङ्क्ते त्रिभिः श्लोकैः। तत्रादावेकदेशवर्णनद्वारेण प्रकृतमङ्गवर्णनमेव समस्ताङ्गवर्णनेन प्रपञ्चयति—

यदुच्यत इति। पार्वति! रूपं पापवृत्तये न इति यद् उच्यते, तद् वचः अव्यभिचारि। अत्र पार्वतीति दुर्वाचितावर्जनार्थमाभिजात्यप्रतिपादनपरं सम्बोधनम्। रूपं सौन्दर्यम्। 'अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्यवपुष्षु श्लोकशब्दयोरि'ति केशवः। पापवृत्तये पापाचाराय न भवतीति

यदुच्यते। सामुद्रिकसारदर्शिभिरिति शेषः । तद् वचः अव्यभिचारि। व्यभिचारोऽन्यथाभावः। व्यभिचरितुं शीलमस्येति व्यभिचारि। ततोऽन्यदव्यभिचारि । रूपं शीलानुसारीति सामुद्रिकवचनं सत्यमेवेत्यर्थः । ननु कुत एतदवगतमितीमामाशङ्कां देवीदृष्टान्तेनैव परिहरति — उदारदर्शने! तथाहि ते शीलं तपस्विनाम् अपि उपदेशतां गतम् इति । उदारम् उत्कृष्टं दर्शनं यस्याः। हे रूपवतीत्यर्थः । तथाभावादेव हि हेतोः तव शीलं सद्वृत्तम्। 'शीलं स्वभावे सद्वृत्ते' इति सिंहः । तपस्विनां मुनीनामपि । न केवलमितरजनानामित्यपिशब्दार्थः । उपदेशताम् उपदेशत्वं गतं प्राप्तम्। 'वेदो धर्ममूलं तद्विदां च स्मृतिशीले' इत्यादिषु स्मृतिषु सदाचारस्यापि वेदवदेव प्रामाण्यस्य प्रतिपादितत्वादिति भावः । रूपवत्यास्तव शीलं महर्षीणामप्येवं कर्तव्यमित्युपदेशरूपत्वं प्राप्तमिति यत्, तस्माद् रूपं शीलानुसारीति वचनं सत्यमेवेत्यर्थः । उक्तं च नैषधकाव्ये रूपस्य शीलानुसारित्वं —

"न तुलाविषये तवाकृतिर्न वचोवर्त्मनि ते सुशीलता ।
त्वदुदाहरणाकृतौ गुणा इति सामुद्रिकसारमुद्रणा ॥"

(स० २. श्लो. ५१)

इति । अत्र श्रुत्या प्रकृतगतमप्युपपादनमर्थादप्रकृते पर्यवस्यतीत्यर्थान्तरन्यासस्यैवायं प्रकारभेदः ॥ ३६ ॥

**विकीर्णसप्तर्षिबलिप्रभासिभि-**
**स्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।**
**यथा त्वदीयैश्चरितैरनाविलै-**
**र्महीधरः पावित एष सान्वयः ॥ ३७ ॥**

१. 'वीर्वाक्षणद' ख. पाठः. २. 'हा' मुद्रितकोशपाठः.

(प्रकाशिका)

विकीर्णेति। बलिः परमेश्वरार्चनम्। तेन तदुपयुक्तं कुसुमादिकं लक्ष्यते। दिवश्च्युतैर्दिव्यैरित्यर्थः। सलिलस्य विशेषणाभ्यामुत्कर्षः प्रत्याय्यते। अनाविलैरसङ्कीर्णैः॥ ३७॥

(विवरणम्)

अथ देवीकृतस्य तपसः कुलशुद्धिपर्यन्तत्वमाह—

विकीर्णेति। एषः महीधरः त्वदीयैः चरितैः यथा सान्वयः पावितः, दिवः च्युतैः गाङ्गैः सलिलैः तथा न। एष इति पुरोवर्तिनं महीधरं सगौरवं सहस्ताभिनयं निर्दिशति। महीधरः हिमवान् त्वदीयैः त्वत्सम्बन्धिभिः चरितैः आचारैः सान्वयः पितृपितामहमातृमातामहादिवंशपरम्परासहितः सन् पावितः शुद्धिं प्रापितः। दिवः स्वर्गात् च्युतैः पतितैः। दिव्यैरित्यर्थः। अनेन पावनत्वापादनसामर्थ्यातिशय उक्तः। गाङ्गैः गङ्गासम्बन्धिभिः सलिलैः तथा न तादृशप्रकारेण न पावितोऽभूत्। "गङ्गा गङ्गेति यन्नाम योजनानां शतेष्वपि। कीर्तितं हन्ति पापानि" इत्यादिषु स्मृतिषु कीर्तनमात्रस्यापि पावनत्वेन प्रसिद्धाया गङ्गाया जलसम्बन्धजनितं पावनत्वमपि हिमवतः एतादृशाचारविशिष्टत्वत्पितृभावजनितात् पावनत्वादत्यन्तपरिहीणमिति भावः। स्वतः पावनानामपि गङ्गाजलानां पावनान्तरसम्बन्धात् पावनत्वाधिक्यमाह — विकीर्णसप्तर्षिबलिप्रभासिभिरिति। विकीर्णैः विक्षिप्तैः सप्तर्षीणां बलिभिः। बलिशब्देनात्र तदुपयुक्तानि कुसुमादीनि लक्ष्यन्ते[1]। तेषां पावनत्वाधिक्यप्रतीतिश्च फलम्। साध्यसाधनभावः सम्बन्धः। परमेश्वरार्चनोपयुक्तैः कुसुमादिभिरित्यर्थः। तैः प्रभासितुं शोभितुं शीलमेषामिति तथा। चरितानां पावनत्वाधिक्ये हेतुमाह— अनाविलैरिति। असङ्कीर्णैः, दुराचारलेशेनापि रहितैरित्यर्थः। गङ्गाजलानां तु कदाचिदाविलत्वमपि सम्भाव्यत इति व्यतिरेकध्वनिः॥ ३७॥

१. 'न्ते। पा' घ. पाठः.

अनेन धर्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति भामिनि ! ।
त्वया मनोनिर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥

(प्रकाशिका)

अनेनेति। सविशेषं पूर्वस्मात्। सारः श्रेष्ठः। भामिनि ! दैवसम्पन्ने !। मनसो निर्विषयौ अविषयौ अर्थकामौ यस्याः। प्रतिगृह्य आदृत्य। दक्षिणावर्तस्तु—भामिनि ! कोपने ! तपसा यंकञ्चित् कामयमानेव लक्ष्यसे। ततः कामाद् धर्मबलप्रशंसया मा स्म कुप्येत्युपालम्भगर्भं सम्बोधनमिति व्याचष्ट। तदभिप्रायत्वे मनोनिर्विषयार्थकामत्वं त्वपरमार्थं स्यादिति वाक्यमेवेदमुपालम्भपर्यवसायि स्यात्। तथाशङ्कनीयत्वं न विस्रम्भणीयत्वम्। ततश्चोत्तरवाक्येषु च प्रत्ययो न भवेत् ॥ ३८ ॥

(विवरणम्)

अथ धर्मस्यैव त्रिवर्गसारत्वं श्रुतिस्मृतिप्रसिद्धमपि त्वत्सेवितत्वादद्य मादृशानामपि प्रतीतिगोचरत्वमापन्नं 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायादित्याह—

अनेनेति। भामिनि ! अनेन मे अद्य धर्मः त्रिवर्गसारः सविशेषं प्रतिभाति। भामिनि ! हे दैवसम्पन्ने !। 'भाम दैवानुकूल्यं च सौभाग्यं चापि कथ्यते' इति पुराणकविः। अनेन एतस्माद् वक्ष्यमाणात् कारणाद् मे मम त्रिवर्गसारः। धर्मार्थकामानां त्रयाणां वर्गस्त्रिवर्गः। 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः। तत्र सारः श्रेष्ठः। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। इतिशब्दोऽत्रार्थात् सिध्यति। त्रिवर्गसार इति प्रतिभातीत्यर्थः। सविशेषमिति प्रतिभानक्रियाविशेषणम्। पूर्वस्मात् कालाद् विशेषस-

१. 'का' ग. पाठः. २. 'सा' ग. घ. पाठः., 'सायां' क. ङ. पाठः. ३. 'त्वमप' पाठः. ४. 'ति सिद्धः।' घ. पाठः.

हितं यथा भवति तथा। प्रतिभाति मनसि स्फुरति। धर्मस्त्रिवर्गसार इत्यद्य मया सम्यङ् निश्चितमित्यर्थः। अनेनेत्युक्तमर्थमेव प्रदर्शयति — त्वया एक एव प्रतिगृह्य सेव्यते यद् इति। त्वया सारज्ञया एकः धर्म एव प्रतिगृह्य आदृत्य। सेव्यते, कर्तव्यत्वबुद्ध्या सेव्यत इत्यर्थः। कामलोभादिहेत्वन्तरसहितस्य सदाचारस्याप्रामाण्यात् प्रतिगृह्येत्युक्तम्। अत्र सेव्यत इति वर्तमाननिर्देशेन यौवनारम्भसमये[1]ऽद्याप्यस्खलितासीति द्योत्यते। अर्थकामयोरनादरमप्याह — मनोनिर्विषयार्थकामया इति। मनसा निर्विषयौ अविषयौ अर्थकामौ अर्थश्च कामश्च यस्याः तया। अर्थकामपराङ्मुखचित्तयेत्यर्थः। यस्मात् त्वया यौवनोचितान् कामान् पितृगृहगतान्यतिसुलभानि धनान्यप्यनादृत्य धर्म एव साभिप्रायं सेव्यते, तस्माद् धर्मार्थकामानां मध्ये धर्मस्यैव प्राधान्यमिति सम्प्रति मे निश्चयो जात इति भावः ॥ ३८ ॥

**प्रयुक्तसत्कारविशेषमात्मना**
**न मां परं मा[2] प्रतिपत्तुमर्हसि[3]।**
**यदा सतां सन्नतगात्रि! सङ्गतं**
**मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥**

(प्रकाशिका)

किञ्चित् प्रष्टुकाम आत्मनो योग्यतां तत्र समर्थयति —

**प्रयुक्तेति**। आत्मना त्वयेत्यर्थः। परमनात्मीयम्। मा प्रतिपत्तुमर्हसीति पाठः। मा त्वमित्यर्थः। परत्वेन न प्रतिपत्तव्योऽहमित्यर्थः। अत्र हेतुः — यदेति। यदा यस्मात्। साप्तपदीनं सप्तपदोच्चारणजन्यम्। 'साप्तपदीनं सख्यम्' (५. २. २२) इति निपातनात् साधुत्वम्। सतां सङ्गतमेव सख्यमित्युच्यत इत्यर्थः ॥ ३९ ॥

१. 'येऽप्य' घ. पाठः. २. 'सं', ३. 'तः' मुद्रितकोशपाठः.

(विवरणम्)

यथार्थस्तुतिभिरेवमादिभिः देव्याश्चित्तमावर्ज्यान्यदत्यन्तनिगूढं किमपि प्रष्टुकामस्तत्रात्मनो योग्यतामुपपादयति —

प्रयुक्तेति । सा त्वम् आत्मना प्रयुक्तसत्कारविशेषं मा परं प्रतिपत्तुं न अर्हसि । सा या पूर्वोक्तसकलगुणविशिष्टा । आत्मना त्वयैवेत्यर्थः । प्रयुक्तः कृतः सत्कारविशेषः सम्मानविशेषो यस्मिंस्तथाविधम् । मा मां परम् अनात्मीयं प्रतिपत्तुं कल्पयितुं नार्हसि । यतस्त्वत्कृतैः सत्कारविशेषैरेवाहं त्वदीयो जातः, तस्मान्न परत्वेन कल्पनीयः, अपितु त्वत्परिवारजनत्वेनैव कल्पनीय इति भावः । ननु कथमतिथिसत्कारमात्रादेवात्मीयत्वप्राप्तिरत आह — सन्नतगात्रि ! मनीषिभिः सतां सङ्गतं साप्तपदीनम् उच्यते यदा इति । सन्नतं सुन्दरं गात्रं यस्याः । 'नतं चारु सन्नतमि'ति भोजः । मनीषिभिः विद्वद्भिः । अनेन तद्वाक्यस्य श्रद्धेयत्वमुक्तम् । सतां सज्जनानां सङ्गतं सङ्गमनम् । परस्परसङ्गममात्रमित्यर्थः । भावे निष्ठा । सप्तपदोच्चारणजन्यमिति व्युत्पत्त्या साप्तपदीनमिति सख्यमुच्यते । 'साप्तपदीनं सख्यम्' (५. २. २२) इति निपातनात् साधुत्वम् । यदेति यस्मादर्थे । यतः सज्जनानां परस्परं सङ्गममात्रादेव सख्यं भवतीति मनीषिभिरुच्यते, ततः त्वत्कृतसत्कारविशेषोऽहं त्वदीय एवेति भावः । त्वत्कृतैः सेवाविशेषैरहं त्वदीय एव जात इति निगूढोऽर्थः ॥ ३९ ॥

अतोऽत्र किञ्चिद् भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने !
न चेद् रहस्यं प्रतिबोधयिष्यसि ॥ ४० ॥

१. 'वक्तुमर्हसि' मुद्रितकोशपाठः.

(प्रकाशिका)

किमिदमत्रोपन्यस्तमित्याह —

अत इति । प्रष्टुमनाः. किंविषयः प्रश्न इत्याह — अत्रेति । अत्र तपसि । एवं प्रथमदर्शनक्षण एव कार्यप्रश्नश्चापल्यपर्यवसायी स्यादित्याशङ्क्याभ्युपगमेनोत्तरमाह — द्विजातीति । ब्राह्मणस्य स्वभावोऽयमिति भावः । स चात्र न बाधक इत्याह — बहुक्षमामिति । न चात्र मे निर्बन्धः, यत् क्षमाशीलमपि कोपयेदित्याह — न चेदिति । प्रतिबोधयिष्यसि, स्वयमेवेति शेषः । अनेनाप्यनिर्बन्धः । निर्बन्धे तु प्रतिबोधयेति स्यात् ॥ ४० ॥

(विवरणम्)

कुशलप्रश्नादावसङ्गतस्यास्य सख्यप्रतिपादनस्य फलमाह —

अत इति । अतः अयं जनः अत्र भवतीं किञ्चित् प्रष्टुमनाः । अतः एतस्मात् सख्याद्धेतोः । अयं जन इति पदद्वयमहमित्येतस्मिन्नर्थे । यदाह भोजः — 'सेदंशब्दं जनपदमस्मदर्थे प्रयुञ्जते' इति । प्रश्नस्य विषयं दर्शयति — अत्रेति । अत्र तपसि विषये । किञ्चिद्, न तु बहु । अनेन विनयं दर्शयति । प्रष्टुमनाः प्रष्टुं मनो यस्य स तथा । 'तुं काममनसोरपि' इति तुमो मकारलोपः । भवतीति शेषः । सख्यात् सञ्जातविस्रम्भोऽहं तपोविषये किमपि भवतीं प्रष्टुकामोऽस्मीत्यर्थः । न चायमनवसरे प्रश्नस्त्वां कोपयिष्यतीत्याह — बहुक्षमामिति । बह्वी क्षमा यस्याः ताम् । क्षमाभावे कथमेतादृशतपःप्रवृत्त्युपपत्तिरिति भावः । नन्वस्तु बहुक्षमावत्त्वं, तथापि कथं प्रथमदर्शन एव कार्यप्रश्नः क्रियते, कृतो वा प्रश्नः कथं चापलपर्यवसायी न स्यादितीमामाशङ्कां चापलाभ्युपगमेन परिहरति — द्विजातिभावादुपपन्नचापल इति ।

१. 'ल' ङ. पाठः. २. 'णस्व' ङ. पाठः. ३. 'न्धं प्र' क. ग. पाठः. ४. 'दिति स्या' ख. पाठः ५. 'दं ज' घ. पाठः.

तिभावाद् ब्राह्मणत्वाद् उपपन्नं युक्तं चापलं चपलकर्म यस्य स तथा । तेप्ररूढेऽपि सख्ये रहस्यप्रकाशनं बहुदोषावहं, 'मन्त्रं सुरक्षितमपि-छिन्द्यादाप्तपरम्परा' इति न्यायाद्, अत आह—तपोधने! त्वं रहस्यं न त्[1] प्रतिबोधयिष्यासि इति । तपोधने! तप एव धनं यस्याः । रहस्यम् अप्रकाश्यम् । मया प्रष्टुमिष्टमिदं कार्यमिति शेषः । प्रतिबोधयिष्यासि ज्ञापयिष्यसि । स्वयमेवेति शेषः । नात्र मे निर्बन्ध इति भावः । सति हि निर्बन्धे प्रतिबोधयेति लोट्प्रयोग एव भवेत् । निर्बन्धो हि क्षमावन्तमपि कोपयति । यथोक्तं रघुवंशे—'निर्बन्धसञ्जातरुषा' (स. ५. श्लो. २१) इति । सख्ये महत्यापि अत्यन्तगोपनीयस्यार्थस्य वक्तुमशक्यत्वादहं तु न भवतीं निर्बध्नामि । अतिरहस्यं न चेत् त्वमेव प्रतिबोधयिष्यसीत्यर्थः ॥ ४० ॥

**कुले प्रसूतिः प्रथमस्य वेधस-**
**स्त्रिलोकसौन्दर्यमिवोर्जितं[2] वपुः ।**
**अमृग्यमैश्वर्यसुखं नवं वय-**
**स्तपःफलं स्यात् किमतः परं वद ॥ ४१ ॥**

(प्रकाशिका)

किमत्र प्रश्नेन प्रतिवचनेन वा । त्वयैव तावदूहितु शक्यमित्याशङ्क्य जिज्ञासितस्योहागोचरत्वं दर्शयति

कुल इति । प्रथमस्य हिरण्यगर्भस्य । 'यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वर' इति ब्रह्मवचनात् । आर्जितमेकत्र सञ्चितम् । किं क्षेपे । तपःफलं तपसा लभ्यं वाञ्छितम् । एभ्योऽन्यत् तपसोऽस्य फलं न संभाव्यते, अस्ति चेद् वदेत्यर्थः ॥ ४१ ॥

१. 'तत् प्र' घ. पाठः. २. 'वोदितं' मुद्रितकोशपाठः.

(विवरणम्)

ननु किं प्रश्नप्रतिवचनाभ्यां, भवतैव तावदूह्यतामितीमामाशङ्कां स्वजिज्ञासितस्यार्थस्योहागोचरत्वं दर्शयन्नपाकरोति त्रिभिः श्लोकैः। तत्रादौ[1] देव्या ऐहिकफलाकाङ्क्षानिराकरणद्वारेण स्वजिज्ञासितस्यार्थस्योहागोचरत्वमाह —

कुल इति। तत्र तावत् स्वत एवाभिजात्ययुक्तायास्तवेदं तपश्चरणं न विश्वामित्रादिवदाभिजात्यकामनयेत्याह — प्रथमस्य वेधसः कुले प्रसूतिः इति। प्रथमस्य वेधसः ब्रह्मणः। मरीच्यादीनां सर्गेऽग्रविधायित्वान्न प्राथम्यमिति भावः। कुले वंशे प्रसूतिः उद्भवः। तवेति शेषः। 'यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः' इति ब्रह्मवचनादचलेश्वरस्य ब्रह्मपुत्रत्वम्। ततश्च तत्पुत्र्यास्तत्कुलजातत्वम्। नापि सर्वस्त्रीजनसाधारण्या सौन्दर्याकाङ्क्षया, सौन्दर्यस्य भवत्यां लोकोत्तरतया विद्यमानत्वादित्याह — वपुः त्रिलोकसौन्दर्यम् आर्जितम् इवेति। त्रिलोकसौन्दर्यं लोकत्रये विद्यमानं सौन्दर्यम् आर्जितम् एकत्र सञ्चितमिव। पञ्चभूतरूपमुपादानमपहाय लोकत्रये विद्यमानं सौन्दर्यसारमात्रमुपादाय तेनैव निर्मितमिति प्रतीयमानमित्यर्थः। अतः परं का सौन्दर्याकाङ्क्षेति भावः। नापि सकलजनप्रार्थनीयधनाकाङ्क्षया, धनस्यापि त्वयि निरवधिकत्वादित्याह — ऐश्वर्यसुखम् अमृग्यम् इति। ऐश्वर्येण धनेन यत् सुखं दानोपभोगादिलक्षणं, तदपि अमृग्यमचिन्त्यम्। जनानां मनसोऽप्यगोचरमित्यर्थः। तथाच वक्ष्यति —

"अलकामतिवाह्येव वसतिं वसुसम्पदाम्।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम्॥" (स० ६.श्लो.३७)

इति। नन्वकामनया तपश्चरणमेव परो धर्मः, तस्यैव मुक्तिसाधनत्वात्। किं कामनान्तरविचारणयेतीमामाशङ्कां 'वार्द्धके मुनिवृत्तीनाम्' (रघु. स.१. श्लो.८) इत्यादिवचनविरोधाद् यौवने तस्यानाशङ्कनीयत्वेन परिहरति — वयः नवम्

१. 'दौ ऐ' घ. पाठः. २. 'स्त्रीसा' घ. पाठः.

इति। वयः यौवनम्। नवं प्रारब्धमात्रमित्यर्थः। अथवा यौवनापेक्षया तपश्चरणमेवानेन वाक्येन निराक्रियते। तस्माद् युक्तमूहागोचरत्वमित्याह —अतः परं किं तपःफलं स्याद् वद इति। अतः परम् अस्मदुपन्यस्तादाभिजात्यादेरन्यत्। किं क्षेपे, न किमपीत्यर्थः। वद, अस्य तपसः फलभूतमन्यत् किमपि न मे विचारमार्गमारोहति, अस्ति चेद् वदेत्यर्थः ॥ ४१ ॥

भवत्यनिष्टादपि नाम दुःसहा-
न्मनस्विनीनां प्रतिपत्तिरीदृशी।
विचारमार्गप्रहितेन चेतसा
न दृश्यते नच तलोदरि! त्वयि ॥ ४२ ॥

(प्रकाशिका)

अथ स्वयमेवान्यत् सम्भाव्य निराकरोति —

भवतीति। 'अनिष्टाद् भर्तृकृतादित्यर्थ' इति दक्षिणावर्तः। तन्न साधु। कन्यकात्वावगमपुरस्सरत्वादुक्तेः। अन्यथा 'अथोपयन्तारमलं समाधिना' (श्लो. ४५) इति निरवकाशं स्यात्। तस्मादनिष्टादिति सामान्यम्। अनिष्टादपि, न केवलं शङ्कितादिष्टाभावात्। भवनस्य सम्भावनायां नामशब्दः। प्रतिपत्तिः प्रवृत्तिः। तलोदरि! निम्नोदरीत्यर्थः। दक्षिणावर्तस्तु —एतदपि सौन्दर्यवाचि भर्त्रपराधनिवारणपरमित्यर्थ इति व्याचष्ट। वयं तु स्तुतिमात्रपरमिति। तच्चानिष्टं विचार्यमाणम् अनुपपन्नमेव भवतीत्यर्थः ॥ ४२ ॥

(विवरणम्)

नन्वनिष्टावाप्त्या बाल्येऽपि तपश्चरणं सम्भवत्येव, यथा ध्रुवादीनामित्याशङ्क्य परिहरति —

भवतीति। दुःसहाद् अनिष्टाद् अपि मनस्विनीनाम् ईदृशी प्रतिपत्तिः

१. 'स्मा' घ. पाठः. २. 'कृशोद' मुद्रितकोशपाठः. ३. 'व्यं' क. ख. ग. पाठः.

भवति नाम । दुःसहात् सोढुमशक्याद् अनिष्टाद् अप्रियाद्धेतोः । अनभिभवनीयेन केनचित् कृतादिति शेषः । न पूर्वोक्तादिष्टानवाप्तेः, अपितु अनिष्टावाप्तेरपीत्यपिशब्दार्थः । मनस्विनीनां स्थिरचित्तानामित्यर्थः । ईदृशी त्वयीदानीं दृश्यमानप्रकारा । प्रतिपत्तिः प्रवृत्तिः । 'प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ' इति केशवः । नामशब्दः सम्भावनायाम् । परैः सम्पादितादनिष्टादपि मानिनीनामत्यन्तदुश्चरतपश्चरणसम्भावनास्त्येवेत्यर्थः । तथापि त्वयि तदनुपपन्नमित्याह — तलोदरि ! तच्च विचारमार्गप्रहितेन चेतसा त्वयि न दृश्यते इति । तलोदरि ! निम्नोदरि ! । करतलं हि किञ्चन निम्नं भवति । कृशोदरीत्यर्थः । अनेनापि तदनुप्रवेशार्थं स्तुतिः सामुद्रिकोक्तो वक्ष्यमाणो गुणश्च सूच्यते । तद् अनिष्टम् । चकारः पूर्वप्रतिपादितेष्टानवाप्तिसमुच्चयार्थः । न केवलम् इष्टानवाप्तिस्त्वय्यनुपपन्ना, अपितु अनिष्टप्राप्तिश्चेत्यर्थः । विचारस्य मार्गो विचारमार्गः, तदनुसारेण प्रहितेन प्रेरितेन । चेतसा मनसा । त्वयि अनन्तरश्लोकवक्ष्यमाणगुणविशिष्टायां भवत्याम् । न दृश्यते न प्रतीयते । यद्यपि स्त्रीसामान्ये तदुपपत्तिरस्त्येव, तथापि त्वयि नानिष्टस्य लेशोऽप्युपपद्यत इति भावः ॥ ४२ ॥

**अलभ्यशोकाभिभवेयमाकृति-**
**र्विमानना सुभ्रु ! कुतः पितुर्गृहे ।**
**पराभिमर्शो न तवास्ति कः करं**
**प्रसारयेत् पन्नगरत्नसूचये ॥ ४३ ॥**

(प्रकाशिका)

अनुपपत्तौ हेतुत्रयमाह —

अलभ्येति । इयमिति ईदृशसमग्रसामुद्रगुणा । अत्र कथं शो-

१. 'ष्टप्राप्ते' घ. पाठः. २. 'रः सम्पादि' घ. पाठः. ३. 'च' मुद्रितकोशपाठः.

काभिभवो लभ्यते, न सम्भाव्यत इत्यर्थः । अयं तावदेको हेतुः । अन्यमप्याह — विमाननेति । पितुर्गृहे, न तु भर्तृगृहे । पित्रादिबन्धुमध्यवर्तिन्या इत्यर्थः । कुतः कस्माद् जनात् । परेणाभिमर्शो बलात्कारेण स्पर्शः । नास्ति न तु स्यात् । एतत् प्रतिवस्तुनोपपादयति — कः करमिति । पन्नगरत्नसूतये पन्नगशिरोरत्नचालनाय । 'षू प्रेरणे' इति धातुः । अनेन हिमवत्प्रतापस्यालङ्घ्यत्वमुक्तम् । स्वमहाभाग्याद् बन्धुमध्यगत्वात् परानभिभवनीयत्वाच्च तयानिष्टमनुपपन्नमेवेति समर्थितम् । दक्षिणावर्तस्तु — अलभ्यं शोकाभिभवं यस्या इति विग्रहमुक्त्वा विमाननेत्यादिना शोकस्य, पराभिमर्शेत्यादिना अभिभवस्य चालभ्यत्वमुक्तमित्याह । तत् तु निपुणैर्विवेचनीयम् । यत् तु तेन 'सुभ्रूशब्दस्य उवङ्स्थानत्वाद् 'नेयङुवङ्स्थानावस्त्री' (१. ४. ४) इति नदीसंज्ञाप्रतिषेधे सम्बुद्धौ 'अम्बार्थनद्योर्ह्रस्वः' (७. ३. १०७) इति ह्रस्वो न स्यादित्यनुपपत्तिं शङ्कित्वा पाठान्तरं* दर्शितं, तत्र वामनः परिहारं दत्तवान् 'ऊकारान्तादप्यूङ् प्रवृत्तेः' (अधि. ५. अध्या. २. सू. ४८) इति । सूत्रस्य चास्य वृत्तिः — उत ऊङ् विहित ऊकारान्तादपि क्वचिद् भवति, आचार्यप्रवृत्तेः । कासौ प्रवृत्तिः, 'अप्राणिजातेश्चारज्ज्वादीनाम्' (वा० ४. १. ६६) इति । अलाबूः कर्कन्धूरित्युदाहरणम् । तेन 'सुभ्रु! किं सम्भ्रमेण' इत्यत्र सुभ्रूशब्दादूङ् सिद्धो भवति । ऊङि त्वसति सुभ्रूरिति स्यादिति । एवं चोङोऽस्य भ्रूशब्दसम्बन्धयुवर्णत्वाभावाद् 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६. ४. ७७) इत्युवङादेशस्याभावाद् न तत्स्थानत्वम् । ततश्च न नदीसंज्ञाप्रतिषेध इत्यवसेयम् ॥ ४३ ॥

(विवरणम्)

अनिष्टप्राप्त्यनुपपत्तिमेव विचारमार्गानुसारिणा हेतुत्रयेण प्रतिपादयति —

१. 'नि' घ. ङ. पाठः. २. 'क्त' ङ. पाठः. ३. 'ज्ञानिषे' ङ. पाठः.

* 'सुभ्रूः कुतस्तातगृहे विमानना' इत्येवंरूपम् ।

अलभ्येति । तव इयम् आकृतिः अलभ्यशोकाभिभवा । इयं सामुद्रिकोक्तसकलगुणपरिपूर्णतया दृश्यमाना । आकृतिः आकारः । शरीरसंस्थानविशेष इत्यर्थः । लब्धुं ज्ञातुं न शक्यत इत्यलभ्यः । असम्भावनीय इत्यर्थः । अलभ्यः शोकेन दुःखेन अभिभवः परिभवो यस्याः सा तथा । नहि सामुद्रिकोक्तसकललक्षणपरिपूर्णे जने अनिष्टप्राप्तिः सम्भाव्यत इति भावः । ननु तपश्चरणनिमित्तभावमनुभवता येनकेनचिदवमानविशेषेण ध्रुवस्येव गुणवतामपि तपश्चरणं भवेत्, भवति च तेनैवोत्कर्षातिशयप्राप्तिरित्यत्र द्वितीयं हेतुमवतारयति—सुभ्रु! पितुर्गृहे विमानना कुतः इति । शोभना भ्रूः यस्याः, तस्याः सम्बुद्धिरियम् । ननु सुभ्रूशब्दस्य सम्बुद्धौ कथं ह्रस्वान्तत्वं, सुभ्रूशब्दस्य उवङ्स्थानत्वात् । 'नेयङुवङ्स्थानावस्त्री' इति हि नदीसंज्ञा प्रतिषिद्धा । तस्माद् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वो न स्यादिति । उच्यते । 'ऊकारान्तादप्यूङ् प्रवृत्तेः' इति वामनसूत्रम् । अस्यार्थः । 'ऊङुतः'(४.१.६६) इति विहित ऊङ्प्रत्ययः क्वचिदूकारान्तादपि भवति । कुत इत्यत्राह—प्रवृत्तेरिति । आचार्यप्रवृत्तेरित्यर्थः । 'अप्राणिजातेश्चारज्ज्वादीनाम्' इति वार्तिककारवचनादिति भावः । तत्र पुनः अलाबूः कर्कन्धूः इत्याद्युदाहरणम् । अत्र सुभ्रूशब्दाद् अप्राणिजातेरित्यादिना ऊङि सति 'आचि श्नुधातुभ्रुवाम्—' इत्यादिनोवङादेशस्याभावान्नदीसंज्ञापि (न?) स्यात् । अस्य (सु?)भ्रूशब्दसम्बन्ध्युवर्णत्वाभावात् । ततश्च 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे सति एङ्ह्रस्वात् सम्बुद्धेः' (६.१.६९) इति सुलोपः । ततश्च हे सुभ्रु! इति पदं सिध्यति । ऊङि त्वसति सुभ्रूरित्येव । हे सुभ्रु! हे सुन्दरि! । अनया सम्बुद्ध्या देव्याः सर्वजनेषु कारुण्यार्द्रहृदयत्वं ध्वन्यते । हृदयगतं ह्यक्षिभ्रुवादावभिव्यक्तं भवति । तदुक्तं नैषधकाव्ये—'इतीयमक्षिभ्रुवविभ्रमोङ्गितस्फुटामनिच्छां वि-

१. 'ब्धुम् उपलब्धुं ज्ञा' घ. पाठः. २. 'र्षप्रा' क. ख. ग. पाठः.

वरीतुमुत्सुका' (स. ९. श्लो. १) इति । कारुण्यार्द्रहृदयत्वेन च देवीं प्रति जनानामनुरागातिशयः प्रतिपादितो भवति । यथोक्तं रघुवंशे —

"अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥"

(स. ८. श्लो. ८)

इति । तस्माद् देवीस्वरूपनिरूपणावस्थायामेव विमाननाहेतोरभाव इति भावः । पुनरपि विशेषमाह — पितुर्गृह इति । त्वयि अत्यन्तस्निग्धस्य हिमवतो भवने विमानना अवमानः कुतः कस्माद् भवति । भर्तृगृहवर्तिनीनां (नतम्नु?) सपत्न्यादिसकाशादनिष्टं सम्भाव्येतापि, न तु सकलबन्धुजनपरिपूर्णपितृगृहवर्तिनीनाम् । पितुस्त्वयि अत्यन्तस्निग्धत्वं च प्रसिद्धम् । नन्वत्र पराभिभवो हेतुरस्तु इत्याशङ्क्य तृतीयं हेतुमाह — तव पराभिमर्शो नास्तीति । तव तथाविधप्रतापयुक्तस्य पर्वतचक्रवर्तिनः पुत्र्यास्ते । परेणाभिमर्शः बलात्कारेण स्पर्शः नास्ति न सम्भाव्यते । पराभिमर्शाभावमेव प्रतिवस्तूपमयोपपादयति — कः पन्नगरत्नसूतये करं प्रसारयेदिति । कः, न कोऽपीत्यर्थः । पन्नगरत्नसूतये पन्नगस्य रत्नं फणामणिः, तस्य सूतये चालनाय । 'पूङ् प्रेरणे' इति धातोः क्तिन्प्रत्ययान्तमिदं पदम् । करं हस्तं प्रसारयेत् प्रसृतं कुर्यात् । यथा जिजीविषुः पुमान् पन्नगफणामणिसमाहरणाय करं न प्रसारयति, तथैव त्वां बलात्कारेण स्प्रष्टुमर्हतीति भावः । करप्रसारणमात्रमपि न कुर्यात्, किं पुनः स्पर्शनमिति भावः । अनेन हिमवत्प्रतापस्यात्यन्तदुर्लङ्घ्यत्वमुक्तम् । अभिलाषे सत्यपि प्रतापादस्पृश्यत्वं प्रतिवस्तुना ध्वन्यते । अत्र देव्या महाभाग्ययोगित्वं बन्धुजनमध्यवर्तित्वं पितृगौरवात् परानभिभवनीयत्वं चेति त्रयो हेतवोऽनिष्टप्राप्त्यभावे प्रतिपादिताः । तस्मान्न तवेदं तपश्चरणमनिष्टप्राप्तिहेतुकमिति भावः ॥ ४३ ॥

'भावस्य' घ. पाठः. २. 'गुर्वसि' घ. पाठः.

किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलम् ।
वद प्रदोषे विनिकीर्णतारका
विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥

(प्रकाशिका)

तदेवमिष्टानवाप्तेरनिष्टावाप्तेश्चासम्भवेन वयोननुरूपं तपः किंहेतुकमित्याह —

किमिति । किं प्रश्ने । इतिर्हेतौ । किं मया कृतमित्याह — वल्कलं धृतमिति । ननु निरभिसन्धिकं तप एव पुरुषार्थः पर इत्याह — यौवन इति । अस्य वयसो नोचितं तप इति भावः । तद्योग्यं च त्वया त्यक्तमित्याह — आभरणान्यपास्येति । अन्यच्च तपोयोग्यं वय इति दर्शयति — वार्धकशोभीति । एवमनुचितपरिग्रहस्त्वया न कर्तव्य इत्यर्थः । अत्र प्रतिवस्तु — वदेति । विनिकीर्णतारका, भूत्वेति शेषः । विनिकीर्णमपास्तम् । अरुणाय अरुणं गन्तुम् । 'क्रियार्थे—' (२.३.१४) इत्यादिना चतुर्थी । कल्पते अर्हतीत्यर्थः । यद्येवं भवति, ततो वदेत्यर्थः । तथा न कल्पते[१], तेन च न वदिष्यसीति शेषः ॥ ४४ ॥

(विवरणम्)

यस्मादिदं तपश्चरणमिष्टावाप्त्यर्थं न भवति, नाप्यनिष्टपरिहारार्थं, तस्माद् निरभिसन्धिकतपश्चरणमात्रमेवात्रावशिष्यते । तच्च पूर्वमेव किञ्चिदाशङ्क्य परिहृतमपीदानीमुपपत्तिकथनद्वारेण स्वावसरे दूरतो निराकरोति —

किमिति । त्वया यौवने आभरणानि अपास्य किम् इति वल्कलं धृतम् । त्वया लोकवृत्तज्ञया पूर्वोक्तसकलगुणविशिष्टया च । अनेन प्राप्तव्यान्तरनिरपेक्षत्वमुक्तम् । नापि निरभिसन्धिकं वल्कलधारणं च तव युक्तमित्याह —

१. 'ते न च व' ङ. पाठः

यौवन इति । अस्य वयसो नोचितं वल्कलधारणमिति भावः । यौवनोचितान्याभरणानि च त्वया परित्यक्तानीत्याह — आभरणानि अपास्येति । मुक्ताकलापादीनि परित्यज्य । किंशब्दः प्रश्ने । इतिशब्दो हेतौ । कस्माद्धेतोरित्यर्थः । न केवलमस्य वयसो योग्यान्याभरणानि परित्यक्तानि, अनुचितपरिग्रहश्च कृत इत्याह — वल्कलं धृतमिति । वल्कलधारणयोग्यं कालान्तरमपि दर्शयति — वार्द्धकशोभीति । वार्द्धके वृद्धत्वे शोभितुं शीलमस्येति तथा । एवमनुचितपरिग्रहः किमर्थं त्वया कृत इति प्रश्नस्य नैवं त्वया कर्तव्यमित्येवार्थः । अत एवाकर्तव्यत्वमेव प्रतिवस्तुनोपपादयति — विभावरी प्रदोषे विनिर्कीर्णतारका अरुणाय कल्पते यदि वद । विभावरी रात्रिः प्रदोषे सन्ध्यायाम् । 'प्रदोषो रजनीमुखमि'ति सिंहः । विनिर्कीर्णतारका, भूत्वेति शेषः । विनिर्कीर्णा अपास्ताः तारका नक्षत्राणि यया सा तथा । अत्र आभरणप्रतिवस्तुतया तारकाणां निर्देशः । अरुणाय अरुणं गन्तुम् । 'क्रियार्थे'त्यादिना चतुर्थी । वल्कलप्रतिवस्तुत्वेनारुणस्योपादानम्, उभयोरप्यारुण्यात् । कल्पते, अर्हतीत्यर्थः । यदि विभावरी प्रदोषसमय एव परित्यक्ततारका भूत्वा अरुणं गन्तुमर्हति, तर्हि वदेत्यर्थः । यस्मात् तथा नार्हति, तस्माद् न वदिष्यसीत्यर्थः ॥ ४४ ॥

दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥

(प्रकाशिका)

अथ पुनरपि नायिकाया हृदिस्थं वास्तवं कारणमुद्घाटयितुकामः शङ्कावकाशपीडनाय मध्येऽन्यत् कारणमाशङ्क्य परिहरति

१. 'ष्य' मुद्रितकोशपाठः. २. 'काह' ङ. पाठः. 'विधाना' ख. घ. पाठः.

दिवमिति। श्रमस्तपः। तद्वृथात्वे हेतुमाह—पितुरिति। दुरवापत्वेन व्याप्ता प्रार्थनेति भावः। अथ वास्तवमुद्घाटयति—अथेति। अथशब्दः प्रश्ने। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे'ति सिंहः। अलं समाधिना, तथापि तपो न कर्तव्यमित्यर्थः। कुत इत्याह— न रत्नमिति। अत्र हेतुः—मृग्यते हि तदिति। सर्वेणापीति शेषः। अत्र रत्नशब्दस्य स्वजातिश्रेष्ठवाचित्वेऽर्थान्तरन्यासोऽयं, पाषाणविशेषवाचित्वे तु न तावत् प्रतिवस्तु, तत्रासम्भवलेशस्याप्यसहनात्। अत्र च रत्नकर्तृकत्वमन्वेषणस्यासम्भवीति तन्निषेधोऽपि तादृगेव। तस्मात् सादृश्यादियमप्रस्तुतप्रशंसा। तस्यां त्वसम्भवेऽपि प्रतीयमानार्थाध्यारोपेण वाक्ययोजना घटते। अप्रस्तुतेन चार्थेन प्रस्तुतगतं सर्वप्रार्थनीयत्वहेतुकमप्रार्थयितृत्वं द्योत्यते। तच्च स्वविरुद्धं प्रार्थनं बाधमानं सत् तद्धेतुकस्य तपसो निषेधमुक्तमुपपादयति॥ ४५॥

(विवरणम्)

अथ देव्या हृदयगतमेवार्थं प्रष्टुकामोऽपि लज्जालेशमपि परिजिहीर्षुरन्यत् किमपि मध्ये तपःकारणमाशङ्क्य परिहरति—

दिवमिति। त्वं दिवं प्रार्थयसे यदि श्रमः वृथा। दिवं स्वर्गं प्रार्थयसे अपेक्षसे यदि, तर्हि श्रमः तपः। 'श्रमु तपसि खेदे च' इत्यस्माद् धातोर्भावे घञ्। मान्तत्वाद् वृद्ध्यभावः। 'अभ्यासे शस्त्रविद्यादौ वेदे तपसि च श्रमः' इति भोजः। वृथा निरर्थकः। 'वृथा निरर्थकाविध्यो-रि'त्यमरः। ननु प्रतिज्ञामात्रेण नार्थसिद्धिरितीमामाशङ्कां हेतूपन्यासेन परिहरति—तव पितुः प्रदेशाः देवभूमयः इति। तव पितुः हिमवतः प्रदेशाः देवभूमयः स्वर्गाः। नहि स्वर्गस्थितानां स्वर्गप्राप्त्यपेक्षा सम्भवतीति भावः। इत्थं तपसः फलान्तरशून्यत्वं प्रतिपाद्य नायिकाया हृदयनिगूढं वास्तवमेव तपःकारणं किञ्चिदुद्घाटयति—अथ उपयन्तारम् इति। प्रार्थयस इति शेषः।

१. 'चकत्वे' ख. घ. ङ. पाठः. २. 'त्नर' ङ. पाठः. ३. 'कृतमन्वेषणमस' ङ. पाठः. ४. 'यगतं नि' ङ. पाठः. ५. 'व कि' क. ग, घ. पाठः.

अथशब्दः प्रश्ने। 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इति सिंहः। उपयन्तारं भर्तारम्। त्वं भर्तारं किं प्रार्थयस इत्यर्थः। यद्यपि भर्तृकामनया तपश्चरणं सर्वकन्याजनसाधारणं, तथापि त्वयि तु तन्नोपपद्यत इत्याह— समाधिना अलम् इति। समाधिना तपसा। अलंशब्दो वारणार्थे। 'अलं भूषणपर्याप्तिशक्तिवारणवाचक'मिति सिंहः। तपो न कर्तव्यमित्यर्थः। कुतो न कर्तव्यमित्यत्राह— रत्नं न अन्विच्छति इति। नान्विच्छति अन्वेषणं न करोति। नहि रत्नमात्मधारणयोग्यं जनमन्विष्य पर्यटतीत्यर्थः। तत्र हेतुमाह— तद् मृग्यते हि इति। तद् रत्नं मृग्यते अन्विष्यते। हिशब्दोऽवधारणे। मृग्यत एवेत्यर्थः। यथा सर्वप्रार्थनीयं रत्नमात्मधारणयोग्यपुरुषमन्विष्य पर्यटतीत्यसम्भाव्यं, तथा कान्तप्रार्थनया तवेदं तपश्चरणमपीति भावः। अत्र सर्वप्रार्थनीयरत्नकर्तृकान्वेषणप्रतिषेधेन तत्सदृशो देवीकर्तृकवरप्रार्थनाप्रतिषेधः प्रतीयत इति सादृश्यादप्रस्तुतप्रशंसेयम्। रत्नशब्दस्य स्वजातिश्रेष्ठवाचित्वे पुनरर्थान्तरन्यासः॥ ४५॥

निवेदितं निःश्वसितेन सोष्मणा
मनस्तु मे संशयमेव गाहते।
न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभः कथम्॥ ४६॥

(प्रकाशिका)

अथेत्थं परमार्थप्रसङ्गेन जातविक्रियामुपलभ्य तमेव परमार्थं किञ्चिद् विशदयति—

**निवेदितमिति। सोष्मणा इष्टानवाप्तिसन्तापोष्णेन। यन्मया वरप्रार्थनमत्र प्रतिक्षिप्तं, तदेव तपःकारणमिति सोष्मणा निःश्वसितेन निवेदितमित्यर्थः। अथ तत्त्वतस्तन्मुखेन श्रोतुकामः कामुकः पुनरपि सं-**

१. 'त्वमरः।' ङ. पाठः. २. 'मः पु' ख. पाठः.

**शये प्र[1]तिक्षिपति — मनस्त्विति । तुशब्दो मनस उपपत्त्यनुसं[2]धानविशेषं द्योतयति । संशयमेव गाहते, उपपत्त्यनुसरणेनेति शेषः । अत्र संशयशब्दो वितर्कमाह, यो निश्चयासन्नः । उपपत्तिमाह—प्रार्थितदुर्लभ इति । यत् सर्वप्रार्थ्यं वस्तु, तेनापि यत् प्रार्थ्यते, तत् तस्य दुर्लभं नै[3]व भवेदित्यर्थः ॥ ४६ ॥**

(विवरणम्)

इत्थं निजहृदयवर्तिनः परमार्थगतो वस्तुनः प्रसङ्गेन सञ्जातदीर्घनिःश्वासादिविक्रियां नायिकामुपलभ्य तमेव परमार्थं किमपि प्रकाशयति —

निवेदितमिति । सोष्मणा निःश्वसितेन निवेदितम् । ऊष्मणा सहितः सोष्मा । इष्टानवाप्तिसन्तापोष्णेनेत्यर्थः । निःश्वसितेन दीर्घनिःश्वासेन । निवेदितं ज्ञापितम् । वरप्रार्थनमिति शेषः । आशङ्क्य मया परिहृतं वरप्रार्थनमेव तपःकारणमिति तवान्तस्तापोष्णेन दीर्घनिःश्वासेन निवेदितमासीदित्यर्थः । अथात्मविषयमभिलापं तन्मुखेनैव श्रोतुकामः परिनिश्चितमेवार्थं संशयविषयतामेव नयति — मे मनस्तु संशयमेव गाहते इति । मे उपपन्नानुपपन्नार्थविवेचनकुशलस्य मम । मनः चित्तम् । तुशब्दोऽन्यचित्तेभ्यो व्यतिरेकं द्योतयति । नहि विवेककुशला दृष्टमप्यनुपपन्नमर्थं तथैवेति निश्चिन्वन्ति । संशयमनुपपत्तिम् । एवशब्द उपपत्तिलेशस्याप्यभावमाह । गाहते प्राप्नोति । सन्तापोष्णदीर्घश्वासानुमानेन वरप्रार्थनमेव तपःकारणमिति सम्यगवगतमपि तत्रोपपत्तिलेशस्याप्यभावाद् मनो मे निश्चयं नोपलभत इत्यर्थः । तामेवानुपपत्तिमाह — ते प्रार्थयितव्य एव न दृश्यते, कथं प्रार्थितदुर्लभः भविष्यति इति । ते सर्वप्रार्थनीयायास्तव । प्रार्थयितव्यः प्रार्थयितुं योग्यः कश्चित्, पुरुष इति शेषः । त्वदपेक्षयाधिकगुणो हि पुरुषस्त्वया प्रार्थयितव्यः । तादृशस्य लोकत्रयेऽप्यभावादियमुक्तिः । प्रार्थयितव्य एव नास्ति, किं पुनः प्रार्थित-

१. 'प्राक्षि' ग. घ. ङ. पाठः. २. 'धावनं वि' ख. घ. पाठः. ३. 'न भ' ङ. पाठः.

दुर्लभ इत्येवशब्दार्थः । न दृश्यते, लोकत्रय इति शेषः । प्रार्थितश्चासौ दुर्लभश्चेति प्रार्थितदुर्लभः । प्रार्थितत्वे सति दुर्लभ इत्यर्थः । सर्वप्रार्थनीयया त्वया प्रार्थयितव्यः[1] कश्चित् पुरुषो लोकत्रये नोपलभ्यते । अपि च यदि कदाचित् कश्चित् त्वया प्रार्थितो भवेत्, तर्हि तस्य भाग्यातिशय एव तत्र हेतुरिति कुतस्तस्य प्रार्थितदुर्लभत्वम् । ततो न तदर्थं तव तपश्चरणोपपत्तिरिति भावः ॥४६॥

अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथबन्धिनीर्जटाः[2]
कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७ ॥

(प्रकाशिका)

अथ सोष्मणो[3] विनिःश्वसितस्यैव बलवत्तां मन्यमानस्तं वरमुपालभते —

अहो इति । स्थिरशब्देन स्थैर्यगुणवाचिनापि यद्वृत्तमाहात्म्यात् पाषाणप्रख्येऽस्य जडत्वे पर्यवस्यतो[4] केवलोपालम्भकक्ष्यां[5] समारूढा । कोऽपि, ईश्वरो वा भवत्वित्यर्थः । युवा युवत्वाभिमानवञ्चितः । श्लथबन्धत्वं विरहखेदात् । ततश्च कपोललम्बित्वं । ततश्चालकसमाधिः । तथा सेतुकाव्ये — 'ळंबाळअमळिअपण्डुकवोळा' इति । कलमाग्रं कलमकणिशम् ॥ ४७ ॥

(विवरणम्)

इत्थमुपपरप्रभावेन परिहृतमपि वरप्रार्थनया तपश्चरणं प्रत्यक्षप्रमाणसिद्धस्य दीर्घनिःश्वासस्यैव प्राबल्याद् यथार्थमेवावधार्य तया प्रार्थ्यमानं वरमुपालभते — अहो इत्यादिभिस्त्रिभिः श्लोकैः ।

१. 'नीयः क' ख. घ. ङ. पाठः. २. 'लम्बिनी' मुद्रितकोशपाठः. ३. 'णो नि' क. ग. ङ. पाठः. ४. 'तास्य केवोपा' ङ. पाठः. ५. 'क्ष्या न स' ख. ग. घ. पाठः.

अहो इति । तव ईप्सितः युवा कः अपि स्थिरः अहो । तव त्वया । 'क्तस्य च वर्तमाने' (२. ३. ७) इति षष्ठी । ईप्सितः इष्यमाणः । वर्तमाने क्तः । युवा युवत्वाभिमानवञ्चित इत्यर्थः । कः अपि यः-कश्चनापि, साक्षादीश्वरो वा भवत्वित्यर्थः । स्थिरः जड इत्यर्थः । यद्यपि स्थिरशब्दोऽयं स्थैर्यगुणशालिनि द्रव्यविशेषे प्रसिद्धः, तथापि वक्ष्यमाणवाक्यप्रागल्भ्यात् पाषाणप्रख्ये जडत्वे पर्यवस्यति । अनेनायमुपालम्भयोग्योऽपीति ध्वन्यते । 'अहो हीति च विस्मये' इत्यमरः । जडत्वे हेतुमाह—यः कपोलदेशे[1] इमाः जटाः उपेक्षते इति । यः युवा कपोलदेशे[2] गण्डप्रदेशे । लम्बमाना इति शेषः । इमाः प्रत्यक्षेणैव लक्ष्यमाणाः । जटा उपेक्षते सरभसमागत्य स्वकराभ्यामेव न बध्नाति । कपोललम्बने हेतुमाह — श्लथबन्धिनीरिति । श्लथो विश्लथो बन्धो बन्धनमासामस्तीति[3] श्लथबन्धिन्यः, ताः । अत्र विरहपीडया केशेष्वनादरः श्लथबन्धत्वे हेतुः, श्लथबन्धत्वं तु कपोललम्बने, कपोललम्बनाच्च विरहविधुरप्रोषितनायिकालकसमाधिरिति क्रमोऽत्र प्रतिपादितः । प्रियवियोगेष्वलकानां कपोललम्बनत्वमुक्तं रघुवंशे —"शच्याश्चिरं पाण्डुकपोललम्बनान्मन्दारशून्यानलकांश्चकार ।" (स. ६. श्लो. २३) इति । न केवलं तदुपेक्षया कपोलयोरनुचितपरिग्रहो जातः, अपितु उचितपरित्यागोऽपीत्याह — चिराय कर्णोत्पलशून्यतां गते इति । चिराय चिरकालम् । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थका' इति सिंहः । कर्णयोराभरणत्वेन कल्पितमुत्पलं कर्णोत्पलं, तेन शून्यतां शून्यत्वम् । गते प्राप्ते । तपःप्रारम्भसमय एव कर्णोत्पलपरित्यागादेवमुक्तम् । कर्णालङ्काराणां कपोलमात्रशोभावहत्वात् कपोलयोरेव कर्णोत्पलशून्यत्वमपि । अनेन कपोलविशेषणेनापि विरहवेदनासमाधिः । त्वयि तु तदुपेक्षिता अपि जटाः 'किमिव हि मधुराणां मण्डनं नाकृतीनामि'ति न्यायेन

१. 'ले इ' घ. पाठः. २. 'ले ग' घ. पाठः. ३. 'मिति' क. पाठः.

मण्डनान्तरत्वेनैव पर्यवसिता इत्याह — कलमाग्रपिङ्गला इति । कलमाग्रं शालिशूकं, तद्वत् पिङ्गलाः रक्तवर्णाः । अनेन सुकुमारकेसरशिरीषकुसुमादिरूपकर्णाभरणत्वप्राप्तिर्जटानां दर्शिता ॥ ४७ ॥

**मुनिव्रतैस्त्वामतिमात्रकर्शितां**
**दिवाकरप्लुष्टविभूषणास्पदाम् ।**
**शशाङ्करेखामिव पश्यतो दिवा**
**सचेतसः कस्य मनो न दीर्यते ॥ ४८ ॥**

(प्रकाशिका)

एतदेवोपपादयति —

**मुनिव्रतैरिति** । पूर्वमेव कृशत्वादतिमात्रशब्दः । दिवाकरेति । दिवाकरप्लुष्टत्वं विभूषणस्थानानामेव यदुक्तं, तत्र तेषां विभूषणधारणकाले वातातपसंसर्गाभावान्मार्दवातिशयो हेतुः । शशाङ्करेखापक्षे विभूषणास्पदं त्रैलोक्यालङ्करणकृत्यम् । 'प्रतिष्ठा कृत्यमास्पदमि'ति सिंहवचनादुभयार्थ आस्पदशब्दः । सचेतस इति । सचेताश्चेद् दीर्येत, न चासौ दीर्यते, तस्मात् पाषाणप्रख्य एवासाविति स्थितम् ॥ ४८ ॥

(विवरणम्)

पाषाणादिवदचेतन एवायं त्वदीप्सितो वर इति यदुक्तं तदेवोपपादयति —

**मुनिव्रतैरिति** । मुनिव्रतैः अतिमात्रकर्शितां त्वां पश्यतः सचेतसः कस्य मनः न दीर्यते । मुनीनां व्रतैर्नियमैः तपोभिरित्यर्थः । अतिमात्रकर्शिताम् अतिमात्रम् अत्यर्थं कर्शितां कृशत्वं प्रापिताम् । पूर्वमेव कृशत्वादतिमात्रकर्शितत्वम् । त्वाम् एवम्भूतगुणविशिष्टाम् । पश्यतः अवलोकयतः सचेतसः चेतसा सहितस्य । सचेतनस्येत्यर्थः । कस्य मनो न दीर्यते

१. 'दूयते' मुद्रितकोशपाठः. २. 'रकरप्लु' घ. ङ. पाठः. ३. 'षां भू' घ. ङ. पाठः.

स्वयमेव विदीर्णं न भवति । दीर्यत इति कर्मकर्तरि प्रयोगः । एवम्भूतां त्वां पश्यतां सर्वेषामपि मनो दीर्यत एवेत्यर्थः । सचेतांश्चेत् तस्य मनो दीर्येत, नास्य मनो दीर्यते, तस्मात् पाषाणसदृश एवायमित्यर्थः । अत्र उपमामाह— दिवा शशाङ्करेखामिव इति । दिवा अहनि । शशाङ्कस्य चन्द्रस्य रेखां कलाम् । अत्यन्तकार्श्यं द्योतयितुं रेखाशब्दः । मुनिव्रतप्रतिवस्तुतया दिवा-शब्दः । पश्यतो मन इति अत्रापि योज्यम् । दिवा शशाङ्करेखां पश्यतो मन इवेत्यर्थः । निशायामतिमनोरमां शशाङ्करेखाम् अहनि परिधूसरां पश्यन् को वा हन्तेदानीमेतादृशी जातेयमिति न दूयत इत्यर्थः । उपमानोपमेययोः साधारणं धर्ममाह-- दिवाकराप्लुष्टविभूषणास्पदामिति । दिवाकरेण आदित्येन आप्लुष्टानि दग्धप्रायाणि विभूषणास्पदानि विभूषणानां कटकाङ्गदाद्याभरणानामास्पदानि स्थानानि यस्याः ताम् । तपसा सर्वेषामवयवानां कार्श्यमात्रं जातं, विभूषण-स्थानानां पुनः आभरणधारणकाले वातातपादिसंसर्गाभावेनात्यन्तमार्दवात् पुनः तत्संसर्गे जाते दग्धप्रायत्वमेवापन्नमिति भावः । शशाङ्करेखापक्षे तु दिवाकरेण आप्लुष्टं परित्यक्तं विभूषणास्पदं त्रैलोक्यालङ्कारकृत्यं यस्याः इति योज्यम् । 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरसिंहवचनादास्पदशब्दस्योभया-र्थत्वं द्रष्टव्यम् । दिवाकराप्लुष्टशशाङ्करेखां पश्यन् पुरुषः तत्समीचीनता-विधानस्याशक्यत्वात् तत्रोपेक्षां करोतीति युक्तम् । स्वाधीनानुग्रहः त्वदीप्सितः पुरुषः पुनः अखिलजगत्प्रार्थनीयां त्वामात्मप्रार्थनमात्रेणैतादृशीं पश्यन्नप्युपे-क्षत इति यत्, तदचेतनत्वप्रयुक्तमेवेति युक्तमेवास्य पाषाणादिप्रख्यत्वमिति भावः ॥ ४८ ॥

**अवैमि सौभाग्यमदेन वञ्चितं**
**तव प्रियं यश्चतुरावलोकिनः ।**

१. 'तनश्चे' ख. पाठः. २. 'नि क' घ. पाठः.

करोति लक्ष्यं रविमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९ ॥

(प्रकाशिका)

तमेव प्रकारान्तरेणोपालभते—

**अवैमीति । मत्सौभाग्यस्य दुर्लङ्घत्वात् सर्वथा मामेवासावभ्युपयास्यतीति सौभाग्यमदः, तेन वञ्चितम् । वञ्चनं च यद्वृत्तेन दर्शितम् । अरालं कुटिलम् ॥ ४९ ॥**

(विवरणम्)

अथ तमेव वरं प्रकारान्तरेणोपालभते —

अवैमीति । अहं तव प्रियं सौभाग्यमदेन वञ्चितम् अवैमि । तव प्रियं त्वया प्रियत्वेन सङ्कल्पितं पुरुषमित्यर्थः । सौभाग्यमदेन, सुभगत्वेन यो मदः तेन । मदीयस्य सौभाग्यस्य लोकोत्तरत्वादियं सर्वथापि मामेवाभिसरिष्यतीत्यभिमानेनेत्यर्थः । वञ्चितं कृतवञ्चनम् अवैमि कल्पयामि । ननु कुतो वञ्चितत्वमित्यत्राह—यः अस्य चक्षुषः रविं लक्ष्यं करोति आत्मीयं वक्त्रं न इति । यः प्रियः अस्य लोकोत्तरत्वेन दृश्यमानस्य चक्षुषः नेत्रस्य रविम् आदित्यं लक्ष्यं प्राप्यभूमिं करोति विदधाति । आत्मीयं निजं वक्त्रं वदनं न । लक्ष्यं करोतीति शेषः । यद्यसौ सौभाग्यमदगर्वितो नाभविष्यत्, तर्हि लोकोत्तरगुणमेतद् भवदीयं नेत्रमनवरतं तन्मुखावलोकनपरमेवाभविष्यत् । इदानीं तु तपःसिद्ध्यर्थं रविमात्रावलोकनपरमासीदित्यर्थः । क्रियाचातुर्यप्रतिपादने चक्षुषो विशेषं दर्शयति—चतुरावलोकिन इति । चतुरं सुन्दरं यथा भवति तथा अवलोकितुं शीलमस्येति

१. 'क्ष्यं चिरम' मुद्रितकोशपाठः. २. 'ग्येन' क. ख. ग. पाठः.

तथा । स्वरूपचातुर्यतोऽपि विशेषमाह — अरालपक्ष्मण इति । अरालानि कुटिलानि पक्ष्माणि अक्षिरोमाणि यस्य तस्य ॥ ४९ ॥

**कियच्चिरं श्राम्यसि गौरि! विद्यते**
**ममापि पूर्वाश्रमसाञ्चितं तपः।**
**तदर्धभागेन लभस्व काङ्क्षितं**
**वरं तमिच्छामि च साधु वेदितुम् ॥ ५० ॥**

(प्रकाशिका)

प्रसङ्गाद् वरमुपालभ्य कर्तव्यमवधारयन् वरं पृच्छति —

कियदिति । कियत् किंपरिमाणम् । चिरं चिरकालम् । 'कालाध्वनोः—' (२.३.५) इत्यादिना द्वितीया । पूर्वाश्रमो[1] ब्रह्मचर्यम् । अर्धभागेन समप्रविभागरूपांशेन । साधु सम्यक् । अत्र प्रकरणे त्रिभिः श्लोकैस्तपस उचितः कुशलप्रश्नः, ततस्त्रिभिरनुप्रवेशार्था तपसः प्रशंसा, तत एकेनानुप्रवेशः, तत एकेन स्वजिज्ञासाकथनं, ततस्त्रिभिः जिज्ञासासमर्थनं, तत एकेन स्वजिज्ञासितकथनं, तत एकेन वास्तवोद्घाटनं, तत एकेन तत्स्थिरीकरणं, ततः प्रसङ्गागतस्त्रिभिर्वरोपालम्भः, तत एकेन कार्योपसंहारपुरस्सरः प्रश्न इत्यनुज्झितक्रमत्वमनुसन्धेयम् ॥ ५० ॥

( विवरणम् )

इत्थं चाटुशतैरावर्जितचित्तां देवीं प्रति प्रष्टव्यमेवार्थं पृष्ट्वा वचनमुपसंहरति —

कियदिति । गौरि! त्वं कियच्चिरं श्राम्यसि । गौरि! हे पार्वति! कियत् किंपरिमाणं चिरं चिरकालम् । 'कालाध्वनोरि'ति द्वितीया । श्राम्यसि तपः करोषि । 'श्रमु तपसि खेदे च' इति धातुः । अलमनेन श्रमेणेति भावः । ननु श्रमाभावे कथमभिमतसिद्धिः, अत आह — ममापि पूर्वाश्रम-

१. 'मं' ङ. पाठः.

सञ्चितं तपः विद्यते इति । ममापि, न केवलं तवैवेत्यर्थः । पूर्वाश्रमसञ्चितं पूर्वाश्रमे ब्रह्मचार्याश्रमे सञ्चितम् आर्जितं तपः। विद्यते भवतीत्यर्थः। नन्वस्तु नाम, प्रकृते तु किमायातमित्यत्राह — तदर्धभागेन काङ्क्षितं लभस्व इति । तदर्धभागेन तस्य तपसः अर्धभागेन समप्रविभागरूपेणांशेन । काङ्क्षितमीप्सितम् । वरमिति शेषः । (लभस्व प्राप्नुहि) अलं तव परिश्रमेण । अस्मदार्जितस्य तपसोऽर्धभागेनापि त्वदीप्सितं वरं प्राप्नुहीत्यर्थः । ननु तर्हि को विलम्बः, अत आह — अहं तं वरं साधु वेदितुम् इच्छामि च इति । तं त्वया मनसा सञ्चिन्त्यमानम् । वरं भर्तारं साधु सम्यग् वेदितुं ज्ञातुम् इच्छामि अभिलषामि च । चकारः समुच्चये । पूर्वं दीर्घनिःश्वासानुमानेन सामान्यतो विदितं[1] वरं विशेषतः प्रतिपत्तुमिच्छामीत्यर्थः । अत्र निगूढोऽर्थः — तपश्शब्देनात्र तपस्साधनभूतं शरीरं लक्ष्यते । साध्यसाधनभावश्च सम्बन्धः । 'शरीरमाद्यं खलु धर्मसाधनम्' इत्युक्तत्वात् । शरीरस्य दिव्यत्वप्रतीतिः तपश्शब्देनो[2]पादानस्य फलम् । पूर्वाश्रमसञ्चितं पूर्वं जगत्सर्गादौ अश्रमेण अनायासेन, मायामात्रेणेत्यर्थः । सञ्चितं सम्पादितं यत् तपः शरीरं तस्यार्धभागेन काङ्क्षितं लभस्व । हे गौरि ! अलं तवानेन परिश्रमेण । मम शरीरा[3]र्धभागमेव ते दास्यामि । तं वरं शरीरार्धप्रदं भर्तारं वक्ष्यमाणपूर्वपक्षयुक्तिपरिहारक्रमेण ज्ञातुमिच्छामि च । पूर्वपक्षसिद्धान्तक्रमेण व्याख्यायमानमेव हि सर्वं मनोहरं भवतीति साधुशब्दप्रयोगः ॥ ५० ॥

**इति प्रविश्याभिहिता द्विजन्मना**
**मनोगतं सा न शशाक शंसितुम् ।**
**अथो वयस्यां परिपार्श्ववर्तिनीं**
**[4]निवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥**

१. 'तं तं व' क. ख. पाठः. २. 'नात्रोपा' ख. पाठः. ३. 'र्धमे' ख. घ. पाठः.
४. 'वि' मुद्रितकोशपाठः

(प्रकाशिका)

एवं प्रतारणाकुशलेन परममायिना प्रतारिताया देव्या वृत्तान्तमाह —

**इतीति। प्रविश्यानुप्रविश्य। इदं[1]मकथनस्याशक्यत्वे हेतुः। न शशाक, लज्जयेति शेषः। अथो इति शंसनस्याशक्यत्वावधारणानन्तरमित्यर्थः। निवर्तितानञ्जननेत्रं, पूर्वं द्विजाभिमुखस्थितत्वा[2]न्निवर्तितेन लोचनेन सखीं स्वमनोरथशंसनाय चोदितवतीत्यर्थः॥ ५१॥**

(विवरणम्)

इत्थं कपटवटुना वञ्चिताया देव्यास्तदनुगुणां प्रवृत्तिमाह —

इतीति। द्विज[3]न्मना प्रविश्य इति अभिहिता सा मनोगतं शंसितुं न शशाक। द्विजन्मना ब्राह्मणेन। 'मातुरग्रेऽभिजायन्ते द्वितीयं मौञ्जिबन्धनात्' (याज्ञ० अ.१.श्लो.३९) इति स्मृत्यनुसारेण द्वे जन्मनी यस्य विद्येते स द्विजन्मा। अनेन ब्राह्मणप्रार्थितस्यार्थस्यानतिक्रमणीयत्वाद् वचनस्यावश्यकत्वमुक्तम्। न केवलमदृष्टवशादे[4]वं वचनस्यावश्यकत्वं, दृष्टवशादपीत्याह — प्रविश्येति। अनुप्रविश्य, पूर्वोक्तेन वचनविन्यासक्रमेणान्तः प्रविश्येत्यर्थः।

यस्य यस्य हि यो भावस्तेन तेन च तं नरम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्॥''

इति न्यायेन कपटवटुना वशीकृतत्वमनेन दर्शितम्। अभिहिता उक्ता। ब्राह्मणत्वेन बन्धुत्वे(न चाकथन)स्याशक्यत्वेन वचनस्यावश्यकत्वे सत्यपि सा पार्वती मनोगतमर्थं शंसितुं कथयितुं न शशाक। लज्जयेति शेषः। देव्यास्तात्कालिकमुपायान्तरं दर्शयति — अथो सा परिपार्श्ववर्तिनीं वयस्यां विवर्तितानञ्जननेत्रम् ऐक्षत इति। अथो शंसनस्याशक्यत्वावश्यकत्वयोरवधारणानन्तरम्। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः।

१. 'दं क' क. ख. ग. पाठः. २. 'द्वि' घ. ङ. पाठः. ३. 'जातिना' घ. पाठः. ४. 'व, द' घ. पाठः.

परिपार्श्ववर्तिनीं समीपचारिणीम्। अत्र ताच्छील्यार्थेन प्रत्ययेन सर्वदा समीपवर्तनमुक्तम्। तेन च वयस्याया देवीहृदयगतसर्वाभिप्रायविज्ञानं देव्यास्तदीयवचनकौशलावधारणं च दर्शितम्। वयस्यां सखीम्। विवर्तितानञ्जननेत्रम्, ईक्षणक्रियाविशेषणञ्चेदम्। पूर्वमभिमुखस्थितब्रह्मचारिमुखवर्तित्वात् तस्माद् विवर्तिते परावर्जिते अनञ्जने आदौ विरहपीडया पश्चात् तपश्चरणेन चाञ्जनरहिते नेत्रे यथा भवति तथा। ऐक्षत ईक्षितवती। अनञ्जनशब्देनात्र पीडाधिक्यप्रतिपादनद्वारेण सर्वा अपि मत्पीडा वक्तव्या इत्यर्थो ध्वन्यते। ब्रह्मचारिमुखाद् नेत्रमाकृष्य सखीमुखावलोकनमात्रेण तां निजमनोरथशंसनाय चोदितवतीत्यर्थः ॥ ५१ ॥

**सखी तदीया तमुवाच वाञ्छितं**
**निबोध साधो! तव चेत् कुतूहलम्।**
**यदर्थमम्भोजमिवोष्णवारणं**
**कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥**

(प्रकाशिका)

**सखीति**। साधो! इति साधुष्वकथनीयं नास्तीति द्योत्यते। कुतूहलं चेदिति कथितेऽपि कुतूहलनिवृत्तिरेव फलमिति द्योतयति। वाञ्छितस्य दुराधिगमत्वं दर्शयता[3] यच्छब्दवाक्यार्थेन[4] कुतूहलस्योपपद्यमानतापि द्योत्यते। अस्मिन्नर्थे कुतूहलं च तवोपपन्नं, साधुभावादवञ्चनीयश्चासि, तस्माद् वाञ्छितं वक्ष्यमाणं विदित्वास्मन्मतज्ञो[5] निष्कुतूहलश्च भवेत्यर्थः। एतद्वाक्यं नैकृतिके तस्मिन्नार्जवसुलभं विस्रम्भं द्योतयद् विस्रम्भभाषितानां घटकतया कविनोपात्तम् ॥ ५२ ॥

१. 'वर्णिनं नि' मुद्रितकोशपाठः. २. 'तयति।' ङ. पाठः. ३. 'द्योतय' ङ. पाठः. ४. 'क्येन' क. ख. घ. पाठः. ५. 'त्समन्त्रो नि' घ. पाठः., 'त्समानो नि' ख. पाठः.

(विवरणम्)

अथ देव्या वचनाय चोदिताया वयस्यायाः प्रवृत्तिं दर्शयति दशभिः श्लोकैः। तत्रादौ कपटवटोर्वञ्चनाचुञ्चुतामजानती वक्ष्यमाणानां विस्रम्भभाषितानामुपपत्तिं दर्शयति—

सखीति। तदीया सखी तम् उवाच। तदीया पार्वतीसम्बन्धिनी सखी वयस्या। 'आलिः सखी वयस्या चे'त्यमरः। तमपरमार्थब्रह्मचारिणम् उवाच उक्तवती। उक्तिप्रकारमेवाह — साधो! तव कुतूहलं चेद् वाञ्छितं निबोध इति। हे साधो! समचित्त!। नहि साधुषु किञ्चिदप्यकथनीयमस्तीति भावः। नापि साधुर्वञ्चनीय इति च द्योत्यते। तव साधुत्वादवञ्चनीयस्य ते। कुतूहलं कौतुकम्। 'कौतूहलं कौतुकं च कुतुकं च कुतूहलमि'त्यमरः। कौतुकमस्ति चेन्निबोध नितरामवगच्छ, सर्वमपि कथयामीत्यर्थः। अत्र कुतूहलमस्ति चेद् निबोधेत्यनेन कुतूहलनिवृत्तिमात्रमेवावधारणस्य फलमिति दर्शयति। सर्वमवधार्य वयमिव त्वमपि दुःखभाजनमात्रं भवेत्यर्थः। बोद्धव्यमेवार्थं सांक्षिप्य दर्शयति — यदर्थम् एतया वपुः तपस्साधनं कृतमिति। यदर्थं यादृशवाञ्छितसिद्ध्यर्थम्। एतया अत्यन्तपेलवगात्र्या अनया। वपुः मृदुतरमात्मशरीरम्। अत्यन्तकठिनशरीरसाध्यस्य तपसः साधनत्वेन कृतं विहितम्। तं वाञ्छितं निबोधेति पूर्वेण योजना। अनेन वाक्येन वाञ्छितस्यार्थस्यात्यन्तदुस्साध(न?)त्वमुक्तम्। श्रवणकुतूहलस्योपपत्तिश्च द्योत्यते। एतादृशे तपस्येतादृशस्य शरीरस्यायोग्यतामुपमया समर्थयते — अम्भोजम् उष्णवारणम् इव। अम्भोजं तामरसम्। उष्णवारणम् आतपत्रम् इव। यथा दर्शनावघ्राणादिभिरुपभोक्तव्यमत्यन्तपेलवमम्भोरुहमातपत्रत्वेन विधीयते, तथैवेदमपीत्यर्थः। पीडाया अत्यन्तदुस्सहत्वमेवात्र हेतुरिति भावः॥ ५२॥

**इयं महेन्द्रप्रभृतीनधिश्रिय-**
**श्चतुर्दिगीशानवमत्य भामिनी।**

१. 'मानिनी' मुद्रितकोशपाठः.

अरूपहार्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥

(प्रकाशिका)

तान्याह—

**इयमिति।** अवमत्येत्यनेन तेषामतिसुलभत्वं द्योत्यते। भामिनी कोपना। इन्द्रादीनां वरत्वकथने कुप्यतीति भावः। अरूपहार्यमित्यनेन तपस एव तत्र साधनत्वं द्योतयति। पिनाकपाणिमिति वीराभिलाषिण्यो हि कन्यका इति भावः ॥ ५३ ॥

(विवरणम्)

अथ तान्येव विस्रम्भकथनान्याहावशिष्टैः श्लोकैः। तत्रादौ हृदयगतं वरमेवोद्दिशति—

**इयमिति।** इयं महेन्द्रप्रभृतीन् चतुर्दिगीशान् अवमत्य पिनाकपाणिं पतिम् आप्तुम् इच्छति। इयम् अतिसुकुमारतया दृश्यमाना, अनेन सहस्राक्षाद्युपयोगयोग्यता निरस्ता। महेन्द्रप्रभृतीन् इन्द्रयमवरुणकुबेरान्, किं पुनरन्यानिति भावः। तेषाम् आधिपत्यतोऽपि त्रिलोकनाथात् पिनाकपाणेः अत्यन्तहीनतां दर्शयति—चतुर्दिगीशानिति। पूर्वादीनां चतुर्णां दिशां क्रमादीशान् स्वामिनः। अवमत्य धिक्कृत्य, अत्यन्तसुलभांस्तान् परित्यज्येत्यर्थः। पिनाक इति हरधनुषो नाम। 'पिनाकोऽजगवं धनुरि'त्यमरः। पिनाकः पाणौ यस्य तम्। वीरकामिन्यो हि नितम्बिन्य इति भावः। अनेनास्यास्तत्प्रार्थनैव युक्ततरेति द्योत्यते। वीराग्रेसर एवायं न पाषाणादिवद् जड इति चानेनैव द्योत्यते। पतिं भर्तारं, पिनाकपाणिं पतित्वेन प्राप्तुम्[3]इच्छतीत्यर्थः। महेन्द्रप्रभृतीनां सर्वलोकप्रार्थनीयत्वमाह—अधिश्रिय इति। अधिगता प्राप्ता श्रीः ऐश्वर्यं यैः तान्। देवीं विशिनष्टि—भामिनीति।

१. 'नशीला।' ङ. पाठः. २. 'वाक्यान्या' घ. पाठः. ३. 'मिल' क. पाठः.

'कोपना सैव भामिनी'त्यमरः । कोपशीलेत्यर्थः । अनेन महेन्द्रादीनां वरत्व-कथनमात्रेऽपि कोपशीलत्वमुक्तम् । ननु किं पिनाकपाणिप्राप्त्यर्थं तपश्चरण-क्लेशेन, रूपसम्पदा सर्वलोकप्रार्थनीया खल्वेषा । उक्तं च — 'न रत्नमन्वि-च्छति मृग्यते हि तत्' (स. ५. श्लो. ४५) इति । तत्र परिहारमाह — मदनस्य निग्रहाद् अरूपहार्यम् इति । मदनस्य कामदेवस्य । निग्रहाद् हननात् । रूपेण सौन्दर्येण हार्यः हर्तुं वशीकर्तुं शक्यो रूपहार्यः, रूपहार्यो न भवती-त्यरूपहार्यः, तम् । कामदहनदर्शनानन्तरं भगवतो रूपहार्यत्वाभावमवधार्य तत्प्राप्तावुपायान्तरमपश्यन्ती तपश्चरणमेव तत्रोपायत्वेन निश्चितवतीत्यर्थः ॥

असह्यहुङ्कारनिवर्तितः पुरा
पुरारिमप्राप्तमुखः शिलीमुखः ।
इमां हृदि व्यायतपातमक्षिणोद्
विशीर्णमूर्तेरपि पुष्पधन्वनः ॥ ५४ ॥

(प्रकाशिका)

कथं प्रतिकूलेऽपि प्रेमेत्याशङ्क्य तदेव हि प्रेमकारणमित्याह —

असह्येति । व्यायतपातं दीर्घतरपातम् । अक्षिणोदबाधत । दुर्बले हि सर्वः प्रगल्भत इति भावः ॥ ५४ ॥

(विवरणम्)

अथ वक्ष्यमाणानां मदनवेदनानामतिमहतीनां दग्धे मदनेऽप्युपपत्तिं दर्शयति —

असह्येति । विशीर्णमूर्तेः अपि पुष्पधन्वनः शिलीमुखः पुरा असह्य-हुङ्कारनिवर्तितः पुरारिम् अप्राप्तमुखः इमां हृदि व्यायतपातम् अक्षिणोत् । विशीर्णा दग्धा मूर्तिः शरीरं यस्य तस्यापि । अपिशब्दः शिलीमुखप्रवृत्ताव-नुपपत्तिं वक्ति । पुष्पधन्वनः पुष्पमेव धनुः यस्य तस्य कामदेवस्य । शि-लीमुखः शरः । 'अलिबाणौ शिलीमुखावि'त्यमरः । पुरा कामदहनावस्था-

१. 'देवद' क. ख. पाठः. २. 'व प्रे' घ. पाठः. ३. 'नादीना' घ. पाठ

याम् । असह्येन सोढुमशक्येन हुङ्कारेण कोपोद्रेकजनितेन शब्दविशेषेण करणभूतेन निवर्तितः व्यावर्तितः । पुरारिणेति शेषः । अत एव पुरारिम् अप्राप्तमुखः, पुराणामरिः पुरारिः । अनेन हरस्यानभिभवनीयत्वमुक्तम् । अप्राप्तं मुखमग्रं यस्य तथाभूतः सन् । इमां स्त्रीत्वेन बाल्यावस्थया च दुर्बलां पार्वतीम् । हृदि हृदये । अनेन मर्मस्थलपात उक्तः । तेन च वेदनाधिक्यं ध्वन्यते । व्यायतपातमिति क्रियाविशेषणम् । व्यायतः विशेषेण आयतः दीर्घः चिरकालावस्थायी पातः पतनं यथा भवति तथा अक्षिणोत् । 'क्षिणु हिंसायामि'ति धातुः । अत्यन्तमबाधतेत्यर्थः । शरमोक्षानन्तरं हरकोपकृशानुना मदने दग्धे हरमेव लक्षीकृत्य सरभसमभिपतन् मदनबाणो भगवता हुङ्कारमात्रेण निवर्तितः सन् भगवत्परिचर्यार्थं तत्पार्श्ववर्तिनीं दुर्बलामनाथामिमामबाधत । दुर्बलेषु के नाम न प्रगल्भन्त इति भावः ॥ ५४ ॥

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥ ५५ ॥

(प्रकाशिका)

अथ चतुर्भिः श्लोकैः पूर्वानुरागचेष्टां वर्णयति —

तदा प्रभृतीति । 'प्रभृतिशब्दयोगे पञ्चमी दृष्टा । सप्तमीप्रयोगस्तु मृग्य' इति दक्षिणावर्तः । उन्मदना उद्भूतमदना । ललाटिका ललाटाभरणम् । 'कर्णललाटात् कनलङ्कारे'(४.३.६५)इति कन् । दक्षिणावर्तस्तु — अनेनानूढत्वमुक्तम् । ऊढानां तु तिलकमलङ्कारः । वक्ष्यति च 'विवाहदीक्षातिलकं चकार' (स० ७. श्लो. २४.) इतीत्याह । तदसत् । ऊढाया अपि विरहतापप्रशमाय चन्दनेन ललाटिकैवालङ्कारः, न तु तिलकः, तस्य ललाटव्यापित्वाभावात् । निर्वृतिं ज्वरप्रशमम् । सङ्घातः स्त्यानभावः ॥ ५५ ॥

१. 'नात' क, ख, ग, पाठः.

(विवरणम्)

अथ चतुर्भिः श्लोकैः पूर्वानुरागचेष्टाः प्रतिपाद्यन्ते। तत्रादौ शरपातानन्तरभवं मदनव्याधिमेवाह—

तदेति। बाला तदा प्रभृति पितुः गृहे तुषारसङ्घातशिलातलेषु अपि जातु निर्वृतिं न लभते स्म। बाला ततः पूर्वं कदाचिदपि अननुभूतमदनवेदना स्वतो दुर्बला चेत्यर्थः। तदाप्रभृति शरपातोनन्तरकालादारभ्य। पितुः गृहे हिमवत्प्रदेशे। अनेनानवरतप्रवृत्तहिमजलवर्षशीतलस्वभावत्वं सर्वप्रदेशानामुक्तम्। तेन च तत्रापि निर्वृतिलाभाभावाद् मदनवेदनायाः प्रभूतत्वं सूचितम्। स्वतः शीतलेष्वपि हिमवत्प्रदेशेषु शीतलिम्नः परमकाष्ठाधिष्ठितान् प्रदेशविशेषानाह—तुषारेति। तुषाराणां सङ्घातः तुषारसङ्घातः। तुषारो हिमम्। सङ्घातः समूहः। तुषारसङ्घाताश्च ताः शिलाश्चेति तुषारसङ्घातशिलाः, तासां तलेषु प्रदेशेषु। अपिशब्दः तत्र निर्वृतिलाभाभावस्यानुपपत्तिमाह। अत्र बहुवचनेन यदा तदङ्गसङ्गादेका शिला शीतलतां जहाति, तदा शिलान्तरे शेत इति क्रमेण सकलशिलातलशयनं द्योत्यते। जातु क्षणकालमपि। निर्वृतिं ज्वरप्रशमम्। न लभते स्म नोपगतवती। निर्वृतिलाभाभावे हेतुमाह—उन्मदनेति। उद्भूतमदना, अत्र मदनशब्दो मदनवेदनां लक्षयति। शीतोपचाराणामपि निरर्थकत्वमाह—ललाटिकेति। ललाटिकाचन्दनधूसरालका। ललाटिका ललाटालङ्कारः 'कर्णललाटात् कनलङ्कारे' (४.३.६५) इति कन्। टाप्। 'प्रत्ययस्थादि—'(७.३.४४)त्यादिना अकारस्येकारादेशः। ललाटालङ्कारभूतं चन्दनं ललाटिकाचन्दनं, मदनज्वरशान्तये ललाटे शीतोपचारार्थं निक्षिप्तं चन्दनमित्यर्थः। तेन धूसराणि ललाटतटघटनमात्रेणैव झटिति भस्मभावमुपगतेन चन्दनेन धूसरवर्णान्यलकानि यस्याः सा तथा॥ ५५॥

१. 'तनान' क. ख. ग. पाठः. २. 'तनांन' क. ख. ग. पाठः. ३. 'ब्दो वे' क. ग. घ. पाठः.

उपात्तवर्णे चरिते पिनाकिनः
सबाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६ ॥

(प्रकाशिका)

**उपात्तवर्णे** इति। वर्णो गीतिक्रमः,

"शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे तथा ।
गीतिक्रमे (स्थि?स्तु)तौ वेषे वर्णशब्द उदीरितः ॥"

इति हलायुधः। चरिते त्रिपुरदाहादौ। वनान्तेति वनान्तेषु संगीताभ्यासार्थं कृतसख्यो इत्यर्थः। एकान्ते पिनाकिचरितश्रवणतृष्णया वनान्तगमनम्। अरोदयत् स्वदुःखानुवेधवशात् ॥ ५६ ॥

(विवरणम्)

विलापमाह —

उपात्तेति । इयं पिनाकिनः चरिते उपात्तवर्णे सबाष्पकण्ठस्खलितैः पदैः वनान्तसङ्गीतसखीः किन्नरराजकन्यकाः अनेकशः अरोदयत् । इयं तव पुरतो वर्तमाना। पिनाकिनः हरस्य, अत्र पिनाकिपदोपादानेन हरस्य वीराग्रेसरत्वं ध्वन्यते । तेन च त्रिपुरदहनगजासुरावमर्दनादिचरितानामानन्त्याद् गीतिक्रमसौकर्यं ध्वन्यते । चरिते त्रिपुरदहनादौ । उपात्तवर्णे उपात्तो वर्णो गीतिक्रमो यस्मिंस्तथाभूते सति ।

"शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे व्रते ।
गीतिक्रमे स्तुतौ वेषे वर्णशब्दः स्मृतो बुधैः ॥"

इति हलायुधः । सबाष्पकण्ठस्खलितैः 'बाष्पः कण्ठाद्याश्रयो दुःखवेगः' इति

१. 'हृद्याभिरिव' ख. ग. घ. पाठः. २. 'ते' घ. पाठः. ३. 'रावम' घ. पाठः.

भोजः । तत्सहिते कण्ठे स्खलितैः स्खलनं प्राप्तैः गद्गदप्रतिहतैरित्यर्थः । पदैः पदमात्रमपि न प्रसरति, किं पुनः गीतिक्रम इति भावः । वनान्तसङ्गीतसखीः वनान्ते यत् सङ्गीतं तत्र सखीः, वनान्ते सङ्गीताभ्यासार्थं कृतसख्या इत्यर्थः । किन्नरराजकन्यकाः किन्नराणां किम्पुरुषाणां राजानः किन्नरराजाः, तेषां कन्यकाः । किन्नराणां स्वरमाधुर्याधिक्यात् किन्नरपदोपादानम् । यथा रघुवंशे—

"वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वरौ ।
किं तद् येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥"

(स. १५. श्लो. ६४)

इति । राजपुत्र्या देव्या राजपुत्रीभिरेव सख्यस्यौचित्याद्राजपदोपादानम् । अनेकशः मुहुर्मुहुः । अरोदयत् रोदनं कारितवती । आत्मशोकानुवेधवशादिति शेषः । अयमभिप्रायः—यदा तावदियमेकान्ते पिनाकिचरितश्रवणतृष्णया वनान्तमुपगम्य सङ्गीताभ्यासव्याजेन काश्चन मनोहरस्वराः किन्नरराजकन्यकाः समानीय प्रसङ्गार्थमादौ स्वयमेव त्रिपुरदहनादिरूपं हरचरितं किमपि गातुमारभते. तदैव तत्स्वरूपस्मरणोद्बुद्धया द्विगुणया विरहवेदनया बाष्पगद्गदं रुदती निजशोकदर्शनसञ्जातशोकातिरेकास्ताः सर्वा एव मुहुर्मुहुररोदयत् । पिनाकिचरितं तु न किञ्चिदपि श्रुतवती । अहो विपरीतस्तत्राप्यस्या विधिरिति ॥ ५६ ॥

त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवा-
गसत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥

(प्रकाशिका)

त्रिभागशेषास्विति। त्रिभागस्तृतीयो भागः। त्रिभागशेषास्विति निद्राया दुर्लभत्वं द्योत्यते। क्षणं निमील्येति स्वप्नावसर उक्तः। अलक्षित्वादिना स्वप्ने प्रत्यक्षभ्रमो द्योत्यते[2]। क्व व्रजसीत्यनेन उपगूढस्य पलायनोद्यमस्त्रासहेतुः प्रतीयते। त्रासाच्च सहसा विबोधः॥ ५७॥

(विवरणम्)

निद्रापरिक्षयमीषन्निद्रासमये स्वप्नसमागमं चाह—

त्रिभागेति। इयमिति पूर्वश्लोकादत्रापि कर्तृत्वेनानुषज्यते। इयं निशासु त्रिभागशेषासु क्षणं नेत्रे निमील्य नीलकण्ठ! त्वं क्व व्रजसि इति सहसा व्यबुध्यत। निशासु रात्रिषु। त्रिभागशेषासु तृतीयो भागस्त्रिभागः, अंशवाचिना शब्देन सह समस्यमानः सङ्ख्याशब्दः पूरणप्रत्ययेन विनापि पूरणप्रत्ययोपेतपदवाच्यमर्थमेव ब्रवीतीत्यवगन्तव्यम्। शतांशः सहस्रांशः इत्यादिप्रयोगदर्शनात्। यथा च 'तस्मिन्नात्मचतुर्भागे'(स. १६. श्लो. ९६) इति रघुवंशे। तृतीयो भागः शेषोऽवशिष्टो यासु तादृशीषु सतीषु, अनेन तत्पर्यन्तं निद्रालेशस्याप्यभावः सूचितः। क्षणं क्षणकालम्, अनेन तत्काले निद्रावसर उक्तः। नेत्रे लोचने। निमील्य स्वप्नावस्थयेति शेषः। नीलकण्ठेति सम्बुद्ध्या कालकूटकबलनादिलोकोपकारनिरतस्य तव अनागसमनाथां च मां परित्यज्य गमनमनुचितमिति ध्वन्यते। क्व व्रजसि क्व गच्छसि, इत्यनेन क्षणमुपगूढमात्रस्य पलायनोद्युक्ततया स्वप्नदर्शनं ध्वन्यते। अतिपराधीनत्वभावनाजनितः संस्कारस्तथा स्वप्नदर्शने हेतुरित्यस्माकमूहः। पलायनोद्यमाच्च त्रासः, त्रासाच्च सहसावबोध इत्यादयश्च सूच्यन्ते। इतिशब्दादूर्ध्वमुक्त्वेति शब्दश्च द्रष्टव्यः, क्व नीलकण्ठेत्यादिशब्दमुक्त्वेत्यर्थः। अत्र निद्राया

१. 'क्ष्येत्यादि' ग. पाठः., 'क्षेत्यादि' घ. पाठः. २. 'ते। व्र' क. ग. पाठः ३. 'निद्राव' ग. घ. पाठः. ४. 'ता' ख. पाठः. ५. 'हृ' घ. पाठः.

अतिमान्द्यात स्वप्नजागरावस्थयोः परस्परसङ्करात स्वप्ने प्रत्यक्षत्वभ्रमः तेन च परमार्थसत एव वचसः प्रवृत्तिरिति द्रष्टव्यम् । [illegible] शीघ्रमेव प्रबुद्धाभूत् । स्वप्नावस्थाया विरतौ वाङ्मात्रमेवावशिष्टं [illegible] न तत्र दृष्टोऽभूदित्याह — अलक्ष्यवागिति । लक्ष्यशब्दश्चात्र यमुद्दिश्य वचसः प्रवृत्तिः, तं लक्षयति । अलक्ष्या लक्ष्येण रहिता वाग् यस्याः सा तथोक्ता । आलिङ्गनस्याप्यभावमाह — असत्यकण्ठार्पितबाहुबन्धनेति । असत्ये अपर-मार्थे सदसद्विलक्षणे कण्ठे इत्यर्थः । शुक्तिकारजतादिषु मिथ्याज्ञानेषु सद-सद्विलक्षणं रजतादिकं विषयः इत्यद्वैतवादिनां मतं, तदनुसारेणेयमुक्तिः । अन्यथा पुनरलक्ष्यवागितिवदकण्ठार्पितबाहुबन्धनेत्येव प्रयोगः स्यात् । अर्पितं न्यस्तं बाहुबन्धनम् आलिङ्गनं यया सा तथा । स्वप्नसमागमावस्थायामपि पराधीन एवास्याः प्रियः । कष्टमस्याः विधिवैपरीत्यमिति भावः ॥ ५७ ॥

सदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥

(प्रकाशिका)

एवं स्वप्ने सन्दर्शनमुक्त्वा चित्रेऽप्याह —

सदेति । सदा सर्वगत इति कालतो देशतश्चानवच्छेदकथनेना-पह्नवावकाशं निराकरोति । भावोऽभिलाषः । स्वहस्तेनोल्लिखितश्चित्रे नि-वेशितः । रहसीति अस्मास्वदृश्यमानासु पश्यन्तीष्वित्यर्थः । अत्रापि प्रत्यक्षभ्रमः । अत्र चतुर्ष्वपि श्लोकेषु व्याधिविलापजागरोन्मादाः क्रमाद् दर्शिताः प्राधान्येन, भावाश्चान्येऽपि गुणत्वेन ॥ ५८ ॥

१. 'यदा' मुद्रितकोशपाठः.

(विवरणम्)

तदुन्मादावस्थां चाह –

त्वं बुधैः सदा सर्वगतः उच्यसे । चित्रनिवेशिते भगवत्युन्मादावस्थया प्रत्यक्षभ्रमेणात्र त्वंपदप्रयोगपूर्वको व्यवहारः । बुधैः विद्वद्भिर्मन्वादिभिः । अनन तद्वचनस्य वेदमूलत्वादन्यथात्वशङ्कां निवर्तयति । सदा सर्वदा सर्वेषु कालेषु । अनेन कालतः परिच्छिन्नत्वं निरस्तम् । सर्वगतः सर्वत्र गतः । अनेन देशतः परिच्छिन्नत्वं निरस्तम् । उच्यसे कथ्यसे । त्वं देशकालानवच्छिन्न इति मन्वादिभिः स्मर्यसे इत्यर्थः । नन्वस्तु नाम मे देशकालानवच्छिन्नत्वं, प्रकृते तु को विरोधः, अत आह — त्वं भावस्थम् इमं जनं कथं न वेत्सि इति । भावस्थम्। भावोऽभिलाषः, तत्र तिष्ठतीति भावस्थः । 'सुपि स्थः' (३. २. ४) इति कः । अभिलाषस्य समुद्राकारेण वर्धमानत्वात् तस्मिन्नेव स्थितमित्यर्थः । इमं जनं मां कथं न वेत्सि न जानासि । जानास्येवेत्यर्थः । देशकालाभ्यामनवच्छिन्नस्य तव मदभिलाषाज्ञानादुपेक्षणमिति वक्तुं न युक्तम्। तस्माद् निर्दयत्वादेवोपेक्षणमिति भावः। चित्रार्पिते भगवति प्रत्यक्षत्वभ्रमादयमुपालम्भ इति वदन्ती देव्या देवविषयस्य भावस्य परमकाष्ठाधिष्ठितत्वमाह — मुग्धया स्वहस्तोल्लिखितः चन्द्रशेखरः रहसि इति उपालभ्यत च इति । मुग्धया मोहमुपगतया । मोहो विपरीतग्रहः। चित्रस्थितेऽपि चन्द्रशेखरे सञ्जातपरमार्थचन्द्रशेखरबुद्ध्येत्यर्थः । स्वहस्तोल्लिखितः आदरातिशयात् स्वहस्तेनैव चित्रे निवेशितः । स्वरूपदर्शनाभिलाषातिशयादिति शेषः । चन्द्रः शेखरः शिरोलङ्कारो यस्य स तथा । अनेन भगवत्स्वरूपस्य दर्शनीयत्वमुक्तम्। तेन च दर्शनौत्सुक्याधिक्यं सूच्यते । रहसि विजने। अस्माभिरपीयमवस्था निगूढतरमेव दृष्टेत्यर्थः । इतिशब्दः 'सदा बुधैरि'त्यादिपूर्वोक्तक्रमविवक्षया प्रयुक्तः । उपालभ्यत निन्दितोऽभूत् । अनेनोन्मादावस्था दर्शिता । मूर्छावस्था तु बहुशः सञ्जातापि स्नेहाधिक्येन वक्तुमप्यशक्यत्वात् प्रियवयस्ययोपेक्षितेत्यवगन्तव्यम् ॥५८॥

यदा हि तस्याधिगमे जगत्पते-
रपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरो-
रियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

(प्रकाशिका)

अथैवंविधनिष्प्रतीकारमदनोन्मादितायास्तपसि प्रवृत्तिमाह —

यदेति । अधिगमे 'निमित्तात् कर्मयोगे' (वा. २. ३. ३६) इति सप्तमी । विचिन्वती चेतसा । विचयनम् अस्माभिः सह । गुरोरनुज्ञयेति विमृश्यकारित्वं द्योत्यते ॥ ५९ ॥

(विवरणम्)

अथैवंविधया निष्प्रतीकारया मदनवेदनया समुन्मथितायाः अपि देव्या धैर्यावलम्ब-पुरस्सरीं तपसि प्रवृत्तिमाह —

यदेति । इयं यदा हि जगत्पतेः तस्य अधिगमे विचिन्वती अन्यं विधिं न अपश्यत्, तदा गुरोः अनुज्ञया अस्माभिः सह तपसे तपोवनं प्रपन्ना । इयं पार्वती यदा यस्मिन् काले । हिशब्दो वाक्यालङ्कारे । जगत्पतेः त्रैलोक्य-नाथस्य । अनेन तपोव्यतिरिक्तस्योपायान्तरस्याभावो द्योत्यते । तस्य चन्द्र-शेखरस्य अधिगमे पतित्वेन प्राप्तौ । 'निमित्तात् कर्मसंयोग' इति सप्तमी । विचिन्वती सकलशास्त्रावगमपरिशुद्धेन निजेनैव चेतसा विचयनमन्वेषणं कुर्वती । अन्यं विधिं तपोव्यतिरिक्तं विधानान्तरम् । न अपश्यद् न दृष्ट-वती । तदा विधानान्तरादर्शनकाले गुरोः पितुः अनुज्ञया अनुवादेन । हेतौ तृतीया । गुरुनियोगपुरस्सरमित्यर्थः । अस्माभिः प्रियसखीभिः सहैव गन्तव्यम्, इत्थं च तपः कर्तव्यमित्यादिर्गुरोरनुज्ञा अनेन दर्शिता । अनेन

१. 'त' मुद्रितकोशपाठः. २. 'न्मथिना' क. पाठः.

विमृश्यकारित्वं ध्वनितम्। तपसे तपश्चरितुम्। तपोवनं तदुचितं प्रदेशम्। प्रपन्ना प्राप्ता ॥ ५९ ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु बद्धमेष्वपि।
न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६० ॥

(प्रकाशिका)

अथ तपसश्चिरप्रवृत्तत्वं फलादर्शनं च सनिर्वेदमाह —

द्रुमेष्विति। सख्या स्वयं कृतजन्मसु रोपितेषु। अत एव तुल्यकालत्वात् तपःसाक्षिषु। बन्धो निष्पत्तिः। एवं प्रकृतव्यतिरेकविवक्षया प्रतियोगिनमुक्त्वा प्रकृतमाह — न चेति। चस्त्वर्थे। मनोरथस्त्वित्यर्थः। मनोरथः समागमलक्षणं कार्यम्। प्ररोहशब्दः प्रक्रान्तद्रुमसमाधिना। प्ररोहाभिमुखोऽपि, तिष्ठतु तावद् द्वित्राचावस्था। प्ररोहाभिमुख्यं च बीजस्य किञ्चिदुच्छूनता। अद्यापि मनोरथोऽस्या बीजावस्थ एवेत्यर्थः ॥ ६० ॥

(विवरणम्)

इत्थं चोद्यस्योत्तरं सहेतुकं प्रतिपाद्यातिदुश्चरेऽपि तपसि चिरकालप्रवृत्तत्वं तत्फलादर्शनं च स्वयमेव विस्रम्भातिशयात् सनिर्वेदमाह —

द्रुमेष्विति। सख्या स्वयं कृतजन्मसु तपस्साक्षिषु एषु द्रुमेषु फलं बद्धम् अपि। सख्या अस्माकं प्रियवयस्यया। अनेन सौहार्दातिशयः सूचितः। कृतं विहितं जन्म उत्पत्तिर्येषां तेषु। स्वयमेव बीजावापजलाहरणा-

१. 'दृष्टमे' मुद्रितकोशपाठः. २. 'द्धं निष्पन्नम्। ए' ग., 'द्ध निष्पन्नम्। प्र' क. पाठः. ३. 'क्षाप्र' क. पाठः. ४. 'र्थः।' ख. पाठः.

दिपुरस्सरं वनवासारम्भसमकालमेव रोपितेष्वित्यर्थः । अत एव तपस्सम-कालीनत्वात् तपसः साक्षिभूतेषु । एतावन्तं कालमियमेवमेव तपश्चचारेति जनान् बोधयत्स्वित्यर्थः । एषु उटजाङ्कणे परितो दृश्यमानेषु । अनेन तवापि प्रत्यक्षेयमतिमहती कालान्तरप्राप्तिरिति दर्शयति । द्रुमेषु वृक्षेषु फलं बद्धं सञ्जातम् । न केवलं पुष्पनिष्पत्तिः, अपितु फलनिष्पत्तिरपि जातेत्यपिशब्दार्थः । तपस्समारम्भकाले सख्या समुत्पादितेषु वृक्षेषु फलोत्पत्तिरपि जाता । अहो महानतीतः काल इति भावः । इत्थं वृक्षाणां प्रकृतान्मनोरथाद् व्यतिरेकविव-क्षया फलनिष्पत्तिमुक्त्वा प्रकृतस्य मनोरथस्य तु प्राचीनावस्थैवेत्याह— अस्याः शशिमौलिसंश्रयः मनोरथश्च प्ररोहाभिमुखः अपि न दृश्यते इति । अस्याः अतिमहता तपसा कृशशरीरतया दृश्यमानायाः । अनेन तवापि प्रत्य-क्षेयमस्याः समवस्थेति दर्शितम् । शशिमौलिः चन्द्रशेखरः संश्रयः आश्रयो यस्य तादृशो मनोरथः । मनोरथशब्देनात्र हरसमागमलक्षणं तत्कार्यं लक्ष्यते । चकारस्तुशब्दार्थे । मनोरथस्त्वित्यर्थः । प्ररोहशब्दो लोके वृक्षाद्यङ्कुरोत्पत्तौ प्रसिद्धः । अत्र तु प्रक्रान्तद्रुमसमाधिसिद्ध्यर्थं प्रयुक्तः । प्ररोहं प्रत्यभिमुखः प्ररोहाभिमुखः । उद्भवोन्मुख इत्यर्थः । प्ररोहाभिमुखत्वं च बीजस्य किञ्चि-दुच्छूनतयावस्थानम् । तदपि न दृश्यते । तिष्ठतु तावदङ्कुरावस्था द्विपत्राद्यव-स्थादयश्चेत्यपिशब्दार्थः । अनेन सम्भोगरूपस्य फलस्यात्यन्तविप्रकृष्टत्व-मुक्तम् ॥ ६० ॥

**न वेद्मि स प्रार्थितदुर्लभः कदा**
**सखीभिरास्रान्तरवीक्षितामिमाम् ।**
**तपःकृशामभ्युपपत्स्यते सखीं**
**वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥**

१. 'तमनो' ङ. पाठः. २. 'रस्रोत्तरमीक्षि' मुद्रितकोशपाठः. ३. 'भ्युपप' मुद्रितकोशपाठः.

(प्रकाशिका)

एषा च चिन्तास्माकमेव, न त्वस्याः । एषा त्वतिधैर्यादद्यापि विषादादिभिर्न स्पृश्यते । आरम्भतुल्यावस्थैवे भवतीत्याभिप्रायेण स्वावस्थां दर्शयति—

नेति । प्रार्थितो दुर्लभश्चेति प्रार्थितदुर्लभः । प्रार्थनायां दुर्लभ इति सासूयकथनम् । आस्रान्तरे आस्रस्य परिपतनोद्गमयोरन्तराल इत्यर्थः । अनेनास्रस्य निर्विच्छेदत्वं द्योत्यते । अभ्यवपत्स्यते अनुग्रहीष्यति । वृषा इन्द्रः । सीतां हलक्षतां भूमिम् । 'सीता लाङ्गलपद्धतिरि'ति हलायुधः । तच्छब्देन वृषा परामृश्यते । इन्द्रवर्षविघातशोषितामित्यर्थः ॥ ६१ ॥

(विवरणम्)

सखीनामस्माकमेवैषा चिन्ता । इयं पुनरतिधैर्यादद्यापि विषादैर्नाभिभूयते इत्यभिप्रायेणातिदीनां निजावस्थामाह—

नेति । प्रार्थितदुर्लभः सः कदा तपःकृशां सखीभिः आस्रान्तरवीक्षिताम् इमां सखीम् अभ्यवपत्स्यते, न वेद्मि । प्रार्थितदुर्लभः प्रार्थितश्चासौ दुर्लभश्चेति प्रार्थितदुर्लभः । सर्वप्रार्थनीययास्मत्प्रियवयस्यया प्रकर्षेण अर्थितोऽपि दुर्लभ इति सासूयं वचनमिदम् । सः हरः । 'भविष्यति प्रार्थितदुर्लभः कथम्' (श्लो०. ४६) इत्यादिवचनस्योत्तरमेतत् । कदा कस्मिन् काले । अनुग्रहकालस्त्विदानीमेवातिक्रान्तः । (तपःकृशाम्) । इतः परं किमस्मत्प्रियवयस्ययासौ कारयिष्यतीति भावः । अत एव सखीभिः अस्मदादिभिः । आस्रान्तरवीक्षिताम् आस्राणामन्तरे निपतनोद्गमयोरन्तराले । अनवरतप्रवृत्तानामश्रुबिन्दूनाम् अतिक्षणिकयोर्निपतनोद्गमनकर्मणोर्मध्ये एकस्मिन् बिन्दौ पतिते सत्यन्यस्योद्गमनात् पूर्वमित्यर्थः । अनेनाश्रूणामविच्छिन्नता ध्वन्यते । वीक्षितां दृष्टाम् इमां

१. 'र्थाया' ग. पाठः. २. 'वेद्य' ङ. पाठः. ३. 'तश्चासौ दु' ङ. पाठः. ४. 'भः । अथवा प्रार्थिते प्रार्थ' ङ. पाठः. ५. 'पि' ग. घ. ङ. पाठः.

सखीम् अभ्यवपत्स्यते अनुग्रहीष्यति । 'अभ्यवपत्तिरनुग्रह' इत्यमरः । इतिशब्दोऽत्र द्रष्टव्यः । न वेद्मि न जानामि । कदा अनुग्रहीष्यतीति न जानामीत्यर्थः । अनुग्रहे सन्देह एवास्माकमिति भावः । अत्रानुरूपामुपमां दर्शयति — वृषा तदवग्रहक्षतां सीतामिव इति । वृषा वासवः । तच्छब्देन वृषैव परामृश्यते । तस्यावग्रहः तदवग्रहः । तेन क्षतां शोषिताम् । इन्द्रकृतेन वर्षप्रतिबन्धेन शोषितामित्यर्थः । सीतां हलक्षतां भूमिमिव । 'सीता लाङ्गल-पद्धतिरि'त्यमरः । वर्षकारित्वमिव वर्षप्रतिबन्धकत्वमपि प्रसिद्धं मघोनः । यदुक्तं शुकसन्देशे —

"वीरः स्वे यो व्यतनुत पदे वृष्टिहीने किलाज्ञां
मोघां मेघोदरभिदुरया बाणवृष्ट्या मघोनः" (पू. भा. श्लो. २७)

इति । यथा प्रार्थितोऽपि दुर्लभप्रसादो वृषा निजप्रसादमात्रलभ्यस्य वर्षस्य विनाशेन शोषितां सस्यैकशरणैर्जनैः आस्रान्तरवीक्षितां वर्षैकनिमित्तसस्याद्य-भावेन कृशतया लक्ष्यमाणां लाङ्गलक्षतत्वात् प्रत्यासन्नबीजवापकालां वसुन्धरां प्रसादाभिमुखः सन् सम्यगनुगृह्णाति, तथेमां कदा परमेश्वरोऽनुग्रहीष्यतीति भावः । तथाभूतवसुन्धरोपमया देव्या अस्माकमेव दुःखाभिभवः, न तु देव्या इति ध्वन्यते । यथा हलक्षता भूमिः इन्द्रप्रसादमात्रशरणा, तथैवेयं परमेश्वरमा-त्रशरणा । वयं तु देवीमात्रशरणा इति चानेन वाक्येन द्योत्यते ॥ ६१ ॥

**अगूढसद्भावमितीङ्गितज्ञया**
**निवेदितो नैष्ठिकसुन्दरस्तया ।**
**अपीदमेवं परिहास इत्युमा-**
**मपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥**

(प्रकाशिका)

एवमत्यार्जवादतिविवृतरहस्यम् अतिकातरं च सखीवचनमाकर्णितवतः प्रभो-र्वृत्तमाह —

१. 'स्व' क. ख. ग. घ. पाठः. २ 'पयःप्र' ख. पाठः ३. 'ज्ञा' घ. पाठः. ४. 'यी' मुद्रितकोशपाठः.

अगूढेति । सद्भावः परमार्थः[1]। दक्षिणावर्तस्तु — तद्भावमिति पाठमादृत्य तच्छब्देन गौरीपरामर्श इत्याह । अगूहने हेतुमाह — इङ्गितज्ञयेति । तथेङ्गितं निवर्तितानञ्जननेत्रेक्षणम् । नैष्ठिकश्चासौ सुन्दरश्चेति समासः । नैष्ठिक उपकुर्वाणश्चेति[2] द्विविधो ब्रह्मचारी । तयोर्यावज्जीवं[3]ब्रह्मचारी नैष्ठिकः । सुन्दरशब्देन कामुकत्वं लक्ष्यते । परस्परविरुद्धमिदं नैष्ठिकत्वं सुन्दरत्वं चेति चित्रमिदं देव एव सम्भाव्यमिति भावः । अपिः प्रश्ने । इदं सखीवचनम् । एवमित्थम् । परिहासः केलिः । 'द्रवकेलिपरीहासा' इति सिंहः । अव्यञ्जितं गूहितं हर्षलक्षणं रोमाञ्चादि येन । अयं च प्रश्नो देवीमुखेन श्रोतुमौत्सुक्यात् ॥ ६२ ॥

( विवरणम् )

इत्थमत्यार्जवादतिविवृतरहस्यवृत्तान्तमतिकरुणं च सखीवचनमाकर्णयतोऽपि तमेव वृत्तान्तं तन्मुखेनैव श्रोतुकामस्य कामुकस्य भगवतो वृत्तमाह —

अगूढेति । इङ्गितज्ञया तया अगूढसद्भावम् इति निवेदितः नैष्ठिकसुन्दरः इदम् एवम् अपि परिहासः इति उमाम् अपृच्छत् । इङ्गितमभिप्रायं जानातीतीङ्गितज्ञा, तया । 'निवर्तितानञ्जननेत्रमैक्षत' (श्लो.५१) इत्यत्र देव्या हृदयगतमभिप्रायमवगच्छन्त्येत्यर्थः । इदं परमार्थस्यागूहने हेतुः । तया सख्या । अगूढसद्भावमिति निवेदनक्रियाविशेषणम् । अगूढो विवृतः सद्भावः परमार्थो यथा भवति तथा निवेदित इत्यर्थः । इति पूर्वोक्तप्रकारेण निवेदितः ज्ञापितः नैष्ठिकसुन्दरः । नैष्ठिको नैष्ठिकब्रह्मचारी । उपकुर्वाणो नैष्ठिकश्चेति द्विविधो ब्रह्मचारी । तत्र गृहस्थाद्याश्रमेष्वपि य उपकरोति स उपकुर्वाणः । यस्तु ब्रह्मचार्याश्रममात्रेण निष्ठां प्राप्नोति स नैष्ठिकः ।

१. 'मृश्यत इ' ख. पाठः. २. 'ति ब्रह्मचारी द्विविधः । त' ङ. पाठः. ३. 'वं' ङ. पाठः. ४. 'ढो विशेषेण वि' ङ. पाठः.

"नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥"

(याज्ञ. अध्या. १. श्लो. ४९)

इत्यादिस्मृत्यनुसारेण यावज्जीवं ब्रह्मचार्याश्रम एव स्थित इत्यर्थः । नैष्ठिकश्चासौ सुन्दरश्चेति नैष्ठिकसुन्दरः । सुन्दरशब्देनात्र कामुकत्वं लक्ष्यते । परस्परविरुद्धं नैष्ठिकत्वं सुन्दरत्वं च परमेश्वर एवोपपद्यते । को वासाविति तासां विचारोऽनेन ध्वन्यते । इदं सखीवचनम् एवम् । अपिशब्दः प्रश्ने । परिहासः । 'द्रवकेलिपरीहासा' इति सिंहः । अपिशब्दोऽत्रापि द्रष्टव्यः । इति उक्तप्रकारेण उमां पृष्टवान् । तया एवं निवेदितो ब्रह्मचारी किमिदं सखीवचनम् एवं भूतार्थमेव आहोस्वित् परिहास इत्युमां पृष्टवानित्यर्थः । भवत्या रूपसम्पदं श्मशाननिलयस्य हरस्य स्वरूपं च विचारयतो मम परिहासमात्रपरमिदं वचनमिति प्रतिभातीति प्रश्नाभिप्रायः । इदं च वक्ष्यमाणानां हरनिन्दानामुपोद्घातत्वेन कृतम् । ननु कथमात्मविषयमभिलाषमतिविस्तरेण श्रुतवतः कामुकस्य हर्षानुत्पत्तिः । हर्षोत्पत्तौ वा कथं न रोमाञ्चाद्यनुदयः, तदुदये वा कथं न तासां शङ्काङ्कुराविर्भाव इतीमामाशङ्कां परिहरति— अव्यञ्जितहर्षलक्षण इति । अव्यञ्जितानि गूहितानि हर्षस्य लक्षणानि रोमाञ्चादिचिह्नानि येन स तथा । हर्षस्तूत्पन्नः । तत्कार्याणि रोमाञ्चादीन्यप्युत्पन्नानि । परममायिनः कपटवटोः तद्गोपने कः प्रयास इति भावः ॥ ६२ ॥

**अथाग्रहस्ते मुकुलीकृताङ्गुलौ**
**समर्पयन्ती स्फटिकाक्षमालिकाम् ।**
**कथञ्चिदद्रेस्तनया मिताक्षरं**
**चिरव्यवस्थापितवागभाषत ॥ ६३ ॥**

(प्रकाशिका)

अथावश्य[1]वक्तव्यत्वेन कथञ्चित् तत्रोद्यममाह—

**अथेति। अग्रहस्तेऽक्षमालार्पणं जपविरामद्योतकम्। तस्य मुकुलीकृताङ्गुलित्वमर्पणसौकर्यार्थं[2]। चिरव्यवस्थापितवाग् व्रतार्थं चिरसंयतवाक्। ततश्च कथञ्चिद् वचनम्। मितभाषित्वं[3] तूत्तमनायिकाधर्मः॥ ६३॥**

(विवरणम्)

अथ शापभयादवश्यकर्तव्ये वचने सति लज्जापरतन्त्राया अपि देव्याः परिहासशङ्कानिरासार्थं कथञ्चिद् वचनोद्योगमाह—

अथेति। अथ अद्रेः तनया मिताक्षरं कथञ्चिद् अभाषत। अथ प्रश्नानन्तरम् अद्रेस्तनया पार्वती। मिताक्षरमिति भाषणक्रियाविशेषणम्। अक्षरशब्दः शब्दवाची। मितानि परिमितानि अक्षराणि शब्दा यथा भवन्ति तथाभाषत। शब्दानामेवात्र परिमितत्वं नार्थस्येति भावः। मितभाषितत्वम् उत्तमनायिकाधर्मः। कथञ्चित् कथमपि। मौनव्रतपरित्यागभीत्या लज्जापारतन्त्र्याच्चेति भावः। अभाषत उक्तवती। जपमध्ये वचनस्य विशेषतोऽप्ययुक्तत्वाद् वाग्विसर्गार्थं जपविरामोद्योगमाह—अग्रहस्ते स्फटिकाक्षमालिकां समर्पयन्ती इति। अग्रहस्ते हस्ताग्रे। स्फटिकाक्षमालिकां स्फटिकमयीमक्षमालिकां जपमालाम्। समर्पयन्ती सम्यगर्पयन्ती। अर्पणप्रकारमेवाह—मुकुलीकृताङ्गुलाविति। मुकुलीकृताः मुकुलाकारतां प्रापिताः अङ्गुलयो यस्मिंस्तस्मिन्। अत्र स्वभावोक्तिः। अनेनाग्रहस्तविशेषणेन अक्षमालार्पणसौकर्यं द्योत्यते, तात्कालिकं हरमनोहरणं च। व्रतारम्भसमयादारभ्य तत्कालपर्यन्तं देव्या वाग्विसर्गाभावमाह—चिरव्यवस्थापितवागिति। चिरं चिरकालं व्यवस्थापिता संयता वाग् यया सा तथा॥ ६३॥

१. 'कर्तव्ये सति क' ङ. पाठः. २. 'र्थम्। चि' ङ. पाठः. ३. 'तं चोत्त' क. ख. ग. घ. पाठः.

**यथा श्रुतं वेदविदां वर! त्वया**
**जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं**
**मनोरथानामगतिर्न विद्यते ॥ ६४ ॥**

(प्रकाशिका)

तत्प्रकारमाह —

**यथेति ।** श्रुतमिति 'यदा हि तस्याधिगमे' (श्लो. ५९) इत्यादिवाक्यम् । वेदविदां वरेति अस्यार्थस्य परमस्पृहणीयत्वं तपसश्च दुरवापसाधनत्वं च जानासीति द्योतयति । उच्चैःपदशब्देन परमेश्वरो विवक्षितः । लङ्घनं प्राप्तिः । किल अपरमार्थे, परप्रतीत्यपेक्षः । यथा त्वया सखीमुखाच्छ्रुतं, तथायं जनः सर्वोत्तरवस्तुप्राप्त्युत्सुकः, तपश्चेदं तत्साधनमित्यर्थः । कथमयमलोकगोचरस्ते संरम्भ इत्याह—मनोरथानामिति । अगतिरगोचरः ॥ ६४ ॥

(विवरणम्)

वचनप्रकारमेवाह —

यथेति । वेदविदां वर! त्वया यथा श्रुतं, तथा अयं जनः उच्चैःपदलङ्घनोन्मुखः । वेदं वेदार्थं विदन्तीति वेदविदः तेषां वर! श्रेष्ठ! । अनया सम्बुद्ध्या मदभिलषितस्यार्थस्य परमस्पृहणीयत्वं तपसो दुष्प्रापार्थसाधनसामर्थ्यं च त्वमेव जानासीति द्योत्यते । तस्मात् किञ्चिदेवात्र वक्तव्यमित्यर्थः । त्वया यथा श्रुतं, सखीमुखादिति शेषः । तथायं जनः उच्चैःपदलङ्घनोन्मुखः । उच्चैःपदम् उन्नतं पदम् । तच्चात्र परमेश्वरवधूपदं विवक्षितम् । तस्य लङ्घनं प्राप्तिः । तत्र उन्मुखः उद्युक्तः । भवतीति शेषः । ननु अत्यन्तदुर्लभमेव मन्द-

भाग्यया त्वया तादृशं स्थानमित्यत्राह — इदं तपः तदवाप्तिसाधनं किल इति। इदं मया क्रियमाणम्। तपः तदवाप्तिसाधनं तस्य परमेश्वरवधूपदस्य प्राप्तौ साधनम्। किलशब्दोऽपरमार्थे। अनेनैव तपसा साधयिष्यामीति मे मनोरथः। नानेन तपसास्यास्तादृशार्थप्राप्तिर्भविष्यतीतीदानीं सर्वे जना मन्यन्त इति परप्रतीत्यनुसारेणायं किलशब्दः। ननु कथमत्यन्तदुःसाधेऽर्थे तव तादृशो मनोरथ इतीमामाशङ्कामर्थान्तरन्यासेन परिहरति — मनोरथानाम् अगतिः न विद्यते इति। मनोरथानां मनोराज्यानाम् अगतिः अविषयः न विद्यते न लभ्यते। नहि लोके मनोरथानामविषयः कश्चिदप्यर्थो विद्यत इत्यर्थः। अत्यन्तमन्दभाग्यायास्तव कथं तादृशपदप्राप्त्युपपत्तिः। नाप्यत्यन्तदुःसाधत्वेन निश्चितमर्थमुद्दिश्य कश्चिदपि लोके प्रवर्तते। तस्मात् परिहासपरमेवेदं सखीवचनमिति खलु भवता विवक्षितम्। तदनुपपन्नमेव, मनोरथस्य सर्वविषयत्वोपपत्तेरित्यर्थान्तरन्यासस्याभिप्रायः॥ ६४॥

**अथाह वर्णी विदितो महेश्वर-**
**स्तदर्थिनी त्वं पुर[1] एव वर्तसे।**
**अमङ्गलाभ्यासरतिं विचिन्त्य तं**
**तवानुवृत्तिं न तु[3] कर्तुमुत्सहे॥ ६५॥**

(प्रकाशिका)

अथैवं देवीमुखेन उपलब्धवृत्तान्तस्य देवस्य पुनरपि 'क्रुद्धसुप्तमत्तानां भावज्ञानमि'ति वचनादेनां कोपयित्वा भावं परीक्षिष्ये। कोपकषायितायाश्च मुखविकारानतिमधुरान् द्रक्ष्यामीति मन्यमानस्य विटवर्गचूडामणेर्वृत्तमाह —

**अथेति। अथशब्दस्य तदादित्वादाहेति लट्। 'तदादौ चे'ति भोजसूत्रम्। वर्णी ब्रह्मचारी। महेश्वरो विदितः ज्ञायमानः। तमहं जाना-**

१. 'म' ख. पाठः. २. 'नरेव', ३. 'च' मुद्रितकोशपाठः. ४. 'न्वान' ङ. पाठः. ५. 'तं जा' ङ. पाठः.

मीत्यर्थः। पुर एव मद्दर्शनात् प्रागेवारभ्य। 'आदिरग्रं पुरः पूर्वं प्रथमं प्राक् पुरा स्मृतमि'ति हलायुधः। यदि मम त्वद्दर्शनं प्रागेवाभविष्यत्, तर्हि तदर्थिनी त्वं नाभविष्य इति भावः। अमङ्गलानि चिताभस्मादीनि, तेषामभ्यासे रतिः प्रीतिर्यस्य। अहं तु तच्छीलं विचिन्त्यामङ्गलोत्सुकाया-स्तवानुवृत्तिं न चिकीर्षामीत्यर्थः ॥ ६५ ॥

(विवरणम्)

इत्थं निजविषयमभिलाषं देवीमुखादेव सम्यगवगतवतोऽपि 'क्रुद्धसुप्तमत्तानां भावज्ञानमि'ति वचनाद् भावपरीक्षायाः कोपे सत्येवात्र सुकरत्वात् कोपेन विकृतभावामेनां पुनरपि परीक्षिष्ये। कोपकषायितायाश्चास्या मुखविकारानतिमनोहरानवलोकयिष्यामीति मन्वानस्य विटवर्गचूडामणेः कपटवटोः प्रवृत्तिमाह —

अथेति। अथ वर्णी आह। अथ देवीवचनादेव परमार्थज्ञानानन्तरम्। वर्णी ब्रह्मचारी आह। अथशब्दस्य तदादित्वात् 'तदादौ चे'ति भोजसूत्रानुसारेणाथशब्दयोगाद् भूतार्थे लट्। उक्तवानित्यर्थः। उक्तिप्रकारमेवाह — विदित इत्यादिना। महेश्वरः विदितः। विदित इति वर्तमाने कर्मणि क्तः। महेश्वरमहं जानामीत्यर्थः। त्वं पुरः एव तदर्थिनी वर्तसे। पुर एव अस्मद्दर्शनात् प्रागेवारभ्य। 'आदिरग्रं पुरः पूर्वं प्रथमं प्राक् पुरा स्मृतमि'ति हलायुधः। यदि तव मद्दर्शनं प्रागेवाभविष्यत्, तर्हि त्वं तदर्थिनी च नाभविष्य इति भावः। तदर्थिनी, तच्छब्देनात्र महेश्वरः परामृश्यते। तमर्थयितुं प्रार्थयितुं शीलमस्या इति तथा। अहो ते मन्दभाग्यत्वमिति भावः। यद्यपि मया पूर्वं 'तदर्धभागेन लभस्व काङ्क्षितम्' (५०) इत्युक्तं, तथाप्यहमस्मिन्नर्थे तव चित्तवृत्तिमनुसर्तुं न शक्नोमीत्याह — अहम् अमङ्गलाभ्यासरतिं तं विचिन्त्य तव अनुवृत्तिं कर्तुं न तु उत्सहे। अमङ्गलानां चिताभस्मादीनाम् अभ्यासे निरन्तरानुलेपनादौ रतिः श्रद्धा यस्य। तं

१. 'वार्यं तवा' ङ. पाठः. २. 'धुर.' ख. ग. घ. पाठः.

विचिन्त्य पुनः पुनर्निरूप्य । तवानुवृत्तिम् अनुसरणं कर्तुम् । तुशब्दोऽवधारणे । नैवोत्सहे नैव शक्नोमि । यद्यपि इष्टानुसरणमेव सख्यानुरूपं, तथाप्यमङ्गलाभ्यासरतेस्तस्य सर्वमङ्गलायास्तव च परस्परसङ्घटनयोग्यताविरहात् तत्स्वरूपपरमार्थवेदी नाहमस्मिन् विषये तवानुसरणं वाङ्मात्रेणापि कर्तुं शक्नोमीत्यर्थः । महति सङ्कटे पतिष्यतां बन्धूनां ततो निवारणमेव हि सख्यस्य महत् फलमिति भावः ॥ ६५ ॥

**अवस्तुनिर्बन्धपरे! कथं नु ते**
**करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शंभोर्वलयीकृताहिना**
**सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥**

(प्रकाशिका)

अननुवृत्तिं प्रपञ्चयति —

अवस्त्विति । अवस्तुनिर्बन्धोऽसाराभिनिवेशः । करविशेषणाभ्यां परस्परानुरूपत्वमुक्तम् । तत्प्रथमशब्देन दुस्सहत्वमुपपादितम् । पाणिग्रहणमेव तावदतिदुस्सहमित्यर्थः ॥ ६६ ॥

(विवरणम्)

परस्परसङ्घटनयोग्यताविरहादनुवृत्तेरयोग्यत्वमेव प्रपञ्चयति सप्तभिः श्लोकैः । तत्रादौ विवाहसमय एव तावदग्निसाक्षिकं पाणिग्रहणमेवातिदुःसहम् । तिष्ठतु तावदन्यत् सर्वमित्याह —

अवस्त्विति । अवस्तुनिर्बन्धपरे! ते अयं करः शम्भोः करेण तत्प्रथमावलम्बनं कथं सहिष्यते । अवस्तुनिर्बन्धपरे! अवस्तुनि असारे यो निर्बन्धोऽभिनिवेशः तस्मिन् तत्परे । अनया सम्बुद्ध्यास्य निर्बन्धस्यात्यन्तमनुचितत्वमुक्तम् । त्वदपेक्षयात्यन्तमसार एवायं महेश्वर इति भावः । ते तव

अयम् अतिसुकुमारतया दृश्यमानः करः। अनेन करस्य स्वरूपतो रमणीयत्वमुक्तम्। शम्भोः करेण तत्प्रथमावलम्बनं तदेव प्रथममादिमं यस्य तादृशमवलम्बनं ग्रहणम्। समन्त्रमाद्यं पाणिग्रहणमित्यर्थः। कालातिपाते सति परिचयवशात् कथञ्चिदपि सह्यं भवतु नाम, न पुनः प्रथमग्रहणमिति भावः। कथं सहिष्यते न कथञ्चिदित्यर्थः। अत्रासहने करस्यैव कर्तृत्वप्रतिपादनेन त्वत्करस्तत्करदर्शनमात्रेण स्वयमेव भीत्या सहसा निवर्तिष्यत इति प्रतिपादितम्। तेन चात्यन्तभयानकत्वं सूचितम्। तस्मादलं तव तत्प्राप्तिप्रयासेनेति भावः। देवीकरस्य विवाहसमये विशेषतो रमणीयत्वमाह—आमुक्तविवाहकौतुक इति। आमुक्तम् अर्पितं विवाहकौतुकं विवाहार्थं कौतुकं यस्मिन्। कौतुकबन्धनं गृह्यप्रसिद्धम्। तस्य मनोहरत्वमुक्तं रघुवंशे—'अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः' (सर्गः ८. श्लो. १) इति। शम्भोः करस्य भयानकत्वमाह—वलयीकृताहिना इति। वलयीकृताः वलयतां प्रापिताः अहयः सर्पा यस्मिंस्तेन। अनेन वेषतो भीषणत्वमुक्तम्। इदमसहनत्वे हेतुः। तस्मात् तत्प्राप्तिप्रयासस्त्वया न कर्तव्य इत्यर्थः॥ ६६॥

**त्वमेव तावत् परिचिन्तय स्वतः[1]**
**कदाचिदेते यदि योगमर्हतः[2]।**
**वधूदुकूलं क्व[3] च हंसलक्षणं**
**क्व[4] चाजिनं शोणितबिन्दुवर्षि[5] तत्[6]॥ ६७॥**

(प्रकाशिका)

अथान्यदप्येवमेवेत्याह—

**त्वमिति। त्वमेव तावत् परिचिन्तय। तिष्ठत्वितरदृष्टिरिति शेषः। तावत् सम्भ्रमे। 'यावत्तावच्च नु पुरा अङ्ग ही हन्त सीमिति। सम्भ्रमार्था'**

१. 'वः। स क' घ. पाठः. २. 'वहतः' क. पाठः. ३. 'यं', ४. 'कलहं', ५. 'गजाजि', ६. 'च॥' मुद्रितकोशपाठः.

इति भोजः। स्वतः कदाचिदिति पाठः। स्वतो निसर्गतः कदाचिदापत्कालेऽपि। एते इति बुद्धिस्थे। 'यदिः पक्षान्तरेऽपि चे'ति सिंहः। अयोगितां च दर्शयति — वधूदुकूलमिति। हंसलक्षणं रोचनादिलिखितहंसमिथुनसनाथपर्यन्तम्। 'क्व चाजिनं शोणितबिन्दुवर्षि तदि'ति पाठः। अत्र स्वरूपतो विशेषणतश्च सम्पादितेन वैषम्येण दुकूलाजिनयोः प्रस्तुतमिथुनविषये श्लेषो न घटत इति 'क्वचिद् यदतिवैषम्यान्न श्लेषो घटनामियादि'ति विषमालङ्कारः। वधूशब्देन विवाहकाल एव भावनीयमयोग्यतेति सूचितम् ॥ ६७ ॥

(विवरणम्)

इत्थम् अतिदुःसहत्वात् प्रथमं करग्रहणस्याशक्यत्वमुक्तम्। अथ विवाहारम्भ एव यन्मङ्गलार्थं विहितं वसनपरिधानं, तत्र वसनयोः परस्परविरुद्धतामाह —

त्वमेवेति। एते कदाचित् स्वतः योगम् अर्हतः यदि, त्वमेव तावत् परिचिन्तय। एते बुद्धिस्थे वक्ष्यमाणे वस्तुनी। कदाचित् आपत्कालेऽपि। लोकत्रये त्वदुचितपुरुषान्तररहितेऽपीत्यर्थः। स्वतः निसर्गतः। अनेन रागतः प्रवृत्तिरुक्ता। योगं परस्परघटनम्। अर्हतः तत्र योग्यतां प्राप्नुतः। यदिशब्दः पक्षान्तरे। तावच्छब्दः सम्भ्रमार्थः। 'यावत्तावन्ननु पुरा अङ्ग ही हन्त सीमिति। सम्भ्रमार्था' इति भोजः। परिचिन्तय समन्ताद् विचारय। वक्ष्यमाणे दुकूलाजिने परस्परघटनयोग्ये इति यदि ते पक्षस्तर्हि तिष्ठतु तावदस्मादृशां बन्धुजनानां दृष्टिः, त्वमेव ससम्भ्रमं विचारयेत्यर्थः। कार्यातिपाते विचारस्य निष्फलत्वात् तावदित्युक्तम्। प्रकृतं वैगम्यमेव स्वरूपतो विशेषणतश्च प्रतिपादयति — हंसलक्षणं वधूदुकूलं च क्व शोणितबिन्दुवर्षि तद् अजिनं च क्व इति। हंसलक्षणं हंसा राजहंसा लक्षणं चिह्नं यस्य तादृशम्। गोरोचनादिलिखितहंसमिथुनसनाथपर्यन्तभागमित्यर्थः। वध्वा दुकूलं वधूदुकूलम्। वधूर्नवोढा। 'वधूः स्त्रीमात्रभार्ययोः। नवोढयोषास्नुषयोरि'ति केशवः। अत्र वधूशब्द-

१. 'जः। क' क. ख. ग. घ. पाठः. २. 'लं क्व' क. ङ. पाठः.

प्रयोगेण विवाहसमयभाविनीयमयोग्यतेति साचतम । शोणितस्य बिन्दून् कणान् वर्षितुं शीलमस्येति तथा ।[विवाहकाले नवीनवसनपरिग्रहस्यावश्यकत्वात् । तत्कालविशेषणं चेदं, कालान्तरे पुनरजिनस्य शुष्कतया शोणितबिन्दुवर्षशीलाभावात् ] अजिनं चर्म च क । अतिमहदनयोरन्तरमिति भावः । अत्र दुकूलाजिनयोः परस्परसङ्घटनयोग्यताविरहाद् विषमालङ्कारः ॥ ६७ ॥

**चतुष्कपुष्पप्रकरावकीर्णयोः**
**परोऽपि को नाम तवानुमन्यते ।**
**अलक्तकाङ्कानि पदानि पादयो-**
**र्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥**

(प्रकाशिका)

अथ परिणीतायास्तद्गृहगमनेऽप्यनौचित्यं दर्शयति —

चतुष्केति । चतुष्कं मण्डपविशेषः । वक्ष्यति च —'नार्यश्चतुष्काभिमुखीमनैषुः'(स.७.श्लो.९)इति । चतुष्कगतपुष्पप्रकरन्यस्तयोरित्यर्थः । परोऽपि, तिष्ठतु मादृशो जन इत्यर्थः । पदान्यवस्थानानि । 'पदं व्यवसितिस्थानत्राणलक्ष्माङ्घ्रिवस्तुषु' इति सिंहः । परेतभूमिषु श्मशानेषु । ता हि तस्य गृहा इति भावः ॥ ६८ ॥

(विवरणम्)

विवाहानन्तरं भर्तृगृहप्राप्तावप्यनौचित्यमाह —

चतुष्केति । परः अपि कः नाम तव पादयोः पदानि परेतभूमिषु अनुमन्यते । परोऽपि शत्रुरपि । तिष्ठतु तावदस्मादृशो बन्धुजन इति भावः । को नाम, न कोऽपीत्यर्थः । तव पादयोः स्वत एव सुकुमारयोश्चरणयोः । पदानि स्थानानि । 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि'त्यमरः । परे-

१. 'ममल' घ. पाठः.

तभूमिषु श्मशानेषु। कर्तुमिति शेषः। अनुमन्यते अनुमनन करोति, अनुवदतीत्यर्थः। श्मशाननिलयो हि हरः। ततस्तव सुकुमारयोरेतयोः पादयोरवस्थानं श्मशानभूमिषु भविष्यति। तत् तु शत्रुजनोऽपि नानुमन्यते। किं पुनरत्यन्तबन्धुभूतोऽहम्। तस्मादहं न तवानुवृत्तिं कर्तुमुत्सहे इति भावः। देवीपादयोः पूर्वावस्थानप्रदेशस्य भविष्यदवस्थानप्रदेशानां श्मशानभूमीनां च परस्परमत्यन्तविलक्षणस्वरूपत्वं प्रतिपादयति — चतुष्केत्यादिना। तत्र तावद् देवीपादविशेषणद्वारेण पूर्वावस्थानप्रदेशस्य मनोहरत्वमाह — चतुष्कपुष्पप्रकरावकीर्णयोरिति। चतुष्कं मण्डपविशेषः। 'चतुष्कं सचतुस्तम्भं विवाहे स्नानमण्डपमि'ति भोजः। तद्गते पुष्पप्रकरे कुसुमसमूहे अवकीर्णयोः न्यस्तयोः। स्वत एवात्यन्तनिर्मलेषु स्थलेषु मृदुतराणि कुसुमानि विकीर्य तत्र न्यस्तयोरित्यर्थः। अङ्घ्रिविन्यासप्रतिबिम्बानामपि रमणीयत्वमाह — अलक्तकाङ्कानीति। अलक्तको लाक्षारसोऽङ्को येषु। अनेन तेषां श्मशानभूमिष्वयोग्यत्वमुक्तम्। श्मशानविशेषणेनैव भविष्यदवस्थानप्रदेशस्यात्यन्तनिन्द्यत्वमाह — विकीर्णकेशास्विति। विकीर्णा विक्षिप्ताः केशाः प्रेतकेशा यासु। अत्र पूर्वोत्तरावस्थानप्रदेशयोः स्वरूपतो विशेषणतश्चातिवैषम्यं प्रतिपादितम्॥ ६८॥

**अयुक्तरूपं किमतः परं वद**
**त्रिनेत्रवक्षःसुलभं तवापि यत्।**
**स्तनद्वयेऽस्मिन् हरिचन्दनाङ्किते**
**पदं चिताभस्मरजः करिष्यति॥ ६९॥**

**(प्रकाशिका)**

तथा तत्र तदङ्गसङ्गोऽप्यतिबीभत्स इत्याह —

**अयुक्तेति। प्रशंसायां रूपप्। अयुक्तेषु प्रशस्तमित्यर्थः।**

१. 'स्पदे प' मुद्रितकोशपाठः.

त्रिनेत्रवक्षस्सुलभम्, एतदेव हि तत्र सुलभमिति भावः। तवापि एवं भुवनलोभनीयाया अपीत्यर्थः। पदं स्थानम् ॥ ६९ ॥

(विवरणम्)

भर्तृगृहप्रवेशानन्तरभावी तदङ्गसङ्गोऽपि तवातिबीभत्स इत्याह—

अयुक्तेति। त्रिनेत्रवक्षःसुलभं चिताभस्मरजः तव अपि अस्मिन् स्तनद्वये पदं करिष्यति यद्, अतः परं किम् अयुक्तरूपं वद। त्रिनेत्रस्य हरस्य वक्षसि सुलभं सुखेन लभ्यम्। नहि तस्य वक्षस्यन्यत्किमपि लभ्यमस्तीत्यर्थः। चितायां यद् भस्म तस्य (रजः) चूर्णम्। तवापि लोकत्रयलोभनीयाया अपीत्यर्थः। अस्मिन् अत्यन्तकोमले स्तनयोर्द्वये। पदं स्थानं करिष्यतीति यद्, अतः परम् अस्माद् अन्यत् किम् अयुक्तरूपम्। प्रशंसायां रूपप्। अत्यन्तमयुक्तमित्यर्थः। स्तनतटाधिष्ठानयोग्यमेवार्थमाह— हरिचन्दनाङ्कित इति। हरिचन्दनं रक्तचन्दनम्। अथवा कल्पवृक्ष एव। 'सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनमि'त्यमरः। तेन अङ्किते मुद्रिते। कल्पवृक्षपङ्कानामपि वक्षसि धारणमुक्तं शाकुन्तले— 'आमृष्टवक्षोहरिचन्दनाङ्के'ति। अनेनेन्द्रादीनामेव त्वत्पतित्वमुचितमिति ध्वन्यते। हरिचन्दनपङ्कसङ्गमयोग्ये तव स्तनद्वये हरालिङ्गनसङ्क्रान्तं चिताभस्म पदं करिष्यतीति यत् तस्मादन्यत्किमयुक्तम्। न किमपीत्यर्थः ॥ ६९ ॥

इयं च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजभार्यया।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥

१. 'दिषु यो' क. पाठः. २. 'हा' मुद्रितकोशपाठः.

(प्रकाशिका)

एवं दाम्पत्यनिर्वाहदशायामनौचित्यं दिङ्मात्रेण प्रदर्श्य स्मरणं नाटयन् प्रागेव कथनीयं किञ्चिन्मया विस्मृतमित्याह —

इयमिति । इदंशब्देन बुद्धिस्थं विडम्बनास्वरूपं परामृश्यते । अन्या प्रागुक्तेभ्यो विलक्षणा । 'अन्यस्त्वसदृशे भिन्न' इति सिंहः । पुरतो भर्तृगृहगमनारम्भ एवेत्यर्थः । अनेन सम्भ्रमादात्मनो वचने क्रमव्युत्क्रमं सूचयति । विडम्बना हासकारणमित्यर्थः । अत्र कार्यरूपं हेतुमाह — यदित्यादिना वाक्येन । यस्मादेवं भविष्यति, तस्माद् विडम्बनया भवितव्यमित्यर्थः । विडम्बनास्वरूपं तु ऊढयेत्यादिनानुवाद-भागेनार्थतो दर्शितम् । ऊढया बाल्यात् प्रभृति पितृगृह इत्यर्थः । वारण-राजभार्यया करिणीमतल्लिकया । वृद्धोक्षमिति । सोऽपि कियच्चिरकाल-जीवीति केनापि न ज्ञायत इति भावः । निपातनाच्च साधुत्वम् । अधि-ष्ठितमारूढम् । महाजन ओषधिप्रस्थवास्तव्यः । दक्षिणावर्तस्तु— 'ऊढया परिणीतया वारणराजहार्ययेति पाठः । विवाहानन्तरं गजराजवाह्यये-त्यर्थ' इत्याह ॥ ७० ॥

(विवरणम्)

इत्थं विवाहसम्भोगाद्यारम्भसम्भाविनमनौचितीं दिङ्मात्रेण दर्शयित्वा प्रागेव वक्तव्यं किमपि वस्तु मया विस्मृतमिति स्मरणमभिनयाह —

इयं चेति । ते पुरतः इयं च अन्या विडम्बना । पुरतः पूर्वम् । पति-गृहप्रस्थानवेलायामेवेत्यर्थः । अनेन पूर्वमेव वक्तव्यमिदं मया विस्मृतमिति व्यज्यते । अतिकष्टानामनिष्टानां वचनस्यावश्यकत्वात् तेषामहमहमिकया परिस्फुरणमस्य परिहासमात्रफलस्य विस्मरणे हेतुरिति च विडम्बनापदेन

१. 'स्पद' क. घ. पाठः. २. 'म्भ इत्य' ङ. पाठः.

ध्वन्यते। इयमित्यनेन बुद्ध्यारूढं वक्ष्यमाणं विडम्बनास्वरूपं परामृष्टम्। च-शब्दः पूर्वोक्तसमुच्चयार्थः। अन्या पूर्वोक्तेभ्यो विलक्षणा। 'अन्यस्त्वसदृशे भिन्ने' इत्यमरः। विडम्बना हासकारणम्। अस्य हासकारणस्य हासरूपेण कार्येण हेतुना हासकारणोत्पत्तिमेव द्रढयति—वारणराजभार्यया ऊढया त्वया वृद्धोक्षमधिष्ठितं विलोक्य महाजनः स्मेरमुखः भविष्यति। वारणानां राजा वारणराजः। न तु सामान्यवारणः। तस्य भार्या करिणीमतल्लिका। न सामान्यकरिणी तया। पितृगृहावस्थाने बाल्यात् प्रभृति विवाहावसानपर्यन्तमूढया। त्वया तादृशवाहनयोग्यया। वृद्धोक्षं वृद्धश्चासावुक्षा चेति वृद्धोक्षः। स तु कियच्चिरकालजीवीति केनापि न ज्ञायत इत्यर्थः। अत्र वृद्धोक्षपदस्य 'अचतुरा'दिसूत्रेण निपातनात् साधुत्वम्। स्वत एव उक्षा, तत्रापि वृद्धः। पूर्वं तु करिणीश्रेष्ठेति पूर्वोत्तरवाहनयोरत्यन्तवैलक्षण्यमनेन ध्वन्यते। अधिष्ठितम् आरूढं विलोक्य दृष्ट्वा महाजनः ओषधिप्रस्थवास्तव्यो लोकः। तेषामन्यथैव पूर्वं परिचयात् सद्य एव तदन्यथात्वदर्शने परिहासस्यावश्यम्भावात् स्मेरमुखः स्मेरं मुखं यस्य स तथा भविष्यति। यद् यस्माद् ओषधिप्रस्थवास्तव्यो जनः स्मेरमुखो भविष्यति, तस्मात् करिणीवाहनोचितायास्तव वृद्धोक्षाधिरूढत्वरूपं हासकारणं भविष्यत्येवेत्यर्थः॥ ७०॥

**द्वयं गतं सम्प्रति शोचनीयतां**
**समागमप्रार्थनया पिनाकिनः।**
**कला च सा कान्तिमती कलावत-**
**स्त्वमस्य लोकस्य च नेत्रकौमुदी॥ ७१॥**

(प्रकाशिका)

किं बहुना, त्वमीदृग्गुणापि सम्प्रति शोचनीया संवृत्तेत्याह—

**द्वयमिति।** द्वयमित्यादिवाक्येन सामान्येनोपक्रम्य किं च किं

१. 'वनस्त्व' मुद्रितकोशपाठः.

चेत्याकाङ्क्षायां कला चेत्यादिना विशेषेणोपसंहारः । सम्प्रतीति पूर्वं त्वेकमेव शोचनीयतां गतमिति वक्तुं शक्यम्, इदानीं तु द्वयमपीत्यर्थः । समागमप्रार्थनया कृतया क्रियमाणया च । तत्र कृतया कला क्रियमाणया च त्वमित्यर्थः । सेति तच्छब्देन प्रसिद्धतयार्थः परामृश्यते। सा कला या प्रसिद्धेति स्फुटत्वेन प्रतीतेः। दक्षिणावर्तस्तु — 'सेत्यनेन पूर्वकालशोचनीयत्वं सूचितमि'त्याह । सा कला चेति त्वं चेति चान्वयः । विशेषणाभ्यां तुल्यकक्ष्यत्वमुक्तम् । तुल्यकक्ष्यतया च बुद्धिस्थया द्वयमित्युपक्रमः ॥ ७१ ॥

(विवरणम्)

एवम्भूतानि बहूनि वक्तव्यान्यतः परमपि सन्त्येव । किमनेन दुरुपन्यासक्लेशेन सर्वथापि त्वं शोचनीया संवृत्तेत्याह —

द्वयमिति । पिनाकिनः समागमप्रार्थनया सम्प्रति द्वयं शोचनीयतां गतम् । पिनाकिनः पिनाकिशब्दश्रवणमात्रेण तवायं वीराग्रेसरत्वभ्रम इति भावः । यच्चात्र कैश्चित् पिनाकिपदप्रयोगो न दोषप्रकरणोपयोगी, तस्मात् कपालिन इत्येव वक्तव्यमित्युक्तं, तदप्यनेन परिहृतम् । 'अत्रिमुनिलोचनदूषिकायां पीयूषदीधितिरिति ग्रथितोऽनुराग' इत्यत्र पीयूषदीधितिपदप्रयोगवदत्रापि पिनाकिपदप्रयोगोपपत्तेरुक्तत्वात् । समागमः सङ्गमः । समागमाय प्रार्थना समागमप्रार्थना, तया । सम्प्रति इदानीं द्वयं वक्ष्यमाणं वस्तुद्वयं शोचनीयतां शोच्यत्वं गतं प्राप्तम् । किं तर्हि तद् द्वयमित्यत्राह — कलात्मनः कान्तिमती सा कला च अस्य लोकस्य नेत्रकौमुदी त्वं च इति । कलात्मनः कला एव आत्मा स्वरूपं यस्य तस्य चन्द्रस्य । ळळयोरविशेषात् कळात्मन इति च प्रतिभाति । अनेन स्वरूपतो मनोहरत्वम् उक्तम् । कान्तिमतीति प्रशंसायां भूम्नि च मतुप् । मनोहरबहुतरकान्तियुक्तेत्यर्थः । अनेन विशेषतो मनोहरत्वं प्रतिपादितम् । सा लोकप्रसिद्धा । कला षोडशो

१. 'तीयते । द' ङ. पाठः.

भागः । 'कला तु षोडशो भाग' इत्यमरः । अस्य लोकस्य लोकत्रयवासिनो जनस्य । नेत्राणां कौमुदी चन्द्रिका । 'चन्द्रिका कौमुदी'त्यमरः । कौमुदीव दर्शनमात्रेण नेत्रानन्दकारिणीत्यर्थः । अत्रापि त्वमित्यनेन स्वरूपतो रमणीयत्वं, नेत्रकौमुदीत्यनेन विशेषतो रमणीयत्वं च प्रतिपादितम् । अनेनोभयोरपि गुणसाम्यप्रतिपादनेन पूर्वमेव द्वयमिति तुल्यतयोपक्रमस्य बुद्धिस्थेन गुणसाम्येन युक्तत्वमुपपादितम् । इतः पूर्वं चिताभस्मकपालादिमध्यवर्ति शशिकलात्मकं वस्त्वेकमेव शोचनीयतां गतमिति सम्प्रतीत्यनेनोक्तम् । पिनाकिनः समागमप्रार्थनैव द्वयोरपि शोचनीयत्वप्राप्तौ हेतुः । पूर्वकृतया प्रार्थनयैकम्, अन्यत्पुनरिदानीं क्रियमाणयेत्येव भेदः ॥ ७१ ॥

वपुर्विरूपाक्षमलक्ष्यजन्मता
  दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि! मृग्यते
  तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ७२ ॥

(प्रकाशिका)

एतदेवोपपादयति —

वपुरिति । अलक्ष्यं देशकालजात्यादिभिर्जन्म यस्य तस्य भावस्तत्ता । अस्तीति शेषः । वरेषु जामातृषु । यदिति गुणजातं परामृश्यते । बालमृगाक्षीति विरूपाक्षानर्हत्वं द्योत्यते । मृग्यते[2] अर्थात् कन्याबन्धुभिः । तदिति रूपाभिजनसमृद्धिलक्षणसम्पन्नत्वम् । व्यस्तमेकैकमित्यर्थः । त्रिलोचनशब्देन लक्षणशून्यत्वमुक्तम् । 'हानिवदाधिक्यमप्यङ्गानां विकार' इति वचनात् ॥ ७२ ॥

१. 'षणतो' ङ. पाठः. २. 'ते क' क. ग. पाठः.

(विवरणम्)

शोचनीयत्वमेव हेतुभिरुपपादयति —

**वपुरिति** । बालमृगाक्षि ! वरेषु यद् मृग्यते, त्रिलोचने तद् व्यस्तमपि किमस्ति । बालो मृगो बालमृगः । बालमृगस्य अक्षिणी इव अक्षिणी यस्याः सा तथा । अक्ष्णोः शोभाधिक्यप्रतिपादनार्थं बालपदोपादानम् । अनेन विरूपाक्षानर्हत्वं द्योत्यते । वरेषु भर्तृषु । यत् सौन्दर्यादिकं गुणजातम् । मृग्यते अन्विष्यते । वधूभिः तद्बन्धुभिश्चेति शेषः । त्रिलोचने हरे तद् गुणजातं व्यस्तं विभक्तम् एकैकमपि अस्ति किम् ।

"कन्या कामयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मृष्टान्नमितरे जनाः ॥"

इत्यादिवचनानुसारेण सौन्दर्याभिजात्यमहालक्षणलक्षितत्वादीनि यानि गुणजातानि वधूभिस्तद्बन्धुभिश्च विवाहसमयात् प्रागेवान्विष्यन्ते, तेष्वेकमपि किं त्रिलोचने विद्यते । एकस्यैकदेशोऽपि नास्तीत्यर्थः । नास्तित्वमेवोपपादयति — वपुरित्यादिना । वपुः विरूपाक्षं, शरीरं ललाटे लोचनसद्भावाद् विकृतलोचनम् । भवतीति शेषः । अलक्ष्यजन्मता, अस्तीति शेषः । देशकालजात्यादिभिरलक्ष्यं लक्षयितुं ज्ञातुमशक्यं जन्म यस्य तस्य भावस्तत्ता । अयं कस्मिन् देशे जातः, कस्मिन् वा काले, कस्यां वा जातौ, को वास्य पिता, का वा मातेति केनापि न ज्ञायत इत्यर्थः । प्रसिद्धतरब्राह्मणादिदेशजातानामेव हि सम्बन्धयोग्यता । तथा कस्मिन् काले जन्मास्येति वृद्धैरपि न ज्ञायते । अनेन वृद्धेभ्योऽपि वृद्धतरत्वमुक्तम् । तेन च तरुणीरमणीयत्वं निरस्तम् । यथाहुः— 'डिण्डीरपिण्डपरिपाण्डरगण्डमुण्डं चण्डालवत् परिहरन्ति नरं तरुण्यः' इति । 'ऊनषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता । उत्तमं जनयेत् पुत्रम्' इत्यादिवचनविरोधजनिता बहुविधा दोषाश्चानेनैव सूचिताः । तथा जात्या कीदृशोऽय-

मिति निर्णयाभावेऽपि न कैश्चिदपि कन्या दीयते । न च मातापितृगतया जात्यास्यापि जातिः परिच्छेत्तव्या । अस्य मातापित्रोरप्यलक्षितत्वात् । ननु वृद्धत्वादयः सर्वेऽपि दोषा वसुमत्तया परिह्रियन्ते । यथोक्तं —

"स कुलीनः स विद्वांश्च स युवा स विचक्षणः ।
स एव सुभगो यस्तु धनधान्यसमृद्धिमान् ॥"

इति । तस्माद् वसुमत्तायां सत्यां किमन्यैर्गुणैरितीमामाशङ्कां वसुमत्त्वनिरासेन परिहरति — दिगम्बरत्वेन वसु निवेदितमिति । दिगेवाम्बरं यस्य स दिगम्बरः । तस्य भावस्तत्त्वं, तेन । वसु धनम् । 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इत्यमरः । निवेदितं ज्ञापितम् । अनर्घवसना हि धनिनः । निर्धनास्तु जीर्णवसनाः । अस्य तु जीर्णवसनस्याप्यभावेन वसुमत्ता दूरं[2] निरस्ता । तस्मादस्येदृशी धनसम्पत्तिरिति तद्गतं दिगम्बरत्वमेव निवेदयतीति किमस्माकमस्य वसुमत्तानिरासप्रयासेनेति भावः । त्रिलोचनशब्देनात्र लक्षणशून्यत्वमुक्तम् । न्यूनाङ्गत्वस्येवाधिकाङ्गत्वस्यापि सामुद्रिकवेदिभिरङ्गदोषपक्षे निक्षिप्तत्वात् । यथोक्तं — 'हानिवृद्धाविकत्यमप्यङ्गानां विकारः' इति ॥ ७२ ॥

**निवर्तयास्मादसदीप्सितान्मनः**
**क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।**
**अपेक्ष्यते साधुजनेन वैदिकी**
**श्मशानशूलस्य न यूपसत्क्रिया ॥ ७३ ॥**

(प्रकाशिका)

अथ कर्तव्यमवधारयति —

**निवर्तयेति** । तद्विधस्तादृशः । अपेक्ष्यते इष्यते । वैदिकीति सत्क्रियाया अलौकिकत्वद्योतकेन विशेषणेन देव्या अपि विशिष्टोपयोगयोग्यत्वं द्योत्यते । श्मशानशूलस्य वध्यारोपणशूलस्य ॥ ७३ ॥

१. 'त्र' क. ख. ग. पाठः. २. 'रनि' क. ख. ग. पाठः.

(विवरणम्)

यद्यस्यावेवंविधस्तर्हि किं मया कर्तव्यमित्याकाङ्क्षायां कर्तव्यमुपदिश्य वचनमुपसंहरति —

निवर्तयेति । त्वम् अस्माद् असदीप्सिताद् मनः निवर्तय इति । अस्माद् इदानीं क्रियमाणात् । असदीप्सिताद् असतः अकुशलोदर्कादीप्सितादभिलाषात् । मनः चित्तं निवर्तय व्यावृत्तं कुरु । विरूपाक्षविषयमभिलाषं तव चिरकालपरिवर्धितमपि मदुक्तयुक्तिपुरस्सरमस्याकुशलोदर्कत्वं परिनिश्चित्य शनैश्शनैर्निवर्तयेत्यर्थः । मनसो निवर्तनीयत्वमेवं वधूवरयोः परस्परानन्वयमुखेन दर्शयति — तद्विधः क पुण्यलक्षणा त्वं च क इति । तद्विधः तादृशः । पूर्वोक्तसकलदोषाधिष्ठानभूत इत्यर्थः । पुण्यानि शुभानि लक्षणानि चिह्नानि यस्याः सा तथा । सामुद्रिकोक्तसकलवधूलक्षणपरिपूर्णेत्यर्थः । युवयोर्महदन्तरं विद्यते इति भावः । अनन्वयमेव द्रढयति — साधुजनेन वैदिकी यूपसत्क्रिया श्मशानशूलस्य न अपेक्ष्यते इति । साधुजनेन सज्जनेन वैदिकी वेदविहिता । यूपसत्क्रिया यूपो यज्ञस्तम्भः, तद्विषया सत्क्रिया सती क्रिया तक्षणादिरूपो यूपसंस्कारः । श्मशानशूलस्य वध्यारोपणशूलस्य । न अपेक्ष्यते नेष्यते । यथा वैदिकत्वादलौकिकी यूपसत्क्रिया विशिष्टयज्ञोपयोगयोग्ययूपयोग्या, न वध्यारोपणशूलयोग्या, तथा पुण्यलक्षणत्वान्महाभाग्यगुणयोगिनी त्वमपि स्वर्गादिभोगयोग्यतादृशगुणविशिष्टपुरुषयोग्यैव, न श्मशानाश्रयहरयोग्येत्यर्थः । अत्र साधुजनेन नापेक्ष्यत इत्यनेन 'तवानुवृत्तिं न तु कर्तुमुत्सहे' (श्लो. ६५) इति पूर्वोक्तमेवार्थमुपसंहृतवानित्यवसेयम् । अत्र सादृश्यनिमित्ताप्रस्तुतप्रशंसा ॥ ७२ ॥

इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया ।

१. 'य ।' घ. पाठः. २. 'व प' घ. पाठः. ३. 'नानिलय' घ. पाठः.

निकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥

(प्रकाशिका)

देव्या वृत्तान्तमाह —

इतीति । द्विजाताविति तस्य शापाद्यविषयत्वद्योतनात् कोपस्यात्मदाहकत्वं द्योत्यते । प्रवेपमानाधरलक्ष्यकोपयेत्यादिना कामुकस्य मनोरथसिद्धिरुक्ता । निकुञ्चितमाभुग्नम् । तिर्यगाहिते पार्श्वापवृत्ते कृते ॥७४॥

(विवरणम्)

इत्थमपरमार्थब्रह्मचारिणा सपरिहासमभिहिताया देव्या वृत्तमाह —

इतीति । द्विजातौ इति प्रतिकूलवादिनि तया विलोचने तिर्यग् आहिते । द्विजातौ ब्राह्मणे । अनेनास्य वटोः शापाद्ययोग्यत्वं प्रतिपादितम् । यथोक्तं भागवते भगवतैव — 'विप्रं कृतागसमपि नैव द्रुह्यत मामकाः!' (स्क. १०. अ. ६४. श्लो. ४१) इति । अनेनास्य शापाद्यविषयत्वप्रतिपादनेन कोपस्यात्मदाहमात्रफलपर्यवसानं ध्वन्यते । अत एवाधरस्पन्दादीनां बहुविधानां कोपचिह्नानामुद्भवः । इतिशब्देन 'विदितो महेश्वरः' (श्लो. ६५) इत्यादि पूर्वोक्तं हरनिन्दावचनं विवक्षितम् । प्रतिकूलं वदितुं शीलमस्येति तथा । तया पार्वत्या विलोचने आत्मनो नयने । तिर्यगित्याधानक्रियाविशेषणं, तिरश्चीने यथा भवति तथा आहिते विहिते । ब्राह्मणे प्रतिकूलवादिनि सति पार्वती तस्य शापाद्यनर्हत्वादात्मनो नयनद्वयं कोपवशात् तन्मुखान्निवर्त्य तिर्यक्प्रसारितकनीनिकं चकारेत्यर्थः । एतदपि कोपचिह्नं ब्रह्मचारिविषयानादरद्योतकं च । पुनरपि कोपसूचकं क्रियाविशेषणमाह — निकुञ्चितभ्रूलतमिति । निकु-

१. 'वि' मुद्रितकोशपाठः. २. 'त्तमा' ग, घ. पाठः.

ञ्चिते आभुग्ने भूलते प्रशस्ते भ्रुवौ (यस्मिन् कर्मणि तद्) यथा भवति तथा। अनेन भ्रूभङ्गप्रतिपादनेन कामुकस्य मनोरथसिद्धिरुक्ता। कोपस्यानुभावान्तरमप्याह — प्रवेपमानाधरलक्ष्यकोपयेति। प्रवेपमाने प्रकर्षेण वेपमाने कम्पमाने अधरे लक्ष्यः लक्षयितुं शक्यः कोपो यस्यास्तया। पुनरप्यनुभावान्तरमाह — उपान्तलोहिते इति। उपान्ते अपाङ्गे लोहिते रक्ते। अनेन नेत्रविशेषणेनापि कामुकस्य मनोरथस्फूर्तिर्ध्वन्यते॥ ७४॥

उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम्।
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम्॥ ७५॥

(प्रकाशिका)

द्विजातित्वादेव प्रतिवचो देयमित्याह —

उवाचेति। नूनं निश्चये। कथं न वेत्सीत्याह — यत इति। एवमिति द्वेषगर्भम्। उपपादयति — अलोकेति। सामान्यं साधारणम्। मन्दा मूढाः। स्वमान्द्याज्ज्ञातुमशक्येन लोकोत्तरेण महच्चरितेन (दोऽद्वे)-[2]षविषयत्वं व्याप्तमित्यर्थः॥ ७५॥

(विवरणम्)

यद्यपि द्विजातित्वादसौ न शापादिविषयस्तथापि प्रतिवचनविषयो भवत्येवेति मन्वानाया देव्याः प्रतिवचनप्रस्तावमाह —

उवाचेति। एनम् उवाच च। एनं ब्रह्मचारिणम् उवाच च उक्तवती च। न केवलं कोपचिह्नैरेव तन्मनोरथं पूरयामास, अपि तु[3] वाचा चेति चशब्दार्थः।[4] तत्र ब्रह्मचारिणा पूर्वाभिहितानां हरनिन्दावचनानां परिहारोऽपि

१. 'ण च म' ग. घ. पाठः. २. 'त्वं व्यातमि' घ. पाठः. ३. 'तुवाच चे' क. ख. ग. पाठः. ४. 'हि' घ. पाठः.

वक्तव्यः । तत्रादौ यत्तावदुक्तं 'विदितो महेश्वरः' (श्लो. ६५) इति, तदेव परिहरति — त्वं हरं परमार्थतः न वेत्सि नूनमिति । हरं महेश्वरं । परमार्थतः तत्त्वतः न वेत्सि न जानासि । नूनंशब्दो निश्चयार्थः । त्वं हरमापातत एव जानासि, न तु परमार्थत इत्यर्थः । नन्वहं कथं न जानामीत्यत्राह — त्वं माम् एवम् आत्थ यतः इति । मां तत्स्वरूपस्य दुर्ज्ञेयत्वमनवगच्छन्तीं मां प्रतीत्यर्थः । 'अमङ्गलाभ्यासरतिम्' (श्लो. ६५) इत्यादिपूर्वोक्तप्रकारं हरनिन्दावचनमेवंशब्दार्थः । आत्थेति 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (३.४.८४) इति लटि ब्रुव आहादेशः । यतः यस्मात्कारणात् । यस्मान्मामेवमात्थ, तस्मात् त्वं तत्स्वरूपं परमार्थतो न जानासीत्यर्थः । ननु कथमेवम्भूतेन निन्दावचनेन स्वरूपाज्ञानानुमानमित्याशङ्क्य महाजननिन्दायास्तत्स्वरूपाज्ञानेन व्याप्तिं दर्शयति — मन्दाः महात्मनां चरितं द्विषन्ति इति । मन्दाः मूढाः । परमार्थज्ञानहीना इत्यर्थः । महात्मनां महाजनानां चरितं व्यापारं द्विषन्ति । निन्दन्तीत्यर्थः । निन्दायामुपपत्तिमाह — अलोकसामान्यमिति । लोकेषु सामान्यं साधारणं न भवतीत्यलोकसामान्यम् । लोकोत्तरमित्यर्थः । अत एवाह — अचिन्त्यहेतुकमिति । अचिन्त्यः चिन्तयितुमशक्यो हेतुर्यस्य तत्तथा । महतामेवम्भूतस्यानुष्ठानस्य किं प्रयोजनमिति कैश्चिदपि ज्ञातुमशक्यमित्यर्थः । अवाङ्मनसगोचरं महतां चरितम् । तस्मात् तदेकदेशदर्शनेन महाजननिन्दावचनं तत्स्वरूपाज्ञानादेवेत्यर्थः । तस्माद् 'विदितो महेश्वर' इति वचनमनुपपन्नमेवेति भावः ॥ ७५ ॥

विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६ ॥

१ 'किं न ज्ञातुं श' घ पाठः. २ 'मे' मुद्रितकोशपाठः.

(प्रकाशिका)

कस्तर्हि तस्य परमार्थ इत्याह —

**विपदिति । इष्टार्थेनानिष्टपरिहारार्थं मङ्गलाचरणमित्यर्थः । तदुभयमप्यस्य नापेक्षितमित्याह — जगदिति । निराशिषः प्राप्तीच्छारहितस्य । आशा हानोपादानेच्छा, तयोपहतान्तःकरणानां प्रवृत्तिभिर्मङ्गलाचरणरूपाभिरस्मादृशस्य किं प्रयोजनमित्यर्थः । जगच्छरण्यत्वेन विपदभाव उक्तः । निराशिष्ट्वेनावाप्तव्याभाव उक्तः । अनेनामङ्गलाचरणदोषो देवस्य परिहृतः ॥ ७६ ॥**

(विवरणम्)

'यत्पुनरमङ्गलमध्यासिषत' (श्लो. ७५) इत्युक्तं, तदनुपयुक्तमित्याह—

विपदिति । विपत्प्रतीकारपरेण भूतिसमुत्सुकेन वा मङ्गलं निषेव्यते । विपदाम् आपदां प्रतीकारः प्रतिक्रिया तस्मिन् परेण तत्परेण । भूतिः सम्पत् तस्यां समुत्सुकेन सम्यग् उत्सुकेन सश्रद्धेन । वाशब्दो विकल्पे । मङ्गलं सत्कर्म निषेव्यते नितरां सेव्यते । इष्टानिष्टप्राप्तिपरिहारकामो हि मङ्गलाचरणेऽधिकारीत्यर्थः । अस्य तु तदुभयकामनाविरहाद् मङ्गलाचरणं निष्प्रयोजनमेवेत्याह — जगच्छरण्यस्य निराशिषः सतः आभिः आशोपहतात्मवृत्तिभिः किम् इति । जगतां लोकत्रयवासिनां जनानां शरण्यस्य त्वमेव रक्षितेति शरणत्वेन प्राप्तुं योग्यस्य । 'शरणं गृहरक्षित्रोरि'त्यमरः । अनेन विपदभाव उक्तः । आशीरभिलापः । 'अशीरुरगदंष्ट्रायां शुभवाक्याभिलापयोरि'ति वैजयन्ती । निरभिलापस्येत्यर्थः । अनेनावाप्तव्यस्य कस्यचिदप्यभाव उक्तः । सतः एवम्भूतस्य सतः । आभिः जन्मजरामरणादिरूपविपदम्भोधिनिमग्नैर्जनैः क्रियमाणत्वेन दृश्यमानाभिरित्यर्थः । अत एव आशोपहतात्मवृत्तिभिः आशया

१. 'ष्टानि' ग. घ. पाठः. २. 'प्राप्तीच्छार' ग. घ. पाठः. ३. 'निःस्पृहस्य' ङ. पाठः.
४. 'वः । अ' क. ग. पाठः. ५. 'भिरिति । आ' घ. पाठः.

हानोपादानेच्छया उपहता दूषिताः आत्मानः अन्तःकरणानि येषाम्। 'आत्मा देहमनोबुद्धिक्षेत्रज्ञपरमात्मसु' इति भोजः । तेषां वृत्तिभिः मङ्गलाचरणरूपैर्व्यापारैः । किं, न किमपि प्रयोजनमित्यर्थः । निराशस्य भगवतः प्राप्तव्यपरिहार्ययोरभावात् किं मङ्गलाचरणैरिति भावः ॥ ७६ ॥

**अकिञ्चनः सन् प्रभवः स सम्पदां**
**त्रिलोकनाथः पितृसद्मगोचरः ।**
**स भीमरूपः शिव इत्युदीर्यते**
**न सन्ति याथार्थ्यविदः पिनाकिनः ॥ ७७ ॥**

(प्रकाशिका)

**अकिञ्चन इति** । किञ्चन द्रव्यं यस्य नास्ति सोऽकिञ्चनः । सम्पदामिन्द्रादिसम्बन्धिनीनाम् । पितृसद्म गोचरो यस्य । अनेन 'अवस्तुनिर्बन्ध'(श्लो. ६६) इति परिहृतम् ॥ ७७ ॥

(विवरणम्)

अथ परमेश्वरस्यापरिच्छेद्यत्वप्रतिपादनेनावस्तुनिर्बन्धपरत्वमात्मनः परिहरति —

**अकिञ्चन इति** । पिनाकिनः याथार्थ्यविदः न सन्ति । पिनाकिनः वीराग्रेसरस्य हरस्य । नाहमसाराभिनिवेशपरेति भावः । याथार्थ्यं परमार्थं विदन्तीति याथार्थ्यविदः । न सन्ति न भवन्ति । लोकत्रय इति शेषः । त्रैलोक्ये कः पुमान् पिनाकिनं वस्तुत्वावस्तुत्वाभ्यां परिच्छिनत्तीत्यर्थः । 'नायं गुणः कर्म न सन्न चासद्' इत्यादिभागवतवचनादिति भावः । अपरिच्छेद्यत्वमेव प्रपञ्चयति — अकिञ्चन इत्यादिना । अकिञ्चनः सन् सः सम्पदां प्रभव इति उदीर्यते । किञ्चन द्रव्यं यस्य नास्ति सोऽकिञ्चनः । दरिद्र इत्यर्थः । तथाभूतः सन्नपि भवन्नपि । सम्पदाम् इन्द्रादिसम्बद्धानामै-

१ 'दा' क. पाठः.

श्वर्याणाम् । प्रभवः उद्भवस्थानमिति । उदीर्यते, पुराणादिष्विति शेषः । कर्मिणां कर्मफलप्रदो हर इति पुराणादिप्रसिद्धिरनेन वाक्येन दर्शितेत्यवसेयम् । 'दिगम्बरत्वेन निवेदितं वसु' (श्लो. ७२) इत्यप्यनेनैव परिहृतम् । यथा दिगम्बरत्वेन दरिद्रत्वानुमानं, तथा बहुधनप्रदत्वेन धनाढ्यत्वानुमानस्यापि शक्यत्वात् । तस्मादपरिच्छेद्य एव पिनाकीति भावः । 'अलक्तकाङ्कानि पदानि' (श्लो. ६८) इति यदुक्तं तत् परिहरति—त्रिलोकनाथः सः पितृसद्मगोचरः इति । त्रयाणां लोकानां नाथः त्रिलोकनाथः तथाभूतः सन्नपि । सः हरः पितृसद्मगोचर इत्युदीर्यते । पितॄणां सद्म पितृसद्म श्मशानं, स एव गोचरो विषयो यस्य स तथा । श्मशाननिलय इत्यर्थः । त्रिलोकनाथो वा श्मशाननिलयो वा हर इति को वा परिच्छिन्द्यादिति भावः । 'करेण शम्भोः' (श्लो. ६६) इत्यादि यदुक्तं, तन्मनसि निधायाह—भीमरूपः स शिव इति । भीमं भयङ्करं विषधराभरणादिभिः[1] स्वरूपतश्च भयानकं रूपं यस्य, तथाभूतः सन्नपि शिव इत्युदीर्यते शान्तस्वरूप इति कीर्त्यते । मायामात्रनिर्मितं हि भगवतः शरीरम् । तस्माद् भीमरूपो वा शिवो वेति को वा जानीयादिति भावः ॥ ७७ ॥

विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं
न विश्वमूर्तेरवधार्यते वपुः ॥ ७८ ॥

(प्रकाशिका)

विभूषणोद्भासीति । कपालि ब्रह्मशिरःकपालधारि । तदुक्तं—

१. 'भिः रू' क. घ. पाठः.

"जगत्सिसृक्षासमयेषु वेधसां प्रणामलोलानि शिरांसि पा[illegible]ः
जगद्गिरां [illegible]ालशेषतां गतानि तिष्ठन्ति जटासु धूर्जटेः॥"

इति । विश्वमूर्तेः सर्वात्मनः । लौकिकालौकिकयोः सौम्यासौम्ययोर्वा कतरेणालङ्कृतं वपुरिति नियमेन न ज्ञातुं शक्यत इत्यर्थः । अनेन 'त्वमेव तावत् परिचिन्तय' (श्लो. ६७) इत्यादि परिहृतम् ॥ ७८ ॥

(विवरणम्)

अपि च परमेश्वरस्य शरीरावलम्बनमपि भक्तानुग्रहार्थमेव । तस्मादलौकिकेन वा लौकिकेन वा सौम्येन वा असौम्येन वा केनालङ्कारेणालङ्कृतं कीदृशं वा वपुरिति नियमेन न ज्ञातुं शक्यमित्याह

त्रिभूषणेति । विश्वमूर्तेः वपुः न अवधार्यते । विश्वमेव मूर्तिः यस्य तस्य । त्रैलोक्यात्मकस्येत्यर्थः । अनेन प्रपञ्चस्य परमेश्वरविवर्तत्वमुक्तम् । वपुः शरीरम् । नावधार्यते कीदृशमिति वा केनालङ्कृतमिति वा न ज्ञायत इत्यर्थः । अनेन 'वपुर्विरूपाक्षम्' (श्लो. ७२) इत्यपि परिहृतम् । वपुषो विरूपाक्षत्वेनैव व्यवस्थानुपपत्तेरुक्तत्वाद् भूषणानामप्यनियतत्वमाह — विभूषणेत्यादिना । विभूषणोद्भासि पिनद्धभोगि वा स्यात् । विभूषणैः कटकमकुटादिभिरलङ्कारैः उद्भासितुं शोभितुं शीलमस्येति तथा । पिनद्धा बद्धाः भोगिनः सर्पा यस्मिंस्तादृशं वा वपुः स्यात् । वाशब्दो विकल्पे । विभूषणोद्भासित्वेन पिनद्धभोगित्वेन वा न निश्चेतुं शक्यमित्यर्थः । अनेन 'करेण शम्भोः' (श्लो. ६६) इत्याद्येव स्पष्टतया परिहृतमित्यवसेयम् । तथा गजाजिनालम्बि दुकूलधारि वा । गजस्याजिनं चर्म आलम्बितुं परिधातुं शीलमस्येति तथा । दुकूलं धर्तुं शीलमस्येति दुकूलधारि । अलौकिकेन गजाजिनेन वा लौकिकेन दुकूलेन वालङ्कृतं भगवतो वपुरिति तत्त्वतो ज्ञातुं को वा समर्थ

१. 'नालङ्कारेणाल' क. ख. पाठः.

इत्यर्थः । अनेन 'वधूदुकूलं क्व च हंसलक्षणम्' (श्लो. ६७) इत्यादि परिहृतम् । कपा[illegible] अथवा इन्दुशेखरम् । कपालि [illegible] कपालधारि । त[illegible]

> "जगत्सिसृक्षासमयेषु वेधसां प्रणामलोलानि शिरांसि पादयोः ।
> जगद्विरामेषु कपालशेषतां गतानि तिष्ठन्ति जटासु धूर्जटेः ॥"

इति । इन्दुः शेखरः शिरोलङ्कारो यस्य तादृशं वा स्यात् । अनेनानुक्तः कपालधारित्वदोषोऽपि स्वेनैवाशङ्क्य परिहृतो वेदितव्यः ॥ ७८ ॥

**तदङ्गसंसर्गमवाप्य कल्पते**
**ध्रुवं चिताभस्मरजोऽपि शुद्धये ।**
**तथाहि नृत्ताभिनयक्रियाच्युतं**
**विलिप्यते मौलिभिरम्बरौकसाम् ॥ ७९ ॥**

(प्रकाशिका)

तदङ्गेति । कल्पते समर्थं भवति । विलुप्यते ह्रियते । अम्बरौकसां देवानाम् । अनेन 'अयुक्तरूपं किमतः परम्' (श्लो. ६९) इत्यादि परिहृतम् ॥ ७९ ॥

(विवरणम्)

'स्तनद्वयेऽस्मिन् हरिचन्दनाङ्किते' (श्लो. ६९) इत्यादि यदुक्तं, तत् परिहरति —

तदङ्गेति । चिताभस्मरजः अपि तदङ्गसंस्पर्शम् अवाप्य शुद्धये कल्पते ध्रुवम् । चितायां श्मशाने यद् भस्म तस्य रजः । तस्य परमेश्वरस्य अङ्गस्य शरीरस्य संस्पर्शम् अवाप्य संप्राप्य । शुद्धये शुद्धिं कर्तुं कल्पते समर्थं भवति । 'कृपू सामर्थ्ये' इति धातुः । शुद्धिकरं भवतीत्यर्थः । ध्रुवं नात्र सन्देहः । कथं न सन्देहः, अत आह — तथाहि नृत्ताभिनयक्रियाच्यु-

१. 'जो विशु', २. 'त्या', ३. 'लि' मुद्रितकोशपाठः

तम् अम्बरौकसां मौलिभिः विलुप्यते इति। तथाहीत्युपपादकं वाक्यम्। तत्र प्रकारवाची तथाशब्दः शुद्धिसम्पादनसामर्थ्यं पूर्ववाक्योक्तं परामृशति। हिशब्दो हेतौ। 'हि हेताववधारणे' इत्यमरः। तथाभावाद्धेतोरित्यर्थः। नृत्ते नर्तने योऽभिनयः। रामादिस्वरूपमाभिमुख्येन नयतीत्यभिनयः। स एव तत्स्वरूपव्यञ्जकत्वाद् व्यञ्जक इति चोच्यते। 'व्यञ्जकाभिनयौ समौ' इत्यमरः। तस्य क्रिया करणं, तेन च्युतं पतितम्। चिताभस्मरज इति अत्राप्यनुषज्यते। अम्बरमेव ओकः गृहं येषां तेषां देवानाम्। मौलिभिः किरीटैः कर्तृभिः। 'चूडा किरीटं केशाश्च संयता मौलयस्त्रय' इत्यमरः। विलुप्यते ह्रियते। प्रणामसमय इति शेषः। यदि चिताभस्मरजः परमेश्वरशरीरस्पर्शलाभात् पावनं नाभविष्यत्, तर्हि तस्य नृत्तसमये पतितमेतदमराः किरीटैर्नाहरिष्यन्नित्यर्थः। तस्मात् तदङ्गसंसर्गपावनं यच्चिताभस्म स्वत एव प्राप्तुमशक्यत्वाद् दिविषदो नृत्ताभिनयक्रियाच्युतमाकाङ्क्षन्ति, तस्य तदङ्गसंसर्गेणैव प्राप्तौ भविष्यन्त्यां या मम भाग्यसम्पत् तामियत्तया परिच्छेतुं न बृहस्पतेरपि बुद्धिः प्रभवतीति भावः ॥ ७९ ॥

असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा।
करोति पादावुपगम्य[1] मौलिना
विनिद्रमन्दाररजोरुणाङ्गुली ॥ ८० ॥

(प्रकाशिका)

असम्पद इति। 'प्रभिन्नो गर्जितो मत्त' इति सिंहः। उपनम्येति पाठः। अनेन 'इयञ्च तेऽन्या' (श्लो. ७०) इत्यादि परिहृतम् ॥८०॥

१. 'ग' मुद्रितकोशपाठः.

(विवरणम्)

'विलोक्य वृद्धोक्षमधिष्ठितम्' (श्लो. ७०) इत्यादि यदुक्तं, तत् परिहरति —

**असम्पद** इति । वृषा उपगम्य असम्पदः वृषेण गच्छतः तस्य पादौ मौलिना विनिद्रमन्दाररजोरुणाङ्गुली करोति इति । वृषा इन्द्रः । उपगम्य स्वस्थानात् तत्समीपं प्राप्य । अनेन भक्त्यतिशयः सूचितः । सम्पदस्य नास्तीत्यसम्पत्, तस्य । अत एव वृषेण उक्ष्णा वाहनेन गच्छतः तस्य परमेश्वरस्य पादौ चरणौ । मौलिना तत्पादप्रणतेन किरीटेन । विनिद्राणां विकसितानां मन्दाराणां कल्पवृक्षपुष्पाणां रजोभिः रेणुभिररुणा रक्तवर्णा अङ्गुलयो ययोः तादृशौ । करोति विदधाति । वाञ्छितार्थप्रदानां कल्पवृक्षाणां महेन्द्रेण शिरसि धृतानि कुसुमानि यस्य पदाङ्गुलीररुणीकुर्वन्ति, तस्य वृषेण सञ्चरणं न सम्पदभावादिति भावः । किमर्थं तर्हि वृषेण सञ्चरणमिति चोद्यं पुनः 'अलोकसामान्यमचिन्त्यहेतुकम्' (श्लो. ७५) इत्यनेनैव परिहृतमित्यवगन्तव्यम् । परमार्थतस्तु परमेश्वरस्य चरितानि विषयतृष्णा न कर्तव्येति लोकशिक्षार्थमेव । तदुक्तमाचार्यैः —

"महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत् तव वरद! तन्त्रोपकरणम् ।
सुरास्तां तां सिद्धिं दधति तु भवद्भ्रूप्रणिहितां
नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥"

इति । कीदृशस्तर्हि हरापेक्षया महेन्द्र इत्यत्राह — प्रभिन्नदिग्वारणवाहन इति । प्रभिन्नो मत्तः । 'प्रभिन्नो गर्जितो मत्त' इत्यमरः । दिग्वारणो दिग्गजः ऐरावतो वाहनं यस्य स तथा । स्वत एव गजः, तत्रापि दिग्गजः, पुनश्च मत्त इति वृद्धोक्षमत्तदिग्गजयोर्यद्यपि महदन्तरं; तथापि दिग्वारण-

१. 'देवेन्द्रः' ख. घ. पाठः. २. 'पा' घ. पाठः.

वाहनो वृषा वृषवाहनस्य चरणौ नमति। ततो न वृषवाहनत्वं परिहासास्पदम् ॥ ८० ॥

**विवक्षता दोषमपि च्युतात्मना**
**त्वयैकमीशं प्रति साधु भाषितम्।**
**यमामनन्त्यात्मभुवोऽपि कारणं**
**कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥**

(प्रकाशिका)

एवं त्वदुक्तं सर्वमसमीचीनम्। किञ्चित्तु घुणाक्षरन्यायेन समीचीनमापतितमित्याह —

**विवक्षतेति।** च्युतात्मना स्खलितबुद्धिना। एकशब्दस्य सामान्यवाचिनोऽपि विशेषे[1] पर्यवसानं, हेतुरूपोत्तरवाक्यबलात्। कथमिति, त्वदुक्तमलक्ष्यजन्मत्वमेवोपपन्नमित्यर्थः ॥ ८१ ॥

(विवरणम्)

यद्यपि 'विदितो महेश्वरः' (श्लो. ६५) इत्यादि[2] भवदुक्तं वाक्यं सर्वमप्यसमञ्जसं जातम्। किञ्चित्त तत्र घुणाक्षरन्यायेन समञ्जसमापन्नमित्याह —

विवक्षतेति। दोषं विवक्षता अपि त्वया ईशं प्रति एकं साधु भाषितम्। दोषमेव वक्तुमिच्छतापि त्वया परमेश्वरमुद्दिश्य एकं वस्तु सम्यगुक्तम्। दोषविवक्षायामपि गुणवचने हेतुमाह — च्युतात्मनेति। च्युतः स्खलित आत्मा बुद्धिर्यस्य तेन। तव बुद्धिमान्द्यमेवात्र हेतुरिति भावः। एकमेव साधु भाषितमित्यत्र यद्यप्येकशब्दः सामान्यवाची, तथाप्युत्तरवाक्यबलाद्लक्ष्यजन्मत्वे विशेषे पर्यवस्यति। कथमेकस्य वचसः साधुत्वमित्यत्राह — यम् आत्मभुवः अपि कारणमामनन्ति, स कथं लक्ष्यप्रभवः भविष्यति इति।

१. षप ग. घ. पाठः. २. 'दिकं भ' घ. पाठः.

यं परमेश्वरम् आत्मभुवः ब्रह्मणः । यश्चराचरात्मकमिदं विश्वं सृजति, तस्यापीत्यपिशब्दार्थः । कारणं स्रष्टारम् । आमनन्ति । 'म्ना अभ्यासे' इति धातुः । श्रुतयो वदन्तीत्यर्थः । अनेन तदर्थस्यान्यथाभावाशङ्का निरस्ता । लक्ष्यः प्रमाणगोचरः प्रभवो जन्म यस्य तथाविधः । कथं भविष्यति न कथमपीत्यर्थः । जगत्सर्गात् पूर्वमेवोत्पन्नो हि ब्रह्मा जगतस्तदुपज्ञत्वात् । तथाविधस्य ब्रह्मणोऽपि कारणभूतस्य भगवतः प्रभवः केन लक्ष्यते । तस्माद् भवदुक्तमलक्ष्यजन्मत्वमेव तस्योचितम् । तच्च सर्वकारणस्यास्य गुण एवेति भावः ॥ ८१ ॥

**अलं विवादेन यथा श्रुतस्त्वया**
**तथाविधस्तावदशेषमस्तु सः ।**
**ममात्र भावैकरसं मनः स्थितं[1]**
**न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥**

(प्रकाशिका)

अथ पुनरपि तत्प्रतिवचनवैरस्यमाशङ्क्य[2] वाग्विवादं निषेधति[3] —

**अलमिति** । तथाविधस्तथाप्रकारः । तावदवधारणे । तथाविध एवेत्यर्थः । अशेषमिति क्रियाविशेषणम् । साकल्येनास्त्वित्यर्थः । अत्र अस्मिन् । भावोऽभिलाषः, तत्रैकरसं पक्षपाति । कामवृत्तिः कामस्वभाव इत्यर्थः ॥ ८२ ॥

(विवरणम्)

इत्थं देवी तदुक्तं देवगतमखिलमपि दोषं परमार्थनिवेदनेन परिहृत्य पुनरपि तद्वचनोद्योगमाशङ्क्य बहुप्रलापस्य तपोविरोधित्वात् तद्वचनस्य द्वारमेवावृणोति —

**अलमिति** । विवादेन अलम् । विरुद्धो वादो विवादः तेन । अलं

१. 'तं' मुद्रितकोशपाठः. २. 'ङ्क्य विवा' क. पाठः. ३ 'धयति' क. पाठः.

पर्याप्तम् । विवादो मास्त्वित्यर्थः । ननु वादस्य स्वरूपनिर्णयफलत्वात् तस्य चाद्याप्यभावात् कथं वादनिषेधः[1], अत आह — सः त्वया यथा श्रुतः अशेषं तथाविधः तावदस्तु इति । त्वया वेदविदां वरेण । अनेन त्वदुक्तस्य प्रामाण्योपपत्तिरनूदिता । यथा येन प्रकारेण । श्रुतः शास्त्रादिति शेषः । अशेषमिति क्रियाविशेषणम् । साकल्येनास्त्वित्यर्थः । तथाविधः तथाप्रकारः । तावच्छब्दोऽवधारणे । तथाविध एवास्त्वित्यर्थः । परमेश्वरस्त्वदुक्तप्रकार एव साकल्येन भवतु, विवादेनालमिति भावः । ननु यदि भवत्या मदुक्तप्रकारत्वमेव विरूपाक्षस्यानूदितं, तर्हि तत्प्राप्तिमात्रफलात् तपसो विरम्यतामत आह — मम मनः अत्र स्थिरम् इति । अत्र परमेश्वरे स्थिरं निश्चलम् । दोषशतश्रवणैरप्यचञ्चलमित्यर्थः । तत्र हेतुमाह — भावैकरसमिति । भावोऽभिलाषः, तत्रैकरसं पक्षपाति । हरविषयाभिलाषमात्रतत्परमित्यर्थः । भावैकरसं मनः स्थिरमिति पाठः । भावैकरसास्थिरम् इति पाठे भावैकरसम् अत एव स्थिरं चेति विग्रहः । ननु कथमत्यन्तनिन्द्ये जने तवाभिलाषः, अत आह — कामवृत्तिः वचनीयं न ईक्षते इति । कामस्य वृत्तिः कामस्वभाव इत्यर्थः । वचनीयं दोषं नेक्षते न विचिन्तयति ।

"रागाञ्जनमिदमक्ष्णोर्व्यञ्जयति प्रायशो गुणान् विषये ।
दोषाञ्जनं तु दोषाननुभयसक्तिर्व्यनक्ति भूतार्थम् ॥"

इति न्यायादिति भावः ॥ ८२ ॥

**निवार्यतामालि! किमप्ययं[2] वटुः**
**पुनर्विवक्षुः स्फुरितोत्तराधरः ।**
**न केवलं यो महतो विभाषते[3]**
**शृणोति तस्मादपि यः स पापभाक् ॥ ८३ ॥**

१. 'धं विवा' घ. पाठः. २. 'यं', ३. 'पभा' मुद्रितकोशपाठः.

(प्रकाशिका)

एवमुक्तेऽपि तस्मिन् वचनोद्यमं दृष्ट्वा सखीमाह—

निवार्यतामिति। वटुः यथाप्रतिपन्नग्रथनशीलः। 'पट वट ग्रथन' इति चौरादिकाद्धातोः वटयतेरौणादिक उप्रत्ययः। वटुर्वाचाट इत्यर्थः। स्फुरितं स्फुरणं, तदुत्तरं तद्भयिष्ठमधरं यस्य। एतद्विवक्षुत्वे लिङ्गम्। अत्र हेतुः—न केवलमिति। विभाषते परिवदति।

"गुरोर्यत्र परीवादो निन्दा चापि प्रयुज्यते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥"

इति वचनादियमुक्तिः॥ ८३॥

( विवरणम् )

इत्थमनूदितेष्वपि सकलेषु दोषेषु कपटवटौ पुनरपि वचनोद्योगं दृष्ट्वा कोपाविष्टा सखीमाह—

निवार्यतामिति। आलि! असौ वटुः निवार्यताम्। आलि! हे सखि!। 'आलिः सखी वयस्या चे'त्यमरः। असौ दृश्यमानः वटुः यथाप्रतिपन्नार्थग्रथनशीलः। 'पट वट ग्रथन' इति चौरादिकाद्धातोः वटयतेरौणादिक उप्रत्ययः। वाचाट इत्यर्थः। अत एव निवार्यताम् आश्रमाद्बहिर्भागे निस्सार्यताम्। नाहमस्य दर्शनं सहे इति भावः। नन्वसावत्र तिष्ठतु, किमनेन तवेत्यत्राह—पुनः किमपि विवक्षुः इति। पुनः पुनरपि। मया तदुक्तदोषेऽङ्गीकृतेऽपीत्यर्थः। अथवा पूर्वं बहवो दोषा उक्ताः पुनरपीत्यर्थः। विवक्षुः

१. 'न् प्रतिव' ग. घ. ङ. पाठः. २. 'न्थ' ङ. पाठः. ३. 'वा' घ. ङ. पाठः. दोषाङ्गीकारे कृ' क. पाठः.

अधरशब्दस्य अर्शआदित्वं कल्प्यम्।

वक्तुमिच्छुः । ननु विवक्षुत्वे किं प्रमाणमित्यत्राह—स्फुरितोत्तराधर इति । स्फुरितं स्फुरणं, तदुत्तरं तद्भूयिष्ठम् अधरं यस्य स तथा । यस्मादस्याधरः स्फुरति, तस्माद् विवक्षुरेवायमिति भावः । ननु प्रलपत्वसौ वाचालः, को दोष इत्याशङ्क्याह—यः महतः अपभाषते केवलं स न, यः तस्माच्छृणोति सः अपि पापभाग् इति । यः महतः महाजनान् अपभाषते परिवदति । न केवलम् स एव पापभाग्, अपितु यस्तस्माच्छृणोति महाजननिन्दकात् पुरुषाद् महाजननिन्दावचनं शृणोति, सोऽपि पापभाक् । पापं भजतीति पापभाग् । भवतीति शेषः । यथा वक्तुस्तथा श्रोतुरपि पापभाक्त्वमस्त्येवेत्यर्थः ।

"गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥"

(मनु० अ.२. श्लो. २००)

इति वचनादिति भावः । स तस्मादपि पापभागिति वा योजना । वक्त्रपेक्षया श्रोतुः पापाधिक्यमस्तीत्यर्थः । ननु कथं श्रोतुः पापाधिक्यम् । श्रूयताम् । श्रोतरि श्रवणोत्सुके सति वक्ता सविस्तरं वदतीति लोकस्वभावः । नेत्रवक्त्रविकारादिभिः श्रोतुः कोपावगमे सति ततोऽधिकं न वदतीति दुर्जनानां स्वभावः । तस्माच्छ्रोतुरपि वचनस्य कारयितृत्वमवश्यं भवत्येवेति कारयितृत्वश्रोतृत्वजनितयोर्दोषयोः सम्भूय सम्भवाद् दोषाधिक्योपपत्तिः ॥ ८३ ॥

**इतो गमिष्याम्यथवेति वादिनी**
**चचाल सा[1] च स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च तां कृतस्मितः**
**समाललम्बे वृषराजकेतनः ॥ ८४ ॥**

१. 'मप्यव' घ. पाठः. २. 'बाला' मुद्रितकोशपाठः.

(प्रकाशिका)

अत एवाह—

इत इति। चचाल गन्तुमारेभे। स्तनेति गमनरभसात् स्तनच्युतमौञ्जित्रिकावल्कला। समाललम्बे जग्राह। कृतस्मित इत्यनेन प्रकृतस्य प्रकरणार्थस्य नर्मपरत्वमुज्जीवितम्। चशब्दाभ्यां क्रियायौगपद्यलक्षणः समुच्चयालङ्कारः। वृषराजकेतन इत्यनेन भगवत्परिजनपरिच्छदादेरपि तत्राविर्भावो ध्वनितः॥ ८४॥

(विवरणम्)

इत्थं कोपाधिक्याद् ब्राह्मणनिरासाय सखीं नियुक्तवत्याः पुनरीषत्कोपप्रशमे सति 'गन्तव्यं वा ततोऽन्यत' इति स्मृत्यनुसारिणीं देव्याः परमार्थस्मरणपुरस्सरीं प्रवृत्तिमाह—

इत इति। अथवा अहम् इतः गमिष्यामि इति वादिनी सा चचाल च। वृषराजकेतनः स्वरूपम् आस्थाय कृतस्मितः तां समाललम्बे च। अथवेति पक्षान्तरे। तच्चात्र—

"सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम्।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा॥"

इति वचनानुसारेण पूर्वश्लोकोक्तब्राह्मणनिरासापरितोषसूचकम्। इतः अस्मात् प्रदेशाद् गमिष्यामि इति वादिनी। 'बहुलमाभीक्ष्ण्ये' (३. २. ८१) इति णिनिः। इत्थं पुनः पुनर्वदन्तीत्यर्थः। किं ममानेन ब्राह्मणनिरासप्रयासेन। अहमेव परमेश्वरपरिवादपरस्यास्य वटोः सकाशाद् दूरतो गमिष्यामीति पुनः पुनरुक्त्वेत्यर्थः। सा पार्वती चचाल त्वरितं गन्तुमारेभे च। वृषाणां राजा वृषराजः केतनं ध्वजाचिह्नं यस्य स तथा। अनेन भगवत्परिजनपरिच्छदानां पूर्ववदेव तत्राविर्भावो ध्वन्यते। स्वरूपमास्थाय वटुवेषं परित्यज्य आत्मनो रूपमेवलम्ब्येत्यर्थः। कृतं स्मितं मन्दस्मितं येन तथाभूतः सन्। अनेन प्रकृतस्य प्रकरणार्थस्य नर्मपरत्वप्रतिपादनेन कोपप्रशमनं ध्वनितम्। तां पार्वतीं

१. 'त एव॥' ङ. पाठः. २. 'मेवात' घ. पाठः.

समाललम्बे जग्राह च । अत्र चशब्दाभ्यां क्रियायौगपद्यलक्षणः समुच्चयालङ्कारः प्रतिपाद्यते । देव्याः प्रयाणे सरभसत्वमाह — स्तनभिन्नवल्कलेति । स्तनाद् भिन्नं च्युतं वल्कलं यस्याः सा तथा । गमनसंरम्भवशात् स्तनगलितस्तनावरणवल्कलेत्यर्थः ॥ ८४ ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेपं एव पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥

(प्रकाशिका)

एवमतर्कितोपनतदर्शने देवे देव्या वृत्तमाह —

तमिति । सरसं स्वेदार्द्रम् । निक्षेप इति निमित्तसप्तमी । पदं चरणम् । सिन्धुर्नदी । उद्धृतमेवेत्यन्वयः । अत उक्तं — न ययौ न तस्थाविति । गमनायोद्धृतस्य पदस्य पुरतो नियमनाभावाद् यानस्य निवृत्तिः, तत्रैवानवस्थापनाच्च स्थानस्येत्यवसेयम् । अत्र नायिकागतानां सात्त्विकानां सम्भोगभाविनां भावानां पूर्वं 'विवृण्वती शैलसुतापि भावम्' (स. ३. श्लो. ६८) इत्यादिना दर्शितोदयानां पुनः स्वावसरे समुन्मीलनं कृतम् । व्रीलाहर्षादीनां च व्यभिचारिणां तथा नायकगतानां च 'हरस्तु किञ्चित् परिवृत्तधैर्यः' (स. ३. श्लो. ६७) इत्यादिना सूचितानां पुनः 'अभ्यञ्जितहर्षलक्षणः' (स. ५. श्लो. ६२) इत्यादिभिः पदैः सूचनमात्रं कृतम् । एवमेभिरुत्तम्भितपरस्परास्थाबन्धलक्षणः सम्भोगशृङ्गार इतः प्रभृति क्रमात् प्रकर्षपदवीमधिगच्छन्ननुसन्धेयः ॥ ८५ ॥

१. 'पणाय प' मुद्रितकोशपाठः. २. 'स्य पु' क. ग. पाठः. ३. 'स्थाना' क. पाठः. ४. 'डा' ङ. पाठः. ५. 'मत्र क्र' घ. पाठः.

(विवरणम्)

इत्यपरिचितविलोचनते साक्षादेव दृष्टे मनोरथप्रियतमे देव्या वृत्तमाह —

तमिति । शैलाधिराजतनया तं वीक्ष्य न ययौ न तस्थौ । शैलानामधिराजश्चक्रवर्ती, तस्य तनया । तं परमेश्वरं वीक्ष्य साक्षादेवावलोक्य न ययौ । 'इतो गमिष्याम्यथवेति वादिनी चचाल'(श्लो.८४) इति यद् गमनमारब्धं, तन्न कृतवती । प्रियतमावलोकनकौतुकहर्षादिवशादिति शेषः । नापि यथासुखमेव तमवलोकयन्ती तस्थावित्याह — न तस्थाविति । नापि तत्रैवावस्थानं वितेने । लज्जयेति शेषः । ननु कथं गमनावस्थानयोरुभयोरपि युगपदेव निषेधोपपत्तिरत आह — पदं निक्षेपे उद्धृतमेव उद्वहन्तीति । पदं पादम् । निक्षेप इति निमित्तसप्तमी । प्रदेशान्तरे निधानं निक्षेपः । पूर्वं गमनारम्भे प्रदेशान्तरार्पणार्थं यत् पदमुद्धृतं, तत् तथैवोद्वहन्तीत्यर्थः । अत्र पुरतो निधानाभावाद् गमननिषेधः, पूर्वस्थाने निधानाभावात् स्थितिनिषेध इत्यवसेयम् । अनेन स्तम्भो नाम सात्त्विकविकार उक्तः । 'स्तम्भोऽस्मिन् निष्क्रियाङ्गता' (दशरूपकम्. प्रका. ४. श्लो. ५) इति । सात्त्विकान्तराणामप्युत्पत्तिमाह — वेपथुमतीत्यादिना । वेपथुः शरीरकम्पः तद्वती । सरसाङ्गयष्टिः सरसा स्वेदार्द्रा अङ्गयष्टिः प्रशस्तमङ्गं यस्याः सा तथा । न ययौ न तस्थाविति यदुक्तं, तत्रोपमां दर्शयति — मार्गाचलव्यतिकराकुलिता सिन्धुः इव इति । मार्गे प्रवाहमार्गे योऽचलव्यतिकरः नदीपर्यन्तवर्तिना तत्प्रवाहविलुप्तमूलेन अतर्कितपतनेन शैलेन सम्पर्कः, तेनाकुलिता परवशीकृता । सिन्धुः नदीव । सापि[2] हि न गच्छति, नापि गमनोद्यमाद् विरमति । अत्र प्रकरणे नायिकागतानां 'विवृण्वती शैलसुतापि भावम्' इत्यनेन दर्शितोदयानां व्रीलाहर्षादीनां व्यभिचारिणां समुन्मीलनं स्वावसरे कृतम् । 'हरस्तु किञ्चित्परिवृत्तधैर्यः' इत्यादिना दर्शितोदयानां नायकगतानां सात्त्विकानां व्यभिचारिणां च भावा-

१. 'विचयव' ख. घ. पाठः.   २. 'पि न' घ. पाठः.

नाम् 'अव्यञ्जितहर्षलक्षण' इत्यादिना समुन्मीलनं च कृतमिति द्रष्टव्यम् ।
तश्च परस्परानुरागनिश्चयोत्तम्भितः परस्पराख्यानिबन्धनः सम्भोगशृङ्गारः
क्रमादितः परं प्रकर्षपदवीमारोहतीत्यवसेयम् ॥ ८५ ॥

अद्यप्रभृत्यनवमाङ्गि! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥

(प्रकाशिका)

अथ प्रकृतस्य प्रयोज्योपावर्तनविधेः फलयोगं दर्शयति—

अद्येति । तपोभिः क्रीतो दास इत्यन्वयः । अह्नाय शीघ्रम् । क्लम-
क्लेशौ पर्यायौ । फलं जनयन् क्लेशः स्वस्य प्रत्यग्रतां विधत्ते छादयति ।
प्रमुषितो भवतीत्यर्थः ॥ ८६ ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

पञ्चमः सर्गः ।

( विवरणम् )

अथ प्रकृतस्यापि महतः प्रयोज्योपावर्तनविधेस्तदुचितं फलयोगं दर्शयति—

अद्येति । अनवमाङ्गि! अहम् अद्यप्रभृति तव तपोभिः क्रीतः दासः
अस्मि । चन्द्रमौलौ इति वादिनि सा नियमजं क्लमम् अह्नाय उत्ससर्ज ।
अनवमम् उत्कृष्टम् अङ्गं यस्याः तस्याः सम्बुद्धिः अनवमाङ्गीति । अद्यप्र-
भृति एतस्माद् दिवसादारभ्य। अनेन दास्यस्य निरवधिकत्वमुक्तम् । ननु

१. 'वनताङ्गि', २. 'वि' मुद्रितकोशपाठः, ३. 'ज्यस्योपा' क. ख. ग. पाठः.

कुलक्रमागता धनक्रीताश्चेति द्विविधा दासाः। तदुभयाभावे कथं दासत्वम्, अत आह—तपोभिः क्रीत इति। क्रीतः स्वीकृतः। 'डुक्रीञ् द्रव्यविनिमये' इत्यस्माद्धातोः क्तः। अत्र तपसो मूल्यत्वेनोपादानम्। क्रीतदासा हीतरदासापेक्षया नितरामात्मायत्ता भवन्तीत्यभिप्रायः। चन्द्रमौलौ इति वादिनि सति सा। नियमजं नियमो व्रतं तस्माज्जातं नियमजम्। क्लमं क्लेशम् अह्नाय सद्यः। 'द्राग् झटित्यञ्जसाह्नाय' इत्यमरः। उत्ससर्ज अत्याक्षीत्। उक्तमर्थमर्थान्तरन्यासेनोपपादयति—क्लेशः पुनः फलेन नवतां पिधत्ते हि इति। क्लेशः सर्वकर्मानुष्ठानजनिता पीडा। पुनः फलोत्पत्त्यनन्तरम्। फलेन उत्पन्नेनेति शेषः। नवतां प्रत्यग्रतां पिधत्ते आच्छादयति, हिशब्दः प्रसिद्धौ। प्रत्यग्रं हि दुःखं सदैव चेतसि स्फुरति। कालान्तरप्राप्तौ तु प्रमुषितं भवति। फलोत्पत्त्यनन्तरं तु बहुकालप्राप्त्यभावेऽपि न चेतसि स्फुरति। लोकप्रसिद्धश्चायमर्थ इति भावः॥ ८६॥

सर्गः पञ्चम एष वञ्चनपटोर्मायावटोश्चेष्टितै-
रुन्मीलत्कमनीयकोमलरसो लोकोत्तरार्थोदयः।
बुद्धिर्मे पुनराकुला भणितिरप्यत्यन्तहीना तथा-
प्यस्मद्देशिकगौरवादहमिमां व्याख्यामिहाख्यातवान्॥

श्रीमद्भागवतप्रबन्धरचनादक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये।
व्याख्यानेऽत्र कुमारसंम्भवपदार्थालोचनप्रक्रिया-
निष्णाते बत पञ्चमोऽयमगमत् सर्गो निसर्गोज्ज्वलः॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ
कुमारसम्भवविवरणे
**पञ्चमः सर्गः।**




---

१. 'पि निरगात्' घ. पाठः.

| | | | |
|---|---|---|---|
| No. 17—पञ्चरात्रम् (Do.) Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Narayaṇa Bhaṭṭa with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | | 8 | 0 |
| No. 21—बालचरितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivarana of Nârayana Pandita (1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (3rd Kanda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (4th, 5th, & 6th Kandas) | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârayana Pandita (3rd, 4th & 5th Sargas) | 2 | 8 | 0 |

*Apply to:—*

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum*

# शुद्धिपत्रम् ।

| | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| [illegible] | २४ | मवे | मेव |
| ४६ | २२ | स्व | स्वा |
| १७५ | २५ | शास्थ | शावंशस्थ |
| ,, | २६ | वर्जि | बीज |
| ,, | २७ | व्यम् | प्यम् |
| २२६ | १४ | रु | रू |
| २७३ | १४ | हि | हि |